


आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६८

नारदपञ्चरात्रान्तर्गता

# बृहद्ब्रह्मसंहिता ।

एतत्पुस्तकं

वे० शा० रा० रा० वेणेगावकर इत्युपनामकैः शंकरशास्त्रिभिः

संशोधितम् ।

तत्

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३४

खिस्ताब्दाः १९१२



मूल्यं पादोनरूपकद्वयम् ( १८१२ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

---

अस्या नारदपञ्चरात्रान्तर्गतबृहद्ब्रह्मसंहितायाः पुस्तकानि यैः परहितैकपरतया प्रदत्तानि तेषां नामादीनि संज्ञाश्च प्रदर्श्यन्ते ।

( क. ) इति संज्ञितम्—मुम्बापुरनिवासिनां रा. रा. लल्लुभाई शामळ इत्येतेषाम् । अस्य लेखनकालः संवत् १९१३.

( ख. ) इति संज्ञितम्—श्रीवेङ्कटाद्र्युपत्यकास्थश्रीपद्नगरस्थापितायां श्रीवेङ्कटेश्वरनिलय-मुद्राक्षरशालायां मुद्रितम् । अस्य लेखनकालः शालिवाहन-शकाब्दाः १८३२.

## समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।





ॐ तत्सद्ब्रह्मणे नमः ।

नारदपाञ्चरात्रान्तर्गता

# बृहद्ब्रह्मसंहिता ।

---

## तत्र प्रथमोऽध्यायः ।

---

ज्ञानानन्दस्वरूपाय कल्याणगुणराशये । प्रपन्नपारिजाताय सिन्धुजापतये नमः ॥ १ ॥
एकदा मन्दरद्रोण्यामासीनः कमलासनः । द्वयमावर्तयन्मौनी वैष्णवं रूपमुद्वहन् ॥ २ ॥
दिदृक्षवो महाभागा मुनयो नारदादयः । आगताः परया भक्त्या गायन्तो यज्ञपूरुषम् ॥ ३ ॥
साष्टाङ्गं प्रणिपत्याथ संबद्धकरसंपुटाः । विविशुः स्वोचिते देशे प्रसन्ना भर्तुराज्ञया ॥ ४ ॥

ऋषय ऊचुः—

नमः कमलवासाय स्रेष्टा(श्रेष्ठा)यानिष्टनाशिने । पितामहाय शुद्धाय प्रणतज्ञानदायिने ॥
संशयं नो महाभाग पृच्छामो यदि मन्यसे । कोऽन्योऽस्ति संशयच्छेत्ता त्वत्तोऽत्राऽऽश्च-र्यरूपतः ॥ ६ ॥
त्वं कर्ता सर्वलोकानां किं जपन्निह तिष्ठसि । किमिदं धार्यते रूपं किमिदं मौनमा-श्रितम् ॥ ७ ॥

ब्रह्मोवाच—

शृण्वन्तु पुत्रा वचनं मदीयं गोप्यं परं भूतहिताय सत्यम् ।
कर्ता न चाहं जगतो भवन्तो विमोहिता दुस्तरयाऽजया हि ॥ ८ ॥
जिज्ञास्यमस्योद्भवनाशहेतु ब्रह्माद्वितीयं पुरुषाभिधानम् ।
बृहद्गुणैकायनमादिभूतमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥
योऽनन्तशक्तिर्बलपौरुषाद्यः(ढ्यः) सर्वाश्रयः स्वाश्रयकामधेनुः ।
यस्यांशभूता हि वयं भवन्तः प्रवर्तयामः खलु लोकयात्राम् ॥ १० ॥
यश्चेशिता नोऽखिलविक्रियाना( णा )मन्तर्गतो नाधिगतो विकारैः ।
अप्रच्युतानन्तसुखावबोधः स्वाधारभूतः सकलावधिश्च ॥ ११ ॥
न यत्र कालो न समोऽस्य कश्चित्सर्वात्मभूतश्चिदचिच्छरीरः ।
अचिन्त्यलीलः करुणैकशीलः श्रीलालिताङ्घ्रिर्मम योनिभूतः ॥ १२ ॥
इयत्तया यस्य गुणान्विभूतीर्नामानि रूपाणि च चेष्टितानि ।
मनोवचोभ्यामधिगन्तुमीशिरे नाद्यापि सिद्धा मुनयोऽस्मदाद्याः ॥ १३ ॥
यच्छक्तयो विश्वमलं सृजन्ति रक्षन्ति निघ्नन्ति जनेषु विश्यन् ।
तन्नामरूपाकृतिभिः स्वयं च विभिद्य चाऽऽस्ते हि महाविभूतौ ॥ १४ ॥
श्रिया च भूम्या ननु लीलया च समग्रयाऽऽराधितपादपद्मः ।
ऐश्वर्यविद्यायतशौर्यसौभगप्रागल्भ्यकारुण्यदयानिकेतः ॥ १५ ॥

विचित्रदिव्यामितभूषणायुधो विचित्रदिव्यामितवाहनान्वितः ।
विचित्रनित्यामितकेलिकेतनो विमुक्तनित्याश्रितपादपल्वलः ॥ १६ ॥
प्रधानकालोज्ज्वलसत्त्वबोधविभिन्नरूपाचिदनन्यसंश्रयः ।
नित्यादिभेदोक्तचिदेकसंश्रयः स्वाधारभूतोऽद्वयशब्दवेद्यः ॥ १७ ॥
योऽसौ तृतीयः परतन्त्रयोर्द्वयोः स्वतन्त्रसर्वज्ञचिदेकविग्रहः ।
आत्मा च शेषी च सदैकरूपो निरूप्यते येन समस्तरूपम् ॥ १८ ॥
योऽसौ चतुर्विंशतिभिः कलाभिः प्राधानिकीभिर्विरचय्य देहान् ।
समूह्य तानाशु निविश्य देवो वैराजसंज्ञः पुरुषो बभूव ॥ १९ ॥
तस्याहमासं जठराज( ब्ज )कोशादानन्दमूर्तेरखिलस्य हेतुः ।
तस्याभिधानं प्रजपन्निहास्मि तदर्थसंधानपरो मुनिन्द्राः ॥ २० ॥

मनोरर्थो( र्था )नुसन्धानं जपात्कोटिगुणं फलम् । प्रयच्छति महाभागा निरर्थादेष निश्चयः ॥ २१ ॥
न दानैर्न तपोभिश्च न स्वाध्यायैर्न चेष्टिभिः । अनुसंधानतः पुंसां यथाऽऽत्मा परितुष्यति ॥ २२ ॥
कायिकं वाचिक पापं जपादेव विनश्यति । तस्यैवार्थानुसंधानमो(म)न्तरं हरते तमः ॥
बहिर्दीपप्रदानेन ग्र(गृ)हस्य (बाह्यस्य) तमसः क्षयः । मन्दिरस्थेन दीपेन ह्रियते ह्यन्तरं तमः ॥ २४ ॥
नात्र कालविचारोऽस्ति होमतर्पणमार्जनम् । न्यासमुद्राङ्गदेवाश्च विनियोगो न संस्तवः ॥
दासवेश(ष)श्च संस्कारो मुख्यः सिद्धान्तवर्त्मनि । अपेक्षितो मुमुक्षूणामनुसंधानसिद्धये ॥
यथा जलसमुद्धारे गुणः कूपादपेक्षितः । तथाऽर्थभावनं सूत्रं परमात्मार्थसङ्गमे ॥ २७ ॥
अनुसंधानसिध्यर्थं दासवेषो मया धृतः । द्विपरार्धावसानेऽपि मन्ये क्षणमिवायुषम् ॥२८॥
संस्कृतोऽहं समुत्पाद्य विष्णुना प्रभविष्णुना । अधीतवेदोऽपि पुरा मन्त्रराजार्थसिद्धये ॥
असंस्कृताय दातव्यं नैव शुद्धार्थसाधनम् । द्वयाख्यस्य महाभागा भगवाननुशास्ति माम् ॥
स देवो मामुपाहूय सद्यो नाभिसमुद्भवम् । उपादिदेश वेदं मां मनसैव दयानिधिः ॥
ज्ञानराशिः स्मृतो वेदो विद ज्ञान इति स्फुटम् । तत्र त्याज्यानि ग्राह्यानि(णि) ज्ञानानि निवसन्ति च ॥ ३२ ॥
पिता जातस्य बालस्य व्यवहारप्रसिद्धये । प्रत्यक्षाणि घटादीनि बोधयत्यनुपूर्वशः ॥ ३३
अनित्यानि घटादीनि बोधयत्यनुपूर्वशः । संबन्धमात्मनश्चापि तथा संबन्धिनो जनान् ॥
क्रीडनं धावनं वाक्यं रसगन्धविवेचनम् । शास्त्राध्ययनसत्कर्मचातुर्थ्यं(र्यं)शस्त्रधारणम् ॥
पितैवोपदिशत्येनं ज्ञानाज्ञाने तथा ततः । वेदेन बोधिता मह्यं प्रवृत्तिः परमात्मना ॥३६॥
संगोप्य परमं धर्ममात्मानं येन यान्ति हि । नियोजितोऽहं तपसि प्रभुना(णा) विश्वसर्जने ॥ ३७ ॥
तेनैव दृष्टवानीशमात्मस्थमतिपर्यटन् । विज्ञाय तत्प्रासादेन बन्धनं विश्वकर्मणि ॥ ३८ ॥
प्रभुं विज्ञाय(प)यांचक्रे कथं मे निष्कृतिर्भवेत् । मामुवाच चिरं चिन्त्य वत्स भीतिमपाकुरु ॥ ३९ ॥

मत्प्राप्तौ दर्शयिष्यामि विज्ञानं किमपि स्फुटम् । एवं तेऽवसरः साधो मदाज्ञापालनस्य हि ॥ ४० ॥
बीजे वटमिवाऽऽत्मस्थं विश्वं पश्य चराचरम् । तावद्वेदोदितं कर्म ह्यकामस्त्वं समाचर ॥
कर्तृभावं परित्यज्य कर्तारं मामनुस्मर । कृतं मे चापि संबन्धं मा कृथाः पद्मसंभव ॥४१
ज्ञानेनानेन संलिप्तो न भविष्यसि कर्हिचित् । मत्प्राप्तये वदिष्यामि परमैकान्ति(न्त)-लक्षणम् ॥ ४२ ॥
धर्मं धर्मविदां श्रेष्ठ त्वं समाधत्स्व सांप्रतम् । इत्युक्त्वाऽन्तर्दधे विष्णुः सृष्टवांस्त्वन्मुखानहम् ॥ ४४ ॥
चिन्तामकरवं भूयस्तदाज्ञापालने रतः । स्मरणादेव संप्राप्तो वैकुण्ठाद्रमया सह ॥ ४५॥
पीतवासाश्चतुर्बाहुः श्रीवत्सहृदयो हरिः । धृतातपत्रव्यजनो दिव्यवैकुण्ठपार्षदैः ॥ ४६ ॥
जयशब्दैर्नमःशब्दैर्विष्वक्सेनादिभिर्नुतः । तदाऽहं प्रणतस्तस्मै कृतातिथ्याय विष्णवे॥४७
विज्ञापयामास वचो बद्धाञ्जलिपुटः पुरः । भवत्संप्राप्तये देवं परमैकान्तलक्षणम् ॥४८॥
देहि मे दयया धर्मं त्वयैव प्रतिबोधितम् । इति श्रुत्वा रमां विक्ष्य विहस्य च परस्परम्॥
तूष्णीं बभूवतुस्तत्र दम्पती पितरौ प्रभू । अपृच्छमादिपुरुषौ विश्वयोनी श(स)नातनौ॥
वचः श्रुत्वा जहसतुर्ममैवं सांप्रतं च किम् । ॥ ५० ॥

श्रीनाराण उवाच—

उपदिष्टा प्रिया पूर्वं मया कमलसंभव ॥ ५१ ॥
तदहं तेऽभिधास्यामि रहस्यं तु गृहाण तत् । एकदा शेषपर्यङ्के निविष्टो रमयाऽनया ॥
सहस्रमणिमाणिक्यद्युतिप्रद्योतितच्छदे । श्रीवत्सं कौस्तुभं मालामवलोक्य तनौ मम ॥
साभिलाषस्मेरमुखस्पन्दिताधरमुज्जगौ । ॥ ५३ ॥

श्रीरुवाच—

जननाथ मम स्वामिन्सर्वकल्याणभाजन ॥ ५४ ॥
कटाक्षनिर्भिताशेषविश्वलील नमोऽस्तु ते।पीताम्बर घनश्याम नित्यानन्दैकविग्रह॥५५॥
सर्वाधार विशेषस्ते तनौ योऽयं प्रकाशते। श्रीवत्सादिकृतः सोऽयं नास्ति तत्त्वत्रयात्परः॥
तवैकदेशे त्रिगुणा प्रकृतिः पुरुषैः सह । सेवते पादलीलायां वैराजवपुषं हरिम् ॥५७॥
पातालतलमारभ्य सत्यान्तकृतविग्रहम् । तत्रैके पादमूलं ते तामसाः क्रूरबुद्धयः ॥५८॥
जीवाः प्रकृतिसंबद्धा बिलेषु निवसन्ति च । कर्मणस्तारतम्येन दुष्कृतस्य शुभस्य च ॥
शुभस्य तारतम्येन नाभेरूर्ध्वमुपासते । केचित्परिजनास्तत्र भूषणायुधवाहनाः ॥ ६० ॥
भोग्यभोगोपकरणा जीवानां च परस्परम् । अन्तर्यामित्वमेवैषामात्मा भोक्ता च भोजकः
बहिर्यामिणमप्येके सेवन्ते कृतिनो नराः । एवं कर्ममये लोके प्रकृत्या कर्मणा सह॥६२॥
आत्मानं संश्रिताः सर्वे त्वां न जानन्ति केचन । एके तु ज्ञानिनस्तत्त्वत्रययाध्या(था)त्म(त्म्य)वेदिनः ॥ ६३ ॥

---

१ ख. स्वीयत्वे नापि° । २ ख. °वपार° । ३ ख. °कान्तयल° ।

चेतना एव जानन्ति कृपया येऽभिवीक्षिताः । तरू(रु)शैलनदीभूमिलोकधातूत्तरा नराः॥
भोग्यभोक्तृविभागेन संस्थिता मायिके पदे । गतागतं लभन्ते ते नानादुःखौघभाजनाः॥
मायातो न निवर्तन्ते कर्मशृङ्खलयाऽन्विताः । अहंकारविमूढाश्च विषयासक्तमानसाः ॥
आमूलकारणं जीवाः संचरन्ति समावृताः । ये तु मायाविनिर्मुक्ते वैष्णवे परमे पदे ॥
निर्गुणे कालनिर्भिन्ने सदैकाकारसुन्दरे । ज्ञानानन्दमये साक्षाद्दिव्ये नित्यामयोडि-(ज्झि)ते॥ ६८ ॥
अवितर्क्यै मनोग्राह्ये मितिहीने निरञ्जने । हेयातीते सदाभासे स्वप्रकाशे महोदये॥६९॥
निरावरणके नित्ये नित्यशुद्धे निरन्तरे । लोकातीते महालोके निर्मुक्तासत्तरङ्गके॥ ७० ॥
मोक्षैकानिलये शुद्धसत्त्वद्रव्यमये हरेः।प्राकृताः केचिदायान्ति विनिर्धूतमनोमलाः॥७१॥
किं कृतं सुकृतं त्वेतैर्यैस्तु(र्ये तु )देवेह संस्थिताः । एतेषां सुकृतं ब्रूहि दयया पुरुषोत्तम॥
श्रीवत्सो वनमाला च कौस्तुभो मुकुटस्तथा । श्रीवत्सकौस्तुभौ नित्यं हृत्कण्ठनिलये स्थितौ ॥ ७३ ॥
को विशेषोऽनयोः पार्श्वे प्रभारूपेण वतते। शरीरे ते महाराज तिष्ठन्ति ह्यनपायिनः॥७४॥
अहं च भगवान्नाथ हृदयैकनिकेतना । यथा जाताऽस्मि भगवन्नेतन्मह्यं समादिश ॥७५॥

इति श्रीबृहद्ब्रह्मसंहितायां प्रथमपादे ब्रह्मनारदसंवादे संप्रदायप्रवृत्तिकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ ७५ ॥

---

अथ द्वितीयोऽध्यायः ।

---

श्रीनारायण उवाच—

देव्याऽनयाऽहं प्रणयात्प्रसादितो विवित्सया सात्वतदिव्यमूर्तिः ।
अप्राकृतां तां त्रिविधां विसृष्टिं प्रावोचमव्याजमलं निबोध ॥ १ ॥

अप्राकृतमपि द्वेधा चेतनाचेतनं विधे । चेतनं नित्यमुक्तेति द्विविधं परिकीर्तितम् ॥ २ ॥
भूमिशैलतरूद्यानवापिकाकमलाकराः । अचेतनमिदं दिव्यं भूषणास्तरणादिकम् ॥ ३ ॥
अप्राकृतमपि द्रव्यं शुद्धसत्त्वाभिधं च यत् । चेतनद्रव्ययोगेन नानात्वं प्रतिपद्यते ॥ ४ ॥
अचेतनस्यातिशयादचेतनमिहोच्यते । भोगोपकरणं तद्धि समं वै नित्यमुक्तयोः ॥ ५ ॥
अनन्तो गरुडो विष्वक्सेनो नित्याः प्रकीर्तिताः । मायासंबन्धरहिता विरुद्धाचरणोज्झिताः
एकरूपाः सदा देवि परिचर्यापरायणाः। आवयोः पुरतो ह्येते प्रसादामृतकाङ्क्षिणः॥ ७ ॥
यथाऽहं च र(त)थैवेते मदीया नित्यकिंकराः। कदाऽपि ज्ञानसंकोचो नैतेषां ननु विद्यते॥
संप्राप्य प्रकृतेर्योगं ज्ञानसंकोचमाश्रिताः । ममापकारिणो बद्धा भूत्वा मत्कृपया पुनः ॥
संप्राप्याऽऽचार्यशरणमुपायमवगत्य च । मदाज्ञाकारिणो भूत्वा ह्याजीवं प्राकृतां तनुम् ॥
हित्वा मुक्ता भवन्तीति द्विधा तेऽपि प्रकीर्तिताः । केवलाः सेवकाश्चेति केवलास्तनु-वर्जिताः ॥ ११ ॥

---

१ ख. निःलिंते स° ।

सेवका द्विविधा ज्ञेयाः किंकरा रूपसेवकाः । कैंकर्यं गन्धमाल्यादिमार्जनालेपवर्तनम् ॥१२॥
पक्ष्मपातासहप्रेमवीक्षणं रूपसेवनम् । एवमुक्ता महादेवि मम लोके विशन्ति हि॥ १३ ॥
शैलप्रासादहर्म्याणि सभासोपानभूमयः । मणिमण्डपकासारहंससारसपक्षिणः ॥ १४ ॥
सिंहासनायुधस्थानयानभूषणभूतयः । नित्यमुक्ताः केवलाश्च जीवा एव न संशयः ॥१५॥
सर्वे संकुचितज्ञानाः सर्वे सर्वार्थकारिणः । सर्वे समानसंभोगाः श्रीमन्तः परमं पदम्॥१६॥
स्वाभिलाषानुसारेण मत्प्रसादेन भूयसा । भक्त्या मल्लोकमायान्ति भूत्वा सेवानुरूपिणः
कर्मिणां न गतिश्चात्र नानादेवैकसेविनाम् । योगिनामपि नैवास्ति नानासिद्ध्यमिका-
क्षिणाम् ॥ १८ ॥

मामेवं शरणं जाताः सर्वभावेन सिन्धुजे । अतीत्य दुस्तरां मायां केवलाः सेवका हि वा
बहवो मत्पदं प्राप्ताः सेवकाः सेवया मम । गमनागमनैर्मुक्ताः केवलास्तु भवन्ति हि॥२०॥
योऽयं विशेषः सर्वेशि तनौ मे तर्कितस्त्वया । तदहं वक्तुमुत्सहे नैव प्राणप्रियाऽपि हि ॥
रहस्यानां रहस्यं च सारात्सारतरं शुभम् । आत्मा मे जायते तस्य यस्यैतत्प्रवदाम्यहम् ॥
नित्यं कौस्तुभसामीप्ये दृश्यते यत्प्रभाद्वयम् । भक्तौ मे मां समाराध्य प्रभारूपेण संस्थितौ
नाहं वक्तुमलं चात्र विस्तरेण वरानने । निबद्धो धर्मपाशेन दुस्तरेण मयाऽपि हि॥२४ ॥
प्रणिपत्य ततो देवी मामुवाच दयान्विता । त्वमेव भवपान्थानां विश्रामसुखवल्लरी ॥
अज्ञानतिमिरान्धानां त्वमेव परमाञ्जनम् । मायाव्यालग्र(गृ)हीतानां विषवैद्यस्त्वमेव हि
भवदावानलज्वालासंतापकुलितात्मनाम् । त्वमेव करुणासिन्धो निर्वापनसुधासरित् ॥
गोविन्द सुन्दरापाङ्ग पूर्णचन्द्राननद्युते । देहि मे परमं ज्ञानं यदि ते प्रीतिभाजनम् ॥२८॥
तदाऽहं प्रेमसंबद्धः सनद्धः संशयक्षये । विवक्षुरात्मनो धर्मं प्रियायै प्रीतमानसः॥ २९ ॥
भक्ताभ्यां शङ्खचक्राभ्यां याचितोऽहं पुरा प्रिये । आवां विना न वक्त (?) व्यं धर्मं ( ? )
भागवतं प्रभो ॥ ३० ॥

तच्छ्रुत्वा चावदं ताभ्यां वरं सर्वोपकारकम् । भवद्द्वारं प्रभवतु नराणां परमं पदम्॥ ३१ ॥
तस्मात्संकल्पसिद्ध्यर्थे कमले भुजमूलयोः । संधारये महाभागे शङ्खचक्रे सनातने॥३२॥

श्रीरुवाच—

देवदेव दयासिन्धो वद मे विस्तरादिदम् । किमर्थं च कदा ब्रह्मंश्चक्राद्यैरभियाचितः ॥

श्रीनारायण उवाच—

पूर्वकल्पे महामाये त्वया संप्रार्थितो यदा । जीवानां देहदानाय स्वशक्त्याऽकरवं जगत् ॥
संपन्नेषु सपालेषु लोकेषु परमेश्वरि । स्वकर्मफलभोगाय समसज्जन्त भूयशः ॥ ३५ ॥
मुक्तिद्वारं मुखं तेषां पिनद्धमजया हरेः । न ते पश्यन्ति विभ्रान्ताः संसारध्वान्तवर्त्मनि॥
पराङ्मुखा भगवतो विषयस्वादलम्पटाः । तान्विलोक्य महात्मानश्चक्रशङ्खादिहेतयः ॥
कृतवन्तस्तपश्चर्यां जपन्तो मामतन्द्रिताः । नित्यत्वान्नाभिकाङ्क्षन्त इहामुत्रार्थसंपदः ॥
तथाऽपि करुणाविष्टाः परदुःखेन कातराः । साधवो दीनहृदया निसर्गात्तु भवन्ति हि ॥
शुद्धसत्त्वात्मकाः शान्ताः स्वानन्दावृतमानसाः । एकेन वपुषा विष्णोः पादपद्मोपसे-
विनः ॥ ४० ॥

इतरेणैव वपुषा कुर्वन्ति परमं तपः । अति दीर्घेण कालेन प्रसन्नोऽहं समागतः ॥ ४१ ॥

श्रीनारायण उवाच—

किमर्थमिह तप्यध्वे हेतयो मम वल्लभाः । अष्टाक्षरमहाविद्यामुपासीना जितेन्द्रियाः॥४२॥
नित्यानां नावशेषं हि प्राप्यं भोग्यं मनागपि । सत्यसंकल्पकामत्वादुच्यतामवशेषितम् ॥

हेतय ऊचुः—

जय लक्ष्मीपते देव सर्वकारणकारण । नित्यानन्द निजाधार नास्माकमवशेषितम् ॥४४
सदैकरूपास्ते पादपद्मैकरससेवितः(नः) । तथाऽपि जीवान्संलक्ष्य मुह्यामो माययाऽऽवृतान् ॥ ४५ ॥
निस्तारं नैव पश्यामो दुस्तराद्भववारिधेः । वयं कर्तुं समर्था पि(हि) सर्वं मोक्षं विना प्रभो ॥ ४६ ॥
मोक्षो हि ते हस्तगतो नान्यो दवोऽस्य हि प्रभुः । सर्वं कर्तुं समर्थाः स्मः प्रसादात्ते रमापते ॥ ४७ ॥
तवाखिलजनावास मोहिन्या मायया सितम् । जगदेतन्न जानाति मोक्षद्वारं मनागपि ॥
रुदन्ति नरके केचित्केचिद्रोगनिपीडिताः । भ्रमन्ति मरुकान्तारे पिशाचा जलवर्जिताः॥
स्वर्गार्थिनो भवन्त्येके कर्मैव प्रवदन्ति ते । अन्यदेवसमत्वेन त्वामेके समुपासते ॥ ५० ॥
आत्मानं त्वदभेदेन मायया भेदमाश्रिताः । विमुक्तकर्ममार्गास्ते तम एवाभियान्ति हि ॥
त्वमात्मा सर्वजीवानां सखा च त्वं रमापते॥ ५३ ॥
कोऽन्यो मोचयिताऽमीषामुपायं देहि सत्तम ॥ ॥ ५४ ॥
प्रावोचं तदहं देवि चक्रं तेजोमयं महत् । वत्स संचिन्तितं सम्यक्त्वमेवोपायतां व्रज॥५५
आत्मानमनुसंधत्स्व साक्षान्मत्प्रीतिभाजनम् । मया संलालितं पाणौ दीनानामनुकम्पया
आधारः सर्वविद्यानामविद्यां नाशयाम्यहम् । कृत्वा स्वतेजसो भिन्नं त्वामेकं सदृशं मया ॥ ५७ ॥
तेजसा तव तीव्रेण मायैषा मामुपस्थिता । नापि शक्ताऽभिभवितुं दह्यमाना समन्ततः॥
सर्वदा धारयाम्यङ्ग करे सर्वेश्वरोऽप्यहम् । कृत्वा स्वतेजसो भिन्नं त्वामेकं सदृशं मया ॥
त्वां विना न करोम्यङ्ग संहारं दुष्टचेतसाम् । प्रत्यक्षं पश्यतां सम्यक्स्वतन्त्रोऽपि सुदर्शन
खण्डिता धारया ह्येते दैत्यदानवराक्षसाः । यास्यन्ति मत्पदं शुद्धं विना ज्ञानजपाध्वरैः॥
त्वामाह प्रथमा वाणी मम पाणिविभूषण । पवित्रं नेमिं चरणं मुक्तिद्वारं महौजसम् ॥
ये तु संश्रद्धया सम्यक्संताप्य दहने भुजे । दक्षिणे धारयिष्यन्ति स्यात्तेभ्यः परमा गतिः॥
मां प्रकोप्य पदं गन्तुमिच्छन्ति मम वैष्णवम् । तानाशु धारया तेऽहं हत्वा दद्यां परां गतिम् ॥ ६४ ॥
प्रसाद्य मामितो ये तु गन्तुमिच्छन्ति मानवाः । प्रताप्याऽऽचार्यरूपेण नयामि परमां गतिम् ॥ ६५ ॥
सुदर्शन गतिर्नृणां द्विधा संनिश्चिता मया ॥ ६६ ॥

तापेण( न ) धारया वाऽपि सतामप्यसतामथ। गतिर्नास्ति गतिर्नास्ति गतिर्नास्ति त्वया विना ॥ ६७ ॥
त्वं नासि नासि नासीति ह्याचार्येण मया विना। सुदर्शन तवानन्तरूपाणि स्मर सांप्रतम् ॥ ६८ ॥
मदाज्ञयाऽखिलं विश्वमवष्टभ्यावभासासि। प्रकृतस्ते ह्यनन्ताख्यो ममाऽऽधारतया स्थितः॥
संकर्षणो हि भगवान्पा(न्नुपा)स्ते मामतन्द्रितः। त्वद्रूपेण करे स्थित्वा मम संकर्षणात्मक ॥ ७० ॥
अविद्यामशुभं दुष्टान्कर्षसि त्वमशेषतः। शोभनं दर्शनं ज्ञानं प्रयच्छसि मम प्रियान् ॥
अतः सुदर्शनं नाम धारणाद्भुजमूलके। त्वमेव सूर्यरूपेण निरस्य तम उत्कटम् ॥ ७२ ॥
निर्मलं ज्ञानमावे(ध)त्से चाक्षुषं द्वादशात्मकम्। कश्यपाददितेर्भूत्वा कलयाऽऽदित्यसंज्ञया
पापान्धकारनीराणि कर्षसीति निरन्तरम्। यावत्तव करस्प[र्श]तापेनाऽऽतापिता तनुः ॥
कर्मणां नाधिकारोऽस्ति तमश्चण्डालसंगमात्। न देवानां राक्षसानां नराणामपि सत्तम ॥
करस्पर्शं विना तावदधिकारोऽस्ति कर्मणि। क्षेत्रोद्भवानां शशा(सस्या)नां करस्पर्शेन काश्यप ॥ ७६ ॥
संस्कारो जायते लोके स्पृष्टाता(ना)मन्त्यजैरपि। स्वर्गादिसाधनं सर्वं सूर्यरूपस्य ते नृणाम् ॥ ७७ ॥
उदयादुदयं याति लीयन्ते निशिचारिणः। अगत्वा शरणं ये तु मृता विप्रादयो जनाः ॥
प्रेतयोनिगतानां तु तेषामात्मविशुद्धये। वृषोत्सर्गं प्रकुर्वन्ति कृत्वा चक्रेण लाञ्छनम् ॥
तरिष्यन्ति तमस्तेऽपि शिक्षेयं मामकी सुत। अनायुधासो ह्यसुरा न देवा इति वै श्रुतिः॥
इहामुत्र च तेषां वा आसुरो भाव उच्यते। आसुरो विद्यते भावो यावदेषां द्विजन्मनाम् ॥ ८१ ॥
न तावदधिकारोऽस्ति ममाऽऽराधनकर्माणि। नाधिकारोऽर्चने यावन्मोक्षाशा विद्यते कुतः ॥ ८२ ॥
मुक्तिद्वारं त्वमेवाथ सहस्रार निशामय। श्रद्धया धारयिष्यन्ति मम चक्रं सुदर्शनम्॥ ८३ ॥
ज्ञात्वा सर्वपदार्थेषु शुद्धिस्तेषां पदे पदे। शालायां भाजने वस्त्रे गृहोपकरणेषु च॥८४॥
चमसोलूष(ख)ले पीठे पक्वान्ने चक्रमुल्लिखेत्। पशुपुत्रकलत्रेषु यानवाहनभूमिषु ॥ ८५ ॥
सुदर्शन तवाङ्केन प्राकृतत्वं न यास्यति। मामकीयो(नो) जनो लोभान्मोहाद्द्वेषाच्च लज्जया॥
नाङ्कयिष्यति यो मूढस्तस्य नैवास्ति सद्गतिः। अङ्कनं मम चक्रस्य वत्स मत्प्रीतिकारणम्
यथा कलानिधेः सम्यगुदयः क्षीरवारिधेः। अन्तकाले त्वमेवैकः संकर्षणमुखात्पुनः ॥
उत्थायानलरूपेण त्रैलोक्यं प्रतपिष्यसि। संकर्षणांशजो रुद्रस्त्वमेवाम्बकरोचिषा ॥
नूनं संहरसि प्राज्ञ विश्वं विश्वैकभेषज। जाठरानलरूपेण चक्र चारु मदाज्ञया ॥ ९० ॥
जग्धमन्नमशेषाणां क्षणान्नयसि भस्मसात्। कालान्तकस्वरूपेण यमरूपेण देहिनाम् ॥
संशोधयसि दण्डेन सुदर्शन पुनः पुनः। वैष्णवानां प्रपन्नानां हिताय विबुधोत्तम ॥ ९२ ॥
रूपं कृत्वा तवैवैष संस्थितः पन्नगेश्वरः। अम्बरीषेति विख्यातो राजा भुवि भविष्यसि॥

तस्य त्राता मुनेः कोपात्सुदर्शन भविष्यसि । सर्वाणि कालरूपेण यमसूर्यभवात्मना ॥
त्वं दण्डयसि भूतानि न जानन्ति सुदर्शन । ज्ञानं न जायतेऽमीषामन्यरूपेण वैदिकम् ॥
न पदं मम विख्यातं वैष्णवं प्रकृतेः परम् । ज्ञानिनो ये त्वया स्पृष्टा तापादिविधिना रहः
अज्ञाश्च धारया संख्ये यास्यन्ति पदवीं मम । द्वादशारेण तप्तेन वलयत्रयशोभिना ॥
ज्वालाचतुष्कयुक्तेन पूता यान्ति ममाऽऽलयम् । सुदर्शन महाज्वाल सूर्यकोटिसमप्रभ ॥
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय । इति संप्रार्थ(र्थ्य)यो बाहौ गायत्र्या चावधारयेत् ॥ ९९ ॥

स एव वैष्णवो लोके मत्सेवारहितोऽपि हि । अग्ने पुनीहि मे गात्रं सुदर्शनसमाश्रितः ॥
बिभर्मि कवचत्वेन प्रभा गात्रमुपैतु मे । मनुजाद्यवतारेषु लोकसंग्रहकाम्यया ॥ १०१ ॥
धारयिष्ये भुजे दिव्यं वह्निपूतं सुदर्शनम् । बटुको वामनो भूत्वा मेखलाजिनदण्डधृत् ॥
कश्यपादङ्कयित्वाऽङ्कं करिष्ये देवरक्षणम् । वशिष्ठमुनिशार्दूलाद्दिलीपप्रमुखा नृपाः ॥
धारयिष्यन्ति भूलोके महाशस्त्रं सुदर्शनम् । रामो राजीवपत्राक्षो भूत्वा दशरथात्मजः ॥
धृत्वा तप्तायसीं मुद्रां देवकार्यं करिष्यति । परमैकान्तिकं धर्मं वायुपुत्रो महाबलः ॥
प्राप्स्यन्ति जानकीजानेः सुग्रीवाद्यास्तथाऽपरे । विभीषणो महातेजाः प्रह्लादो जनको ध्रुवः ॥ १०६ ॥

यमः शिवः कुमाराश्च भक्ता ये भूतभाविनः । पाञ्चजन्य मया प्रोक्तः प्रद्युम्नांशसमुद्भवः ॥ १०७ ॥

वामे भुजे मुमुक्षूणां स्थित्वा मन्मार्गदो भव । चक्राङ्किता भविष्यन्ति याता यास्यन्ति चापरे ॥ १०८ ॥

मुक्तिद्वारमितो नास्ति विना चक्राङ्कधारणम् । गदापद्मे महावीर्ये भुजयोरुभयोरधः ॥
स्थित्वा मत्प्राप्तिकामानां क्रियतामशुभक्षयः । मया प्रबोधिताः सर्वे बद्धाञ्जलिपुटाः पुरा ॥ ११० ॥

आनन्दनिभृताः प्रोचुर्दासाः स्म इतिवादिनः ॥ १११ ॥

जितं जितं तेऽक्षरबद्धसंश्रय श्रीकान्त वैकुण्ठपतेऽखिलेश्वर ।
प्रपन्नवित्रासविनाशनक्षम क्ष्मालालिताङ्घ्रे भव नो भवाय ॥ ११२ ॥
सुरद्रुमोद्यानविहारशालिने नवाम्बुदश्यामरुचे मधुद्विषे ।
कदम्बकिञ्जल्कपिशङ्गवाससे नमो नमस्ते भव नो भवाय ॥ ११३ ॥
भुजङ्गराजाङ्करमाङ्कशाधि(यि)ने सुगन्धिपङ्काङ्कितचारुवक्षसे ।
आपीनदोर्दण्डविखण्डितारये नमो नमस्ते भव नो भवाय ॥ ११४ ॥
विहङ्गराजाङ्कनिरूपिताङ्घ्रये समस्तवेदोदितचारुकीर्तये ।
मन्दस्मितासारनिवर्तितार्तये नमो नमस्ते भव नो भवाय ॥ ११५ ॥
अगण्यपुण्यैकगृहीतभा(ना)म्ने धाम्ने गुणानां महतां महीयसे ।
भक्तार्पितोरस्थलपुष्पदाम्ने नमो नमस्ते भव नो भवाय ॥ ११६ ॥

---

१ ख. आजानुदो° ।

व्यग्राय संम्य(न्य)स्तभरैकवीक्षणेऽनुपायतापन्नजनोपकारिणे ।
दुष्टेषु दावानलचण्डतो(रो)चिषे नमो नमस्ते भव नो भवाय ॥ ११७ ॥
गाम्भीर्यसौन्दर्यदयैकसिन्धवे कारुण्यवात्सल्यगुणौघवार्धये ।
माङ्गल्यशौर्योर्जितदिव्यकीर्तये नमो नमस्ते भव नो भवाय ॥ ११८ ॥
विश्वोद्भवस्थाननिरोधकारिणे विहारिणे कार्यविहारभूमये ।
अनेकरूपाकृतिनामवैभव नमो नमस्ते भव नो भवाय ॥ ११९ ॥

इति चक्रकृतं स्तोत्रं श्रुत्वा प्रीतोऽखिलेश्वरि । अददामभयं ह्येतं पठतामुत्तमं स्तवम् ॥
धृत्वा मे चक्रचिह्नं ये स्तवेनानेन वैष्णवाः । स्तोष्यन्ति वितरिष्येऽहं तेषामाशु मनोरथम् ॥ १२१ ॥
अतः काते(न्ते) त्वया कार्या श्रद्धा मच्चक्रधारणे । संधारय मुमुक्षूणां प्रपन्नानां ममाऽऽज्ञया ॥ १२२ ॥
ओमित्युवाच सा देवी चक्रशङ्खौ भुजद्वये । प्रयोजनान्तरं हित्वा मन्त्रराजमथो दधौ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीता नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्टयङ्काः—१९८

---

अथ तृतीयोऽध्यायः ।

---

श्रीरुवाच—

देवदेव जगन्नाथ रहस्यं मे प्रकाशय । दासभावं प्रपन्नाऽस्मि स्वामी त्वं मे दयानिधे ॥१

श्रीनारायण उवाच—

एककल्पान्तरे देवि भगवत्तत्त्वकाम्यया । तपश्चकार विप्रर्षिः श्रीवत्साख्यो महामनाः ॥२
यत्र नारायणो देवो नरेण सहितोऽधुना । आस्थाय परमं योगमाकल्पान्तमिहास्ति वै॥
वैष्णवाख्ये महाक्षेत्रे द्राविडेषु पुराऽभवत् । विष्णुधर्मेति विख्यातो राजा परपुरंजयः ॥
धार्मिकः परमोदारो विनिवृत्तमनोमलः । स च जिज्ञासया विष्णोश्चकार नियमं नृपः॥५॥
त्यक्ष्ये कलेवरं नूनं न पश्यामि जनार्दनम् । वासुदेवं रमाकान्तं सर्वशेषिणमच्युतम् ॥६॥
समागताः प्रबोधाय सर्वेऽत्र पुरवासिनः । श्रीवत्साख्योऽपि तं श्रुत्वा संप्राप्तस्तुल्यवेदनः॥

श्रीवत्स उवाच—

राजन्कथं निपतितो भूमौ दर्भमयासने । किं चिकीर्षसि सत्यं नो वद धर्मविदुत्तम ॥ ८

विष्णुधर्मोवाच—

अवश्यं यत्तु कर्तव्यं तत्तु न क्रियते नरैः । तदहं कर्तुमिच्छामि नानयं चोपयातु मे ॥ ९
धर्मवृक्षस्य देहस्य फलमेतद्विनिश्चितम् । यदनेन जगन्नाथः परमात्माऽवलोक्यते ॥ १०

---

१ ख. °णे शौर्य° ।

अविज्ञातस्य यस्यैव प्रपत्त्यै नियमो मतः । तमविज्ञाय देहेऽस्मिन्रतेरुत्पादनेन किम्॥११
स्वरूपमात्मनो लक्ष्यं ब्रह्माख्यं तद्विना मनाक् । सुखं न विद्यते ब्रह्मन्देहभूतस्य मे क्वचित्॥
यदिदं दृश्यते लोके श्रूयते द्विजसत्तम । परिणामस्वभावा हि प्रकृतिर्बहुरूपिणी ॥ १३॥
विद्युदभ्रानलज्वाला नैकरूपा विभाव्यते । तथा सर्वेषु भावेषु दृश्यमानेषु पश्यताम्॥१४॥
यदाधारः स्फुरत्येष संसारः क्षणभङ्गुरः । स चाऽऽधारो न दृष्टश्चेद्वृथा मज्जीवनेन किम्
यस्य भासा विभातीदं यदन्यैर्नावभासते । तदविज्ञातमेवं चेद्वृथा मज्जीवितेन किम् ॥
सर्वस्यावधिभूतं यत्प्राप्यमन्ते यदेव हि । तदप्राप्यमिह प्राप्यं किं मे प्राप्तं द्विजोत्तम॥१७॥
यस्या(स्य चाऽऽ)नन्दमात्राभिरुपजीवन्ति वै प्रजाः । तमानन्दमसंप्राप्य वृथा मज्जीवि-
तेन किम् ॥ १८ ॥
यस्यैश्वर्येण विधृतं जगदेतच्चराचरम् । तस्यैश्वर्यमविज्ञाय किं वृथा जीवितेन मे ॥१९॥
यस्य पादजलं पुण्यं त्रिजगत्प्रपुनाति हि । तदेकसंश्रयं हित्वा किं वृथा जीवितेन मे ॥
यस्य दास्यैकनिरता ब्रह्मरुद्रादयोऽमराः । तस्य दास्यं परित्यज्य किं वृथा जीवितेन मे ॥
वेदशास्त्रपुराणार्थो न दृष्टार्थाय कल्पते । अदृष्टमात्मनस्तत्त्वं विदित्वा तु सुखी भवेत् ॥
चक्षुषोर्हि फलं साक्षाद्वैकुण्ठस्यावलोकनम् । श्रवणं तस्य वचसां फलं श्रोत्रस्य मानद ॥
अवघ्राणं नसस्तस्य फलं तच्चरणाब्जयोः । तदुच्छिष्टरसास्वादो रसनायाः फलं त्विदम् ॥
तदङ्गस्पर्शमाधुर्यपरमानन्दसंगमः । त्वचः फलं महाभाग तद्विना जीवितेन किम् ॥२५॥
प्राणेन्द्रियमनोदेहानात्मानमपि योऽनिशम् । संजीवयति तं हित्वा वद किं जीवितेन मे ॥
त्रिपाद्विभूतिर्यो देवः कन्दर्पायुतसुन्दरः । सर्वशेषी रमानाथस्तं हित्वा जीवितेन किम् ॥

यस्याक्षिपक्ष्मपरिवर्तितविश्वमेतदाविर्बभूव विविधाभिधमादिसर्गे ।
योऽन्तर्निवेशयति कूर्म इवाङ्गवर्गमस्याङ्गसङ्गमपहाय किमन्यसङ्गैः ॥ २८ ॥

श्रीवत्सवेदसिद्धान्त उपाश्रावि गुरोर्मुखात् । प्राप्यो भाग्यो हरिर्नान्यः सत्यं सत्यं पुनः पुनः॥
तमुत्सृज्य गतं चेतः कृपणः सोऽभिधीयते । नान्यस्मिन्साधनं देहे प्राप्तये परमात्मनः ॥
उपायं नैव पश्यामि येन पश्यामि केशवम् । अतो विनिश्चितं वत्स शरीरस्यैव मोक्षणम्
नृपस्य वचनं श्रुत्वा श्रीवत्सोऽपि महामनाः । उवाच वचनं चारु नृपतेः प्राणपोषणम् ॥

श्रीवत्स उवाच—

एवमेव महाबाहो मयाऽपि सुदृढीकृतम् । प्राणान्न धारयिष्येऽहमनालोच्य महेश्वरम् ॥
तदा मामभवद्वाणी राजन्काऽप्यशरीरिणी । धर्ममूलमिमं देहं द्रुतं न त्यक्तुमर्हसि॥ ३४ ॥
इतो गच्छ मम क्षेत्रं नरनारायणाश्रमम् । उपायं गदिता तेऽद्य स देवो दीनवत्सलः ॥
यावद्गन्तुं मनश्चक्रे तावदेव श्रुतं मया । विष्णुधर्मा तनुं त्यक्तुमुदितः केन हेतुना॥ ३६ ॥
तद्द्रष्टुं चाऽऽगतश्चात्र राजन्नाश्रुत्य ते वचः । आवयोस्तु व्यथैवैका निश्चिता जगतीपते॥
बहुभिर्बोधितोऽहं वै साधनैरात्मदर्शनैः । न तैरहं महीपाल दृष्टवानीश्वरं हरिम् ॥ ३८ ॥
सांख्यैः संबोधितः सम्यक्तत्त्वनिर्णयवर्त्मना । विज्ञातोऽयं मया ह्यात्मा पञ्चविंशो य
ईरितः ॥ ३९ ॥
नैव प्राप्तं परं स्वस्मात्षड्विंषं(शं) पुरुषं नृप । यदाधारमिदं सर्वं सदसच्छब्दशाब्दितम् ॥

ततोऽहं चिन्तयन्नासं चिदात्मा न करोति हि। प्रकृतिर्जडरूपेयं कुतः सृष्टिरियं मता ॥
यत्संयोगात्पुमानेष प्राकृतं भावमाश्रितः। अस्वतन्त्रो ह्ययं तस्मात्कर्ता कोऽस्य विधीयते॥
कर्तृत्वं प्रकृतेर्नैव सा जडा पुरुषाश्रिता। उभयोः परतन्त्रत्वात्कर्तृत्वं नोपपद्यते ॥
योऽयं प्रकृतिसंयोगात्कर्ता स्यात्तादृशोऽस्म्यहम्। विश्वकर्ता कथं न स्यामिति संकल्पितं मया ॥ ४४ ॥
विज्ञातः प्रकृतेर्भिन्नः सामर्थ्यं तस्य नेक्ष्यते। अतः प्रकृतिहीनोऽपि विश्वकर्ता न शस्यते ॥ ४५ ॥
एतत्संशयविच्छित्त्यै शरणं कं व्रजाम्यहम्। नास्ति मत्तः परः कोऽपि मद्विजातीयरूपवान् ॥ ४६ ॥
एवं संतप्यमानस्य चिरकालं विपश्चितः। उपस्थितः समभवत्संतापात्पुरुषः परः ॥ ४७॥
स चाऽऽह मामवनतं शोचमानं सुदारुणम्। किं शोचसि महाभाग परिग्लानमुखाम्बुजः ॥ ४८ ॥
एवमुक्तोऽहमानस्य(म्य) बभाषे विधृताञ्जलिः। नाहं पश्ये त्रिभुवने मम संदेहनाशकम्

पुरुष उवाच—

जानेऽहं नरशार्दूल ह्यनुक्तोऽपि तवेङ्गितम्। योगप्रभावात्सिद्धोऽहं सामर्थ्यं त्वमिहेच्छसि ॥ ५० ॥
पलाशवत्पुष्करस्य निर्लिप्तः पुरुषो ह्ययम्। योगेनैवाऽऽत्मनः सिद्धिं यथा विन्दति तच्छृणु ॥ ५१ ॥
योगप्रभावेन्न(ण)हरिः संसृते सचराचरम्। पालयत्येष योगेन संहरत्येष वै यथा ॥
योगैश्वर्यमिदं सर्वं दृश्यते श्रूयते च यत्। चित्तवृत्तिनिरोधो हि योगशब्देन चोच्यते ॥
सर्वज्ञत्वं जनेशत्वं सर्वगत्वं स्मृतिस्तथा। सर्वं भवति योगेन नास्ति योगात्परः प्रभुः ॥
निधयो नव योगेन योगेनैवाष्ट सिद्धयः। योगेनैवास्य तिष्ठन्ति पितरो मुनयः सुराः ॥
योगेन पञ्च भूतानि प्रधानं पुरुषं तथा। अत्येति सर्वभूतानि योगस्थो नात्र संशयः ॥
योगोपायेन विप्रर्षे सर्वैश्वर्यधरो भव। कर्ता समस्तविश्वस्य संकल्पेन भविष्यसि ॥५७॥
तेनोप्य( प )शिक्षितं योगमुपातिष्ठमतन्द्रितः। यमादिभिर्योगपथैः सुसंपन्नो निरामयः ॥
अविदं तेन योगेन सर्वेषामन्तरं गतम्। कृतकृत्यं तदाऽऽत्मानं मन्ये निरुपमं प्रभुम्॥५९॥
सर्वेभ्यो विसजातीयस्वभावबलपौरुषः। करोमि निजसंकल्पसिद्धिमेतदचिन्तयम् ॥ ६०
संकल्पात्ससृजे दिव्यं महाकाशे मनोहरम्। लोकमत्यूर्जिताकारमनेकाद्भुतदर्शनम् ॥ ६१
नानावर्णमणिव्रातसंनिबद्धमहीतलम्। मन्दारपारिजातादितरुला(रा)जिविराजितम् ॥
विचित्रगिरिवर्याग्रसंलिप्तगगनाङ्गणम्। स्फुरत्कह्लारकासारविहारिवनिताजनम् ॥६३॥
स्फुरच्चामीकरोत्तुङ्गगोपुरोद्धृतकेतुकम्। सौधाग्रा(ग्रो)दग्र( ग्र )माणिक्यचर्चितध्वान्तदिक्तटम् ॥ ६४ ॥

---

१ ख °रिसद्धातुसं°।

वितानपटसंतान [ नि ] वारितदिवाकरम् । कर्पूरक्षोदसंचारचारुचन्द्रोदयश्रियम् ॥६५॥
मुक्तावलिलसद्द्वारसुवर्णकलशोज्ज्वलम् । नीलाश्मवेद(दि)कारूढजलयन्त्रमहोत्सवम् ॥
विहारवापिकापद्मभिलिन्दमुखरीकृतम् । हंसकारण्डवारावविमुग्धतटिनीतटम् ॥ ६७ ॥
मत्तमातङ्गसंचारदानार्द्रीकृतभूतलम् । पाटीरनीरसंसेकप्रमोदितमहाजनम् ॥ ६८ ॥
गन्धर्वगीतसंगीतसंचारविलसत्सभम् । मृदङ्गमधुरक्वणविबोधितझषध्वजम् ॥ ६९ ॥
तस्मिन्पुरे समासीनो राजन्काञ्चनविष्टरे । संकल्पादसृजं तत्र ग्रहनक्षत्रतारकाः ॥ ७० ॥
न शीतवातवर्षादिभयं तत्र मनागपि । हानिर्मृत्युर्भनोग्लानिर्नैव योगबलादभूत् ॥७१॥
यद्यदिच्छामि तत्सर्वं सुसंपन्नं भवेदिह । ईश्वरं नापरं मेने कर्ताऽहमिति भूमिप॥ ७२ ॥
न मत्तोऽन्यः परः कोऽपि वर्तते न भविष्यति । न मे कालः प्रभविता सत्यं सत्यं न संशयः
तत्राहमसृजं कान्तामरविन्दविलोचनाम् । तया सह विमानेषु विषयान्बुभुजे बहून्॥७४॥
न जरा न च मे रोगो न पौरुषबलक्षयः । कन्दर्प इव राजेन्द्र रूपेणाप्रतिमोऽभव [म्]
संपाद्य पुत्रपौत्रांश्च तत्तत्संबन्धिबान्धवान् । सहस्रशः कोटिशश्च बभौ धातेव चापरः ॥
चतुर्युगसहस्राणां दिनमेकं प्रजापतेः । संकल्पोऽयं भगवतः संनिवृत्तस्तदा नृप ॥ ७७ ॥
मया कृतोऽयं संकल्पः स च नाशमुपेयिवान् । न तत्र नगरं नारी न पुत्राः सुहृदो न च
अहमेवैक एवाऽऽसं तस्मिन्नाकाशमण्डले । केन मे नाशितो नूनं संकल्पो योगभावजः
कुत्राऽऽस्ते स पुमान्नूनं योगमैश्वर्यमत्यगात् । दृश्यमानेषु भूतेषु संवेष्टुं च प्रविष्टवान् ॥
पृथिवीतो विनिर्गत्य वारिरूपमुपेत्य च । प्रविश्य चात्यगां वारि नापश्यं पुरुषं परम् ॥
विनिर्गतस्ततस्तेजः प्रविश्याहं तदाकृतिः । अत्यगां तैजसं रूपं नापश्यं पुरुषं परम् ॥
एवं वायुमथाऽऽकाशमहंकारं महत्तमम् । प्रधानमत्यगां राजन्नापश्यं पुरुषं परम् ॥८३॥
असंख्याता मया दृष्टा सृष्टिस्तत्त्वेषु पार्थिव । तेषु योगबलेनाहं न लिप्तः क इवाम्बुजम्॥
यदाऽहं प्रकृतेरूर्ध्वं गमनायाऽऽदधे मनः । आत्मानमेव चापश्यं नापश्यं पुरुषं परम्॥८५॥
पुरुषो न परश्चात इति मे नैवभासते । किं तु योगे गतिर्नास्ति न ज्ञानं च पौरुषम् ॥
अनुमानादिना ज्ञातः पुरुषः पुरुषात्परः । कुतो न भासते कीदृग्रूप[व]त्त्वगुणात्मकः ॥
योगादीनां गतिश्चैष आत्माऽप्यैश्वर्यमेव वा । अतः परं गतिर्नास्ति निश्चयो हि मया कृतः
एवं चिन्तव(य)ते मह्यं वागाहाम्बरचारिणी । भक्त्याऽहमेकया ग्राह्यो न ग्राह्यः कोटि-
साधनैः ॥ ८९ ॥
तत्त्वातिक्रमणेनैव ज्ञानेनाधिगतस्त्वया । स एष आत्मा शेषो मे नित्यो मायावधिः स्मृतः
पुंस्प्रकृत्योर्मुनिश्रेष्ठ एकोऽहमवधिः स्मृतः । सोऽहं ना[न]न्यभावेन विना गम्यः कदाचन
परमैकान्तिकं भावं संपादय गुरोः कुलात् । उपायान्तरमुत्सृज्य नाहं लभ्योऽन्यसाधनैः ॥
द्राविडेषु जनिं लब्ध्वा मद्धर्मो यत्र तिष्ठति । प्रायो भक्ता भवन्तीह मम पादाम्बु-
सेवनात् ॥ ९३ ॥
एतदन्वेषणेनैव मत्प्राप्तौ सततं भवान् । महत्त्वं वदति प्राज्ञस्तस्माद्धत्सो मया कृतः॥९४॥

---

१ ख. न श्चभात्तत॰ । २ ख. नाऽऽक्षीभज्ञा॰ ।

शोभया परया युक्तस्तस्माच्छ्रीवत्ससंज्ञितः । नरनारायणौ प्राप्य मद्विभूती सनातनौ ॥
दीक्षां भागवतीं प्राप्य संताप्य तनुमात्मनः । अनुसंधानकर्ता मे मामुपैष्यसि मा शुचः ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरितं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ २९४ ॥

---

अथ चतुर्थोऽध्यायः ।

---

श्रीवत्स उवाच—

स चाहमवतीर्णोऽस्मि श्रीवत्साख्यो नृपोत्तम । स्मृतिर्मे नापसंरुद्धा योगेशचरणाश्रयात् ॥
तत्राहं गन्तुकामोऽस्मि यदि ते रोचते वचः । नारायणाश्रमं यामो वयमद्य नरेश्वर ॥२॥

श्रीराजोवाच—

मा चिरं कुरु विप्रर्षे कुत्र नारायणाश्रमः । गच्छावः पुण्डरीकाक्षदिव्यदर्शनकाङ्क्षिणौ ॥

श्रीवत्स उवाच—

राजन्पश्य प्रभावं मे योगस्य नयनाम्बुजे । पिधेहि पाणिना दीर्घं राज्याश्यां(शां)विनिवर्तय ॥ ४ ॥
एवमुक्तो निवर्त्याऽऽशु प्रजाः पुत्रा[त्रे] निवेश्य सः । राज्यं तृणमिव त्यक्त्वाऽपिदधे लोचनद्वयम् ॥ ५ ॥
श्रीवत्सो दर्शयामास तं गिरिं गन्धमादनम् । मुहूर्तकेन कमले योगाभ्यासप्रभावतः ॥६॥

श्रीवत्स उवाच—

मु[illegible]तां नयनद्वारं मुक्तिद्वारं विलोकय । सोपानमिव वैकुण्ठसौधस्यैनां सरिद्वराम् ॥७॥
विष्णुधर्मा तदोन्मुच्य नरनारायणाश्रमम् । अपश्यन्नयनाम्भोजमवाप परमोत्सवम् ॥८॥
यत्र चालकनन्दाख्या नदी कैवल्यवाहिनी । तत्रवारिचयाकारः पावनाय हुताशनः ॥
आस्ते विज्ञानदा धारा कूर्मस्य कमलोद्भवे । गरुडोऽपि शिलारूपी सेवते चरणाम्बुजम् ॥ १० ॥

धर्मात्मजं नरसखं जगदेकवन्द्यं नारायणं जलजलोचनमप्रमेयम् ।
सिद्धैरुपाश्रितमुदारगुणैकराशिं जीमूतमेदुरतनुं पुरुषं ददर्श ॥ ११ ॥
पद्मासनं वरकमण्डलुमुग्धहस्तमेणाजिनोत्तरपटं विलसत्त्रिदण्डम् ।
शुद्धोपवीतिनमुरःस्थलकस्रमालमाबद्धशेखरशिखं पुरुषं ददर्श ॥ १२ ॥
प्राणावरोधतरुभूततनुं प्रपन्नं तत्त्वं परं परमया दयया दिशन्तम् ।
कन्दर्क(र्प)गर्वहरखण्डितरोषदर्पं सिद्धान्तशान्तहृदयं पुरुषं ददर्श ॥ १३ ॥
सामादिवेदपरिगीतचरित्रवृन्दमानन्दसान्द्रनयनक्षतविश्वतापम् ।
सद्ब्रह्मविश्वदयया तपसि प्रविष्टमात्मानमुज्ज्वलगुणं पुरुषं ददर्श ॥ १४ ॥
श्रीमन्त्रराजपदवर्णविचारवन्तं मन्त्रद्वयार्थविनिर्वर्तितदीनतापम् ।
तत्त्वत्रयैकपरिचिन्तनलब्धविद्याकारत्रयेण निजधाम्नि निवेशयन्तम् ॥ १५ ॥

तावूचतुश्चरणपीठतले लुठन्ती साष्टाङ्गपातपरिपूतशरीरयष्टी ।
आवां विलोकय मनाकृपया भवाग्नेः संतप्यते चरणमूलमुपाश्रयन्तौ ॥ १६ ॥
नमोऽनन्ताय देवाय सुरासुरनताङ्घ्रये। मुक्तिप्रदाय मुक्ताय सात्वतानन्ददायिने ॥ १७॥
आवयोस्तव पादाब्जपरिचर्यामभीप्सतोः । गुणत्रयातिरिक्ता नौ गतिः केन भवेदिह ॥

श्रीनारायण उवाच—

त्रिधा गतिरिह प्रोक्ता कर्मिणां ज्ञानयोगिनाम् । सात्वतानां तृतीया हि गतीनामवधिर्हि सा ॥ १९ ॥
त्रिलोक्यां कर्मिणां प्रोक्ता तद्बहिर्ज्ञानयोगिनाम् । संन्यासिनां समाख्याता ब्रह्मलोकमयी गतिः ॥ २० ॥
मय्येवार्पितचित्तानां शान्तानां मामभीप्सताम् । परमैकान्तिनां वत्सौ गुणातीता गतिर्मता ॥ २१ ॥
वैकुण्ठदास्ययुक्तानां दासवेषोपशोभिनाम् । दासदासेति लपतामपूर्वा गतिरिष्यते॥२२॥
निवर्त्य सर्वतः सङ्गं संबन्धमपि देहजम्। प्रयोजनान्तरं हित्वा मामेकं शरणं गताः॥२३॥
ते प्राप्नुवन्ति मामेव ममैवात्यन्तवल्लभाः । मामृते नाभिकाङ्क्षन्ति प्राणादप्यतिवल्लभम् ॥
श्रीवत्स योगसंसिद्ध राजञ्ज्ञानैकभाजन । सरहस्यं प्रयच्छामि सिद्धान्तज्ञानमुत्तमम् ॥
यस्याहं रूपभेदेन जनानां हितकाम्यया । आस्थितो वैष्णवं क्षेत्रं नरेण सहितः सदा ॥
तदेकं कारणं ब्रह्म वेदान्तप्रतिपादितम् । नाहं वक्तुमलं तस्य प्रभावं शतजन्मभिः॥२७॥
गुणास्तस्य परिच्छेत्तुमैश्वर्यं भूतिवैभवम् । नैवं वस्तु परं येन परिच्छेदोऽस्य जायते ॥
यत्र नायमसौ देवो न देशस्तादृशः क्वचित् । अतो देशपरिच्छेदः पुरुषस्य न विद्यते ॥
यत्र नायमसौ देवो न कालस्तादृशः क्वचित् । अतः कालपरिच्छेदः पुरुषस्य न विद्यते ।
आश्रयान्तरसंशून्यो नाऽऽश्रयो विद्यते क्वचित्। निराश्रयाश्रयश्चैष परमात्माऽद्वयो मतः॥
आधेयमत्र सकलं चिदचिच्छब्दसंज्ञितम् । आधारभूतमप्येकमद्वयं ब्रह्मसंज्ञितम् ॥ ३२ ॥
आधेयनामभिस्तस्य नामानि विलसन्ति हि । मत आधार इत्येव नानावस्थाकृतानि हि ॥
आधेयरूपे रूपाणि नानावस्थाकृतानि वै । स्वप्रकाशस्वरूपस्य विलसन्ति परात्मनः ॥
प्रकाश्यमत्र सकलं चिदचिच्छब्दसंज्ञितम् । प्रकाशतेऽस्य संभासा तस्मादेष प्रकाशकः॥
प्रवर्त्यं सकलं ह्येतदयमेकः प्रवर्तकः । प्रवर्तकत्वगुणको नाम्नां चापि प्रवर्तकः ॥ ३६ ॥
नियन्ता त्वेष सर्वेषां नियम्यानां च सर्वशः । नियन्तृत्वं गुणस्तस्य तथा नाम प्रकीर्तितम्
आधेयं कार्यतां याति ह्यवस्थान्तरभेदतः । कारणं तत्र चान्वेति कालकर्मप्रवर्तितम् ॥
कारणं सर्वकार्याणां जनकः परमो मतः । जन्यं हि सकलं ह्येतन्नामतो गुणतो हि सः ॥
तस्येदं सकलं वस्तु चिदचिच्छब्दसंज्ञितम् । तदीयं किमिति प्रश्ने ह्युत्तरं शेष एव हि ॥
शेषः शेषीति विख्यातो दासः स्वामी स एव हि । चेतनस्तत्र यो भोगो ह्यचिद्भोगैकसाधनः ॥ ४१ ॥
चिदचिच्छेषभूतो हि तदायत्तस्थितिः सदा । तच्छेषरससंप्राप्तो विज्ञेयो मनसैव हि ॥

१ ख. तदात्मनो गु° ।

आश्रितादिकसंज्ञां हि संप्राप्तो गुणतोऽपि सः। स्वाभाविको ह्ययं भेदो मतो मे शेष-
शेषिणोः ॥ ४३ ॥
उभयोरात्मभूतोऽयं स्वतन्त्रो धारको हरिः। प्रेरको भारको लिप्तो भोजको भोगव-
र्जितः ॥ ४४ ॥
छायातपस्वरूपेण प्रविष्टौ विहगाभिधौ। अचेतनायां प्रकृतौ चेतनायां तु सैव हि ॥
उभयोर्विसजातीयस्वभावगुणवैभवः। भेदो निरूपितो ह्येष ह्यभेदस्तच्छरीरतः ॥ ४६ ॥
अतोऽनन्यार्हसंबन्धं जीवात्मपरमात्मनोः। विचिन्त्यैवं विमुक्तोऽभूः श्रीवत्स जगतीपते ॥
अचिश्यो(त्सु)भोग्यभूतं हि प्राकृतेऽप्राकृतेन च। अनर्हमात्मनो ज्ञात्वा स्वाप्नविद्युल्ल-
तोपमम् ॥ ४८ ॥
अप्राकृतेन देहेन नैष्कर्म्येण द्विजोत्तम। स्वस्यानन्यार्हभोग्यं हि विद्धि देवं रमापतिम् ॥
स्वतन्त्रमात्मनो देवं कारुण्यादिगुणान्वितम्। तदीयस्याऽऽत्मनोऽनन्यसाधनं साधु
साधय ॥ ५० ॥
प्राकृतेषु पदार्थेषु तथा चाप्राकृतेषु च। समस्तेषु स्वकीयत्वस्पृहामात्यन्तिकीं त्यज ॥
प्राकृताप्राकृतेष्वेवं चिदचित्सु निरन्तरम्। सर्वशक्तिगुणोपेतं भगवन्तमवस्थितम् ॥ ५२ ॥
भावेनाऽऽत्यन्त(न्ति)केनैव भज तेभ्यो विलक्षणम्। तत्प्राप्तये सदा वत्स यावदस्ति
कलेवरम् ॥ ५३ ॥
अखण्डतैलधारावदविच्छिन्नस्मृतिः पुमान्। अभ्येति परमात्मानमिति वेदान्तडिण्डिमः ॥
शृणु वत्स प्रवक्ष्यामि साधनं स्मृतये हरेः। अधिकारानुरूपेण कर्म ज्ञानमुपासनम् ॥ ५५ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते रहस्योपदेशो नाम
चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ ३४९ ॥

---

## पञ्चमोऽध्यायः ।

---

श्रीनारायण उवाच—

वेदोक्तं कर्म कुर्वत्सु चेतनेष्विच्छया हरेः। ईहते मुक्तये लोके सहस्रेषु च कश्चन ॥ १ ॥
विक्षिप्तं हि मनस्तस्य विषयास्वादनेन हि। नैकदा वशमायाति विना महदनुग्रहात् ॥
अतः सर्वात्मना वत्स मद्धर्माकाङ्क्षया प्रियम्। आचार्यं शरणं सम्यक्संश्रयेत विचक्षणः
देहशुद्धिं विधायाथ यथाज्ञं परमात्मनः। मन्त्रराजं द्वयं चैव पौरुषं सूक्तमेव च ॥ ४ ॥
श्रीसूक्तं पावमानं च भूमिसूक्तं तथाऽपि च। स्वर्णघर्मानुवाकं च द्वादशार्णं समभ्यसेत् ॥

श्रीवत्स उवाच—

भगवन्देहशुद्धिर्हि कीदृशी केन जायते। मन्त्रराजस्य माहात्म्यं मन्त्रराजश्च को भवेत् ॥

श्रीनारायण उवाच—

श्रुत्वा शास्त्रमशेषेण प्रवृत्तिं वा तथेतराम्। निवृत्तिं हृदये कृत्वा परधर्माय सज्जितः ॥
विरक्तो वा गृहस्थो वा सकामोऽकाम एव च। तापादिना विमुक्तः स्यात्पातकैः कोटि-
जन्मजैः ॥ ८ ॥

एषा वैष्णवसिद्धान्ते सत्क्रिया परमा मता । सुदर्शनाग्निना यस्य शरीरं हि विशोध्यते ॥
बद्धाञ्जलिपुटं शिष्यं त्राहि त्राहीतिवादिनम् । विशोध्य पञ्चगव्येन कुशैर्गात्रेषु मार्जयेत् ॥ १० ॥
वाराहतनुसंभूताः कुशाः कर्मप्रवर्तकाः । विशोधयन्तु चाङ्गेषु मार्जनाद्विष्णुनामभिः॥११
वासुदेवोऽच्युतोऽनन्तः प्रद्युम्नो ह्यनिरुद्धकः । कृष्णो रामो हरिर्विष्णुरुपेन्द्रो गरुडध्वजः ॥ १२ ॥
वैकुण्ठो वामनश्चक्रशङ्खपद्मगदाधरः । तीर्थपादो हृषीकेशः पुण्डरीकनिभेक्षणः ॥ १३ ॥
श्रीभूलीलापतिर्देवः प्रणवाद्या नमोन्तकाः । तं वै विशोधयन्त्वेते पापेभ्यः शरणागतम् ॥
अस्त्रेण द्वादशार्णेन शोधयेच्च कुशोदकैः । क्षुरकेण शितेनाऽऽशु मुण्डनं तस्य कारयेत् ॥
स्नापयेद्वारुणैर्मन्त्रैस्तिलामलकमिश्रितैः । भगवत्पादसलिलैस्तुलसीदलसत्कृतैः ॥ १६ ॥
दत्त्वा विशुद्धं कौपीनं कवचेन समाहितः । मन्त्रराजेन गायत्र्या द्वादशार्णेन वाग्यतः ॥
उपवीतं पुनर्दद्याद्भगवत्कर्मसिद्धये । शिष्यार्थं प्रार्थयेद्देवं जय लक्ष्मीपते हरे ॥ १८ ॥
तवाऽऽज्ञालङ्घिनं दीनमन्यशेषाभिमानिनम् । कुलजात्यभिमानेन मोहितं देवमायया ॥
स्वतन्त्रमकृतप्रज्ञमन्यत्रैश्वर्यचिन्तकम् । आधेयत्वस्वभावादिस्वरूपज्ञानविच्युतम् ॥ २०॥
अप्रपन्नममर्यादमकृतार्थं गतत्रपम् । स्वी कुरुष्वैनमब्जाक्ष शरणार्थिनमर्थद ॥ २१ ॥
परभक्तिपरज्ञानपरप्रेमैकभाजनम् । कृत्वा निजेषु देवेश जानीहि भवभेषज ॥ २२ ॥
स्वी कुरुष्व महादेव पादमूलमुपस्थितम् । प्रणतं प्रणताधार कैंकर्ये विनिवेशय ॥ २३ ॥
कर्मणा भ्राम्यमाणोऽयमनेकाधिमहार्णवे । नानोपासनविभ्रान्तो नानासिद्धान्तवर्त्मना॥
प्रपन्नो भगवत्पादमूलं मायागुणात्परम् । विदित्वा परमोदारगुणायतनमायतम् ॥ २५॥
एवं संप्रार्थ्य पितरौ जगतः परमेश्वरौ । आचार्यः पूजयेद्भक्त्या तापसंस्कारसिद्धये ॥
स्नानवाद्योपहारैश्च स्तवनीराजनादिभिः । पौरुषेण तु सूक्तेन पायसेनानले हुनेत् ॥२७॥
पीठमुद्भावयेद्ब्रह्मावाधारादिभिरेव च । वैकुण्ठपार्षदैर्युक्तं देवेशं तत्र भावयेत् ॥ २८ ॥

स्फुरन्मकरकुण्डलं कमलकोशरक्तेक्षणं विमुक्तजनसेवितं जलजकर्णिकासंस्थितम् ॥
किरीटमणिदीपिकावलिविलीनशोकानलं पिशङ्गपटसङ्गिनं सजलनीरदाङ्गच्छविम्
असीमगुणशेवधिं विधिमुखामरैः सेवितं निवीतविमलस्रजं दयितया दयोद्रेकिणम्।
लसद्भुजचतुष्टयं धृतपवित्रशङ्खाम्बुजं गदां गदिनमाश्रये वलयिनं रमाराजितम् ॥

एवं ध्यात्वा प्रजुहुयान्मन्त्रराजेन वैष्णवैः । शङ्खं चक्रं विशोध्याथ मन्त्रैः पञ्चामृतैरथ॥
संपूज्य भगवत्पार्श्वे निधाय परमायुधे । प्रार्थयेच्छिष्यसंस्कारसिद्धये प्रणवो गुरुः॥३४॥
सुदर्शन महाज्वाल नारायणवरायुध । एष ते स्वामिनः पादे परिचर्यासमुद्यतः ॥ ३५ ॥
स्वामिन्ननुगृहीतस्ते वीक्षितः कृपया भृशम् । यदसौ सर्वमुत्सृज्य कैंकर्यायोपसंस्थितः ॥
संसाधय यथायोग्यं प्रभोः पादार्चनाय च । यथा भवेत्सुरश्रेष्ठ ज्येष्ठः सर्वायुधेषु हि॥३७॥
कर्मणा देहयोगेन संगेनामेध्यसेवया । अयोग्यत्वमपोह्याशु ज्वालया दासतां नय ॥३८॥
चित्स्वरूपेण देहादेर्भिन्नो यद्यप्ययं जनः । तथाऽपि देहयोगेन ह्यन्यशेषत्वरक्षसा ॥३९॥
संस्पृष्टो नष्टसंशुद्धिर्नाधिकारी परार्चने । कैंकर्यार्हान्यथाऽभ्यर्चेत्तथा कुरु नमो नमः४०॥

१ ख. °ना तप्त्वा श° ।

पाञ्चजन्य निजध्वानध्वस्तपातकसंचय । शरणार्थो भवेत्सद्यः श्रीमत्पादयुगार्चने॥ ४१ ॥
कैंकर्यं देहि देवेश दीनस्य शरणार्थिनः । प्रताप्य चक्रशङ्खाभ्यामङ्कयेद्भुजमूलयोः ॥
पवित्रेण विशुद्धात्मा यदि हीनकुलोद्भवः । द्वयाधिकारी भवति पूज्यो वन्द्योऽमरैरपि॥
चक्राङ्कितस्य देहोऽयं यत्र कुत्र पतेदिह । तत्रैव तीर्थं भवति यत्तत्तीर्थं कलेवरम्॥ ४४ ॥
वैष्णवस्यैक एवाऽऽत्मा ह्यात्मानं प्रपुनाति हि । दर्शनस्पर्शनध्यानाद्देहः पातकिनो बहून्॥
शङ्खचक्राङ्कितं गात्रं दयाया भाजनं हरेः । अतिवर्तितुमप्येवं न भवन्ति यमादयः ॥४६॥
संबन्धादेव संसिद्धिस्तीर्थानां मुनिभिः स्मृता । चक्रलाञ्छितदेहस्य बन्धोऽस्ति मरणा-
वधि ॥ ४७ ॥
मृतं शरीरं विप्रस्य शङ्खचक्रादिलाञ्छितम् । न संत्यजति देवेशः सत्यं सत्यं वदाम्यहम्
उत्कलेषु पुरा कश्चिद्ब्राह्मणो गौतमान्वयः । सोमशर्मेति विख्यातो वेदवेदाङ्गपारगः॥४९॥
स्वाध्यायशीलो नितरामग्निहोत्रपरः सदा । अन्यदेवसमं देवं मनुते पुरुषोत्तमम्॥ ५० ॥
अन्यशेषेण देवेशं विष्णुशेषेण चापरम् । यजते निर्विशेषेण शिवशक्तिमहेश्वरान् ॥५१॥
तेषां कृपाविशेषेण जातः सर्वसमृद्धिमान् । पराजयो न शत्रुभ्यो न भयं राजदस्युतः ॥
निर्वेदो नाभवत्तस्य नानाकामहतात्मनः । रजसा घोरसंकल्पास्तमसाऽऽलस्यपीडिताः ॥
भवन्ति पुरुषा विप्र विना सत्त्वनिषेवणात् । तस्य विप्रस्य महती समृद्धिर्ववृधे गृहे ॥५४॥
तस्यां तस्य मदोद्रेको जातो निरयवर्धनः । परदाररतो ह्यासीत्परद्रोहपरायणः ॥ ५५ ॥
परनिन्दासमासीनो विच्युताच्युतचिन्तनः । लोभेन परिभूतस्य नित्यनैमित्तिकोत्सवाः ॥
विनष्टा नष्टभावस्य यौवनं जरया यथा । एवं विनष्टधर्मस्य पापेनाभिहतस्य च ॥ ५७॥
राजभिर्दस्युभिस्तस्य विनष्टाः सर्वसंपदः । स्वजनैश्च परित्यक्तो जायापुत्रसमन्वितः॥५८॥
वृत्त्यर्थं पर्यटन्मूढो मागधं देशमाश्रितः । प्रलुप्तनित्यकर्मत्वान्निरतो हि महावने ॥ ५९ ॥
मृतः सर्पेण संदष्टः प्रेतयोनिमवाप सः । जायापुत्रौ मृतं दृष्ट्वा नष्टधर्मकलेवरम् ॥६०॥
संस्कृत्य विपिने नाऽऽस्तां कर्तुं पित्र्यमलं द्विज । स च प्रेतः क्षुधाभ्यासौ गच्छन्तौ वनि-
तात्मजौ ॥ ६१ ॥
जघास निर्दयो मौढ्यात्प्रेतयोनिमुपास्थितः । त्रयस्ते प्रेततां प्राप्ता बलात्पान्थजनान्बहून्
जघ्नुस्ते ते समभवन्प्रेताः प्रेताशिता(नो)जनाः । दृष्ट्वा कस्याश्च सरितस्तीरेऽश्वत्थतरुं
च तैः ॥ ६३ ॥
निवासमकरोत्तत्र प्रेतैः परिवृतो ह्यसौ । एवं निवसतस्तस्य प्रेतरूपहतद्युतेः ॥ ६४ ॥
गतो बहुतिथः काल औत्कलेयस्य सुव्रत । कोऽपि वृन्दावनाद्विप्रः प्रवृत्तो नीलपर्वतम् ॥
द्रष्टुं नारायणो यत्र नित्यं संनिहितो द्विज । ब्राह्मणो हरिशर्मेति वैष्णवः ससुतो मुनिः
संततचक्रपूताङ्गस्तुलसीमालया वृतः । नारायणं जगन्नाथमनन्येनान्तरात्मना ॥ ६७ ॥
सेवते परया भक्त्या यथा स प्राप्यते हरिः । आगतः सरितस्तीरे विप्रो मार्गवशादयम्॥
हरिशर्मा महाभागो मागधं तीर्थतां नयत्(न्) । मृतः कालवशात्तत्र नारायणमनुस्मरन्॥
दग्धं पुत्रेण तद्गात्रं नीत्वाऽश्वत्थतले महत् । तद्गात्रधूमसंपर्कात्सोमशर्मा महाखलः ॥
विमुक्तः कर्मपाशेन सपुत्रो भार्यया सह । प्रेतास्त्वन्ये गताः केचिद्विहर्तुं च दिगन्तरे ॥
विमुक्तः कर्मपाशेन तावत्प्रेताधिपोऽभवत् । प्रदक्षिणीकृत्य तनुं हुताशनगतां मुनि(नेः)॥

प्रणनाम मुदा युक्तः साष्टाङ्गमवनीतले। स चाऽऽप दर्शनादस्य जन्मान्तरगतां स्मृतिम्॥
अन्यदेवसमत्वेन योऽभजन्नरुडध्वजम्। निरीक्ष(क्षि)तः स्तुतः सद्यः कोऽयमश्वत्थभूरुहात्
अवतीर्य समायातः पितुर्देहं स भाषयत्। केयं स्त्री कः कुमारोऽयं केऽन्ये शर्वाशिनो यथा
जयशब्दं नमःशब्दं कुर्वन्तः परितश्चिताम्। कौतुकेन समाविष्टः पप्र(प्र)च्छ पितुरन्तिके॥
के यूयं मत्पितुर्गात्रं ज्वलन्तं परितः स्थिताः ॥ ७६ ॥

सोमशर्मोवाच—

वयं प्रेतगणा वत्स हरिभक्त्या(क्त्य)वमानिनः। विष्णौ सामान्यबुध्याऽहमेतेषु गुरुतां गतः ॥ ७७ ॥

मदङ्गसंश्रयादेते पान्थाः प्रेतत्वमागताः। गता हि बहवोऽस्माकं हायनाः शाश्वतीः श(स)माः ॥ ७८ ॥

नोया(पा)यमिह संप्राप्ता दग्धाः कोपाग्निना हरेः। धूमेनानेन मुक्ता हि तिष्ठामो भार्यया सह ॥ ७९ ॥

अयं मे तनयो मौढ्यान्मयैवाऽऽपादितोऽनया। मात्रा सह महाभाग स्मृतिर्मे दर्शनादभूत्
वेदाध्ययनसंपन्नः सोमशर्मा पुराऽभवत् ॥ ८० ॥
नानादेवैकनिरतो विष्णुभक्तिविवर्जितः। सुरामिषपशू(शु)व्रातैरर्चिता चण्डिका मया
बलिदानं कृतं काले तर्पिता भूतभैरवाः। विष्णुः सामान्यबुद्ध्या मे द्वारदेवेषु पूजितः॥
हसिता वैष्णवा नित्यं शङ्खचक्राङ्कधारिणः। श्रद्धया पादतीर्थं मे न धृतं वदनाम्बुजे॥
न देवः प्रणतो मूर्ध्ना हरिर्वैकुण्ठनायकः। तामसानां हि देवानां सेवनं मनसा कृतम्॥
तेन कर्मविपाकेन प्रेतराजः पुराऽभवम्। न जाने धूममाहात्म्यं कीदृशं ते पितुर्द्विज॥
आख्याहि पुत्र यदि ते विज्ञातं स्यादशेषतः॥ ८५ ॥

पुत्र उवाच—

नाहमप्यत्र माहात्म्यं प्रेतभावविमोचनम्। ॥ ८६ ॥
पितुर्धूमस्य जानीयां केन जातं हि कर्मणा। उभौ प्रेतद्विजौ तत्र मनसा पुरुषं परम्॥
जग्मतुः शरणं शीघ्रं संशयच्छेदनाय च। तदानीमेव श्रीवत्सो वनमालागदाधरः॥८८॥
पीतवासाश्चतुर्बाहुः संप्राप्तो गरुडासनः। नमस्कृतः स्तुतो देवस्ताभ्यां परमया मुदा॥
पृष्टः प्रोवाच भगवान्मेघगम्भीरया गिरा। वैष्णवस्य तनुः साक्षाद्विष्णुरूपा मयोदिता॥
निवसामि सदैवाहं मच्चक्रेणाङ्किता यदि। मच्चक्रपूतदेहस्य यच्च पादोदकं महत्॥ ९१ ॥
विरजायाः समं विद्धि महापातकनाशनम्। यावत्कलेवरे चक्रं सजीवस्य मृतस्य वा॥
तावत्तिष्ठति मे तेजो नाशयद्यमकिंकरान्। प्रेतत्वं नैव विन्देत मृतस्य मम शासनात् ॥ ९३ ॥
सूतकं नैव भवति स्पर्शदोषो न विद्यते। लोकसंरक्षणार्थाय शिष्यैः पुत्रैश्च बान्धवैः॥
मदाज्ञापालनं कार्यं मन्त्रदृष्ट्या न वै क्वचित्। वैष्णवस्य शरीरस्य न दाहः क्रियते यदि
न तेन दुर्गतिं गच्छेच्चक्रं तत्र प्रशास्ति हि। सर्पव्याघ्रविषाघातचौरवारिविषूचिकाः॥
चक्राङ्कितस्य नेच्छन्ति दुर्गतिं यमकिंकराः। श्मशाने मागधे देशे म्लेच्छदेशेऽन्त्यजां गणे॥

मृतस्य देहं चक्रदेहस्य सत्यं सत्यं न दुर्गतिः । विष्णुभक्तिशरीरस्य गङ्गायाः सरितः सदा ॥ ९७ ॥
सेवन्ते पार्षदा भूत्वा निजदोषापनुत्तये । भिद्यते त्यज्यते वाऽन्यः संस्कारो देहिनां तनौ
तुलसीनलिनाक्षैश्च मण्डितो वल्लभो मम ॥ ९९ ॥
अतो विमुक्तिं संप्राप्ता वैष्णवाङ्गविधूपिताः । प्रेताः संबन्धिनो ह्येते मद्भक्तस्य न संशयः
काष्ठपाषाणरचितगृहोपकरणानि च । पुनन्ति चक्रयुक्तानि न कुतो वैष्णवी तनुः ॥
दासी दासाश्च भत्याश्च चिह्निताश्चक्रवह्निना । शुद्धा भवन्ति विप्राणां परिचर्यादिकर्मसु
पक्वान्नं चक्रसंयुक्तं सेवितं पुरुषेण हि । प्रयच्छति मनःशुद्धिं महापातकिनामपि ॥
माथुरं मण्डलं पुण्यं तत्र वृन्दावनं वरम् । तत्रापि वैष्णवत्वं हि तत्रैकान्तित्वमुत्तमम् ॥
एकान्त्ययं मम प्रेष्ठः पिता ते द्विजसत्तमः । तत्संबन्धादिमे प्रेता मुक्ता नात्र विचारणा ॥
इत्युक्त्वाऽन्तर्हितो देवः प्रेतो वैमानिकोऽभवत् । सभार्यः ससुतो हृष्टो दृष्ट्वा वैकुण्ठनायकम् ॥ १०६ ॥
स च विप्रो मुदा युक्तो वृन्दावनं समाययौ । श्रीवृन्दावनमाहात्म्यं श्रुत्वा चैकान्तिवैभवम् ॥ १०७ ॥
पूर्णार्थो दर्शनाद्विष्णोर्नीलाद्रिं प्रणिपत्य च । श्रीवत्स एषा संशुद्धिश्चक्रेण कथिता तव
दिग्भ्यः समागताः प्रेता अश्वत्थमवलोक्य च । तर्कयामासुरत्यन्तचिन्ताकुलितचेतसः ॥
क्व गतः सगणोऽस्माकं प्रेतराजो महाबलः । निर्दोषो दृश्यते नूनं विजने कः समागतः ॥
निर्धूमाङ्गारनिचयां चितामालोक्य सत्वरम् । आजग्मुस्त्वरितास्तत्र तानन्वेष्टुमितस्ततः॥
प्रायः केनापि नः स्वामी मन्त्रज्ञेन विपश्चिता । निर्दग्धः सगणस्तस्य चितैषा प्रतिभाति हि ॥ ११२ ॥
वयमत्र प्रवेक्ष्यामो वृथा किं जीवितेन नः । अनाथानामिवाऽऽर्तानां वणिजां पोतवाहिनाम् ॥ ११३ ॥
प्रविष्टा भस्मसंश्लेषात्सद्यो मुक्तकलेवराः । विमानं वरमारुह्य तेऽपि सर्वे दिवं ययुः ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां तापसंस्कारकथनं नाम
पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥४६३ ॥

---

अथ षष्ठोऽध्यायः ।

---

श्रीनारायण उवाच—
मन्त्रराजस्य महात्म्यं श्रीवत्स ह्यवधारय । मननात्त्रायते यस्मात्तस्मान्मन्त्र उदाहृतः॥१॥
ॐकाराद्यो महामन्त्रो राजते मन्त्रराजिषु । वस्वक्षरार्थदः पुंसां द्वितीयः कल्पपादपः ॥
कल्पवृक्षः कामधेनुश्चिन्तामणिमुखानि किम् । अनुकुर्वन्ति श्रीवत्समन्त्रराजं विमुक्तिदम्
सार्धकोटिमहामन्त्रा नानाशक्तिसमन्विताः । सेवका इव सेवन्ते मन्त्रराजं दिवानिशम्

यथा नारायणं देवं त्रयस्त्रिंशच्च कोटयः । उपासते तथा सर्वे मन्त्रमष्टाक्षरं द्विज ॥ ५ ॥
ऋषिर्नारायणोऽहं वै देवता च श्रियः पतिः । बीजमोङ्कारमित्याहुरैश्वर्यं शक्तिरेव च ॥
साध्यो नारायणः साक्षात्सर्वाधारो बृहद्गुणः । श्रीवैकुण्ठमहालीलानायको विश्ववन्दितः
स्वरूपभूतकैंकर्ये विनियोगे नमो नमः । धर्मार्थकाममोक्षेषु कोऽपि कामानुसारतः ॥८॥
महापद्मादिनिधयो ह्यणिमाद्याश्च सिद्धयः । मन्त्रराजस्य पुरतश्चरन्ति सचिवा इव॥९॥
न देवदानवा नैव यक्षराक्षसगुह्यकाः । न चाभिभवितुं शक्ता मन्त्रराजपरायणम् ॥१०॥
त्रिपदो मन्त्रराजोऽयं वसुवर्णविभूषितः । ये जपन्ति महाभागास्तेभ्यो नित्यं नमो नमः
अकारेणाप्युकारेण मकारेण विभूषितम् । ॐमित्येकाक्षरं ब्रह्म शिरोभूतं महामनोः॥१२॥
अकारः परमः शेषी शेषभूताविहापरौ । तयोराधारभूतो हि निराधारो निरामयः ॥१३॥
स्वतन्त्रो वासुदेवाख्यो विकृतप्रकृतौ स्थितः । व्यक्ताव्यक्तव्यवस्थायां भेदाभेदमुपैति हि
अव्यक्तप्रणवं ब्रह्म व्यक्तमादित्रयं पृथक् । तत्राधोऽपरिणामीति द्वितीयः परिणामवान्॥
द्वयोरधीनः पुरुषस्तृतीयः पञ्चविंशकः । उकारेण विनिर्मुक्तो जीवो ब्रह्मात्मकः स्वयम्॥
प्रकृत्यभिनिवेशेन साक्षात्परमपूरुषम् । नोपैति पुरुषो जीवः पञ्चविंशो ममात्मकः ॥१७॥
आद्यश्च पुरुषः शेषी सच्चिदानन्दलक्षणः । स्वतन्त्रः सर्वगः शश्वदात्मभूतो द्वयोर्मतः ॥
उपाधिभूता प्रकृतिश्चतुर्विंशतिभेदभाक् । अपरः पुरुषो ज्ञेयो बद्धमुक्तः सनातनः॥१९॥
चतुर्विंशतिभेदेषु कादिष्वनुगतो हरिः । धारको ह्यात्मभूतोऽसावन्तर्यामितया स्थितः ॥
धार्यत्वेन स्थिताः सर्वे तनुभूताः शरीरिणः । कखादिसंज्ञा दधते जीवयोगेन बीजताम् ॥
कखामादिविभागेन व्यक्तमेतत्त्रयात्मकम् । प्रजप्तं मातृकायन्त्रे पूजितं सर्वकामदम् ॥२२॥
अप्रच्युतपदारूढं जीवब्रह्मैककेवलम् । जपतामच्युतं धाम प्रयच्छति न संशयः ॥२३॥
ओमित्येकाक्षरं बीजं प्रकृत्या पुरुषेण च । केवलं प्राकृतो जीवो जपतामखिलर्द्धिदः ॥
सर्वाधारोऽयमोंकारो बद्धमुक्तादिसंश्रयः । धर्मार्थकाममोक्षाणामेकः कल्पतरुः स्मृतः ॥
द्वाविमौ पुरुषौ लोके सुपर्णाविति संज्ञितौ । कादिवृक्षलताविष्टौ भुक्तिमुक्तिफलप्रदौ ॥
भोक्ता च भोजकश्चैको भोग्यभूतमथापरम् । त्रिविधः पुरुषस्त्वेवं मन्त्रमात्रेषु तिष्ठति ॥
भुनक्ति बिन्दुरूपेण प्रकृतिं पुरुषाश्रिताम् । केवलायां न भोगोऽस्ति जडत्वात्प्रकृतौ मनाक् ॥ २८ ॥
केवलं पुरुषं पूर्णमकाराक्षरसंज्ञितम् । भुनक्त्यपूर्णः पुरुषः पूर्णत्वं प्रतिपद्यते ॥ २९ ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते ॥ ३० ॥
विशत्यकारः सर्वेषु सत्तारूपेण पुंगव । मकारो बिन्दुरूपेण परिस्फुरति रञ्जयन् ॥ ३१॥
भोग्यभूता हलः सर्वे उकारप्रकृतौ स्थितः । कारणे प्रणवे साऽपि लीना चोकार-संज्ञया ॥ ३२ ॥
पुरुषोऽपि प्रकाशेन व्यापकः पञ्चविंशकः । स्वरेण बिन्दुरूपेण भगवन्तमुपाश्रितः ॥
स्वशेषभूतभूतानामाश्रयः परमेश्वरः । प्रणवाख्यः परो देव उभयत्र च दीव्यति ॥ ३४॥
न चैश्वर्यं विना क्वापि सेव्यते नोपदिश्यते । ओमित्येकाक्षरं ब्रह्म न्यासिभिः समुपास्यते ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥
उपदेशोऽयमखिलश्रुतिस्मृतिभिरुच्यते । फलं तूपाधिसंत्यागः स्वरूपस्य परा गतिः॥३७॥
वत्स तेऽहं प्रवक्ष्यामि व्याख्यानं भगवद्गिरः । उपदेक्ष्याम्यहं चास्मै नरायार्जुनरूपिणे ॥
विशिष्टमपरैर्वर्णैरेकाक्षरमिहोच्यते । अतोविशिष्टमद्वैतं वर्णेषु प्रणवो मतः ॥ ३९ ॥
प्रणवं व्याहरेत्प्राज्ञो मामेकं ब्रह्म संस्मरन् । पश्यैकं चिदचिद्युक्तं बृहद्गुणयुतं तथा ॥४०॥
प्रणवब्रह्मणोरैक्यं वाच्यवाचकभेदतः । सूते स मात्रिकं विश्वं शब्दमेकाक्षरो मनुः॥४१॥
यतश्चेमानि भूतानि जीवन्ति च यतः पुनः । प्रलीयन्ते यतो यस्मिंस्तद्ब्रह्मेति विदुर्बुधाः॥
शक्तिरूपसमाधारे कार्यं तिष्ठति कारणे । ततोऽवस्थान्तरं प्राप्य बहिरन्वेति पूर्ववत्॥४३॥
शब्दब्रह्म परं ब्रह्म द्वयं वै विश्वकारणम् । शब्दब्रह्मसमाराध्यं परब्रह्माधिगच्छति ॥४४॥
एवं ब्रह्मविदाप्नोति परमित्यनुशासनम् । ब्रह्मविद्भवति ब्रह्म इत्येषा च परा श्रुतिः॥४५॥
वाचकं तु पदं वाच्यं प्राप्यं भोग्यं समाश्रयम् । ब्रह्मावगम्यते साक्षाद्विधूय प्रतिबन्धकम् ॥
साधनं प्रणवाभ्यासो मम ध्यानसमन्वितः । आजीवं सैव भक्तिर्हि शरीरं प्रतिबन्धकम् ॥
त्यजन्देहं च यो याति स याति परमां गतिम् । परमं पुरुषं दिव्यं कारणं चिदचिन्मयम् ॥
गतिस्तस्य परं साम्यं याति प्राप्नोति मानवः । तदा विद्वान्पुण्यपापे विधूयोपाधिवर्जितः ॥
उपैति परमं साम्यमिति वेदान्तनिश्चयः । साम्यं प्राप्तोऽपि परमं प्रणवाभ्यासचिन्तनैः ॥
न प्राप्य पुरुषं प्राप्यं तदा सर्वं निरर्थकम् । तत्प्राप्तौ च पुनर्वत्स साधनं प्रणवानुगा ॥
भक्तिकैवल्यभावेन यदा मामभिकाङ्क्षति । अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥
तस्याहं सुलभो वत्स नित्ययुक्तस्य योगिनः । कैवल्यादखिलार्थेषु यस्य नो विशते मनः॥
अनन्यचेता भवति यो मामेवमनुस्मरेत् । तस्यैवाहं च सुलभो नान्ययोगयुजोऽपि वा ॥
यतो वै नित्यसंयोगो मयि तस्य प्रवर्तते । मच्चिन्तनमृते नान्यसाधनं विद्यते ततः ॥५५॥
अतस्तस्यार्थबोधाय द्वितीयं पदमुच्यते । साधनान्तरसंसिद्धिं नमःशब्दो निरस्यति ॥
अहंकारपरित्यागो मनसैवोपचर्यते । ममत्वे तु मकारः स्यान्नकारस्तन्निषेधने ॥ ५७ ॥
अतो नैवास्य कर्तृत्वं केवलं शरणं विना । सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥५८॥
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः । इत्यहं नमसौह्यर्थमुपदिक्ष्ये नराय च ॥
नरोऽयं स्वभरन्यासं मय्येव वितरिष्यति । पारतन्त्र्यानुसंधानात्स्वस्य तच्छेषरूपिणः ॥
कर्तृत्वं च कुतो यस्मात्सर्वधर्मोपपादनम् । अतो भगवता प्रोक्तं स्वकर्तृत्वं विहाय च॥६१॥
मामेकं साधनं ज्ञात्वा मदाज्ञापालनं कुरु । मत्प्राप्तिप्रतिबन्धेभ्यो ह्यहमेव विमोचिता॥६२॥
मा शुचः सर्वपापेभ्यः सत्यं सत्यं वदाम्यहम् । सकृदेव प्रपन्नाय तवास्मीति च याचते ॥
अभयं सर्वभूतेभ्यो ददामीति व्रतं मम । अथ प्राप्यं च भोग्यं च नारायणवतीरितम् ॥
नारं जीवसमूहोऽयमयनस्तस्य यो भवेत् । नारायणः स भवति परमं प्राप्य मुच्यते॥६५॥
स्वाधारमन्तरं नैव गन्तव्यं विद्यते क्वचित् । आधेयस्य न चाऽऽधार आधेयान्यस्य पुत्रक
पक्षिणामयनं नीडं सर्वतश्चरतामपि । नराणामयनं तद्वदेष नारायणः स्मृतः ॥ ६७ ॥
नरा बद्धाश्च मुक्ताश्च बलाश्च अपि च स्मृताः । सर्वेषा मयनं साक्षादाद्यो नारायणो हरिः ॥ ६८ ॥

नराज्जातानि जीवानि नाराणीति जगौ श्रुतिः । अयते तत्र यः साक्षाद्दात्मा नारायणो मतः ॥ ६९ ॥

य आत्मनीति वाक्येन ह्यन्तर्यामितया स्थितः । प्रवर्तयति भूतानि कृतीनामाश्रयो हि सः
कार्याणामयनं साक्षाज्जीवस्य च परस्य च । प्रकृतिरपि कालस्य सत्त्वस्थं च परायणम् ॥
ज्ञानस्य धर्मभूतस्य ह्यैश्वर्यादिगुणस्य च । आश्रयो वत्स नितरामेष एव नरोत्तमः ॥७२॥
यदेषामयनं साक्षादेषां निलयनं पदम् । निलीय यत्र तिष्ठन्ति यस्मादेतत्प्रजायते ॥७३॥
आधेयानामभावस्य न पदं परमेश्वरः । किंतु सूक्ष्मस्वरूपस्य नामरूपबहिष्कृतेः ॥ ७४॥
सदेव सौम्येदमग्र आसीदेषेति या श्रुतिः । वदत्याश्रयनाम्नैव ह्याश्रितं सूक्ष्मतः स्थितम् ॥
अव्यक्तादसदेवेति शून्यमिति न चोच्यते । नासच्छून्यमिदं वत्स बीजे वटमिव स्थितम् ॥
कालेच्छाकर्मयोगेन(ण) त्रिगुणेन यदा पुनः । प्राकृतं व्यक्तिमायाति कार्यात्प्राक्सूक्ष्मतः स्थितम् ॥ ७७ ॥

केवलेशेच्छया नित्यमुक्तानां स्वात्मभुक्तये । अप्राकृतमिदं दिव्यं व्यक्तिमायाति शाश्वतम् ॥ ७८ ॥

प्राकृताप्राकृतानां च नित्यमुक्तात्मनामपि । बद्धानां केवलानां च प्राप्य एव न संशयः
प्रकृत्या सह संयोगः प्राकृतानां लयेषु च । तथा प्रकृतिमुक्तानां साक्षाद्योगो निरूपितः
तत्र केवलिनामात्मस्वरूपेण व्यवस्थितिः । भक्तानां दिव्यरूपेण भगवत्परिशीलनम् ॥
एवमाश्रयमाश्रित्य त्यजेदन्यत्प्रयोजनम् । चतुर्थी निर्दिशत्येतच्छ्रीवत्स मनसा स्मर ॥८२॥
अनन्यार्हं च संबन्धं वक्ति प्रणव एव हि । अनन्यसाधनं वक्ति द्वितीयं पदमुत्तमम् ॥८३॥
प्राप्यं नारायण इति चतुर्थी द्विजसत्तम । निर्दिशत्येषु युक्तानां तथाऽनन्यप्रयोजने ॥८४॥
एवं नारायणपरो मन्त्रराजमहर्निशम् । योऽनुस्मरति पूतात्मा याति विष्णोः पदं परम् ॥
सायमेतदधीयानः पापं दिनकृतं महत् । मध्यंदिनमधीयानः पापं प्रातः कृतं महत् ॥८६॥
प्रातरेतमधीयानः पापं रात्रिकृतं महत् । भस्मी करोति तत्सर्वं तूलराशिमिवानलः ॥८७॥
ब्रह्महत्यासहस्राणि गुरुतल्पाधिरोहणम् । स्वर्णस्तेयं सुरापानं तत्समानि बहूनि च ॥
अष्टाक्षरप्रजप्तारं चक्रशङ्खादिधारिणम् । दृष्ट्वा विलयमायान्ति नीहारा इव गोपतिम् ॥
प्रजप्त्वा मन्त्रराजेन जलमष्टोत्तरं शतम् । प्रोक्षणात्कुशपत्रैश्च पैशाचत्वं विनश्यति ॥९०॥
ब्रह्मराक्षसवेतालकूष्माण्डग्रहजातयः । नारायणेतिमन्त्रेण पलायन्ते दिशो दश ॥ ९१ ॥
एकादश्यां व्रतं कृत्वा सहस्रतुलसीदलैः । नारायणेन मनुना पूजयन्पुरुषोत्तमम् ॥ ९२॥
महापूजां प्रकुर्वीत रात्रौ जागरणं चरेत् । अयुतं प्रजपेन्मन्त्रं मन्त्रराजमनुत्तमम् ॥ ९३ ॥
द्वादश्यां चरुणा हुत्वा सहस्रं मधुसर्पिषा । भोजयेत्परमान्नेन विप्रान्द्वादश संख्यया ॥
महाभागवताञ्छान्तान्दक्षिणाभिः प्रपूज्य च । प्रार्थयेन्मनसोऽभीष्टं वत्सरात्समवाप्नुयात् ॥
भ्रष्टा(ष्टोऽ) धिकारमाप्नोति वन्ध्या च लभते सुतम् । गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम् ॥ ९६ ॥

महारोगात्प्रमुच्येत बद्धो मुच्येत बन्धनात् । धनार्थी धनमाप्नोति विद्यामाप्नोति विस्तृताम् ॥ ९७ ॥

पुष्कलं ज्ञानमाप्नोति बुभुत्सुः प्रेमलक्षणम् । निष्कामो भक्तिमाप्नोति संवत्सरवि-
धानतः ॥ ९८ ॥
कार्तिके कमलाकान्तं कमलैर्लक्षसंख्यया । वस्वक्षरेण संपूज्य स्वाभीष्टं साधयेन्नरः ॥
अन्तःकरणसंशुद्धिमचिरात्समवाप्नुयात् । जातीपुष्पैस्तु हवनात्कविर्भवति वत्सरात् ॥
नष्टबुद्धिश्च विकलो जडो बुद्धिमवाप्नुयात् । अष्टोत्तरशतैः शङ्खैर्दुग्धेनाऽऽपूरितैस्तथा ॥
तुलसीशर्करोपेतैःस्नापयेन्मनुनाऽमुना । सहस्रनामभिः पुष्पैः पूजयेत्परया धिया ॥ १०२ ॥
नैवेद्यं पायसं सर्पिर्दत्त्वाऽभीष्टं सुसाधयेत् । द्वादशैर्दिवसै रोगान्मण्डलान्निगडग्रहात्॥१०३॥
मुच्यते वत्सराद्राज्यं प्राप्नुयाच्छत्रुभिर्हृतम् । वस्वक्षरेण यो भुङ्क्ते प्रतिग्रासं द्विजोत्तमः ॥
अश्वमेधसहस्राणि कलां नार्हन्ति षोडशीम् । पङ्क्तिभोजनजाद्दोषादस्पृश्यस्पर्शना-
दपि ॥ १०५ ॥
अष्टवारं जपादस्य मुच्यन्ते वैष्णवा नराः । प्रतिग्रहभवात्पापादयाज्यस्य च याजनात् ॥
यत्पापं जायते येषां तेषामष्टाक्षरो गतिः । नारायणेति वदनाद्यस्य चोत्पद्यते ध्वनिः ॥
तस्य पापानि नश्यन्ति वयांसीव घनध्वनेः । श्रीवत्स बहुनोक्तेन किमिदानीं महामते ॥
वस्वक्षरस्य महात्म्यं नालं वक्तुमहं क्षमः ॥ १०८ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरितेऽष्टाक्षरमाहात्म्यं
[ नाम ] षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्टयङ्काः—॥ ५७१ ॥

---

## अथ सप्तमोऽध्यायः ।

---

श्रीनारायण उवाच—

एवं नारायणमनुं समाराधय शाश्वतम् । यदि गन्तासि वैकुण्ठं यत्राऽऽस्ते पुरुषोत्तमः॥१॥
द्वयमावर्तयेन्नित्यं मनुसंधानमाचरन् । नास्य देवान्तराकाङ्क्षा प्रपन्नस्य महात्मनः ॥२॥
द्वयं हि षट्पदं प्रोक्तं पञ्चविंशाक्षरं द्विज । ग्रहणादेव निर्मुक्तो जायते यमशासनात् ॥३॥
अष्टाक्षरं द्वयं चैव यस्य चेतसि वर्तते । स मनुष्यो न विज्ञेयः पार्षदप्रवरो हरेः ॥ ४ ॥
नवाक्षरं पदं त्वाद्यं द्वितीयअ(म)क्षरं मतम् । तृतीयमक्षरं चैव चतुर्थमक्षरं तथा ॥ ५ ॥
पञ्चाक्षरं पञ्चमं तु चरमस्य क्षरं मतम् । अष्टाक्षरं तु विपदं चरमं द्वादशात्मकम् ॥ ६ ॥
प्रपन्नानां धनमिदं पाथेयं मुक्तिमिच्छताम् । आत्मप्रदं केवलिनां ज्ञानदं ज्ञातुमिच्छताम्॥
द्वयं त्रयं च चरमं संज्ञेयं द्विजसत्तम । प्रापकानां च मन्त्राणां विज्ञेया मम पुत्रक॥ ८ ॥
कर्मज्ञानोपासनाख्या साध्योपायाः प्रकीर्तिताः । सिद्धोपायस्तु चरमे निर्दिष्टः कृपया
मया ॥ ९ ॥
वैष्णवो हि परो धर्मो वत्स वेदेषु निश्चितः । विष्णोः सकाशादुद्भूतं जगदेतच्चराचरम्॥
विष्णोश्चतुर्मुखो जातस्तस्मात्पञ्चमुखो मतः । सहस्रशीर्षः पुरुषो वैराड्वै समपद्यत ॥
योऽवष्टभ्य त्विमदं सर्वं सत्यलोके विराजते । गुणावतारो लोकानां हिताय पुरुषोत्तमः ॥

यत्र ब्रह्मादयो देवा उपासांचक्रिरे मुदा । सगुणः पुरुषो विष्णुः श्रीभूलीलास-
माश्रयः ॥ १३ ॥
तत्र साधारणो धर्मो नानादेवैश्च सिध्यति । अदृश्ये भावनातीते गुणत्रयविवर्जिते ॥१४॥
वासुदेवे भगवति सत्त्वद्रव्यशरीरिणि । अनन्यभावयोगेन भावना नोपजायते ॥ १५ ॥
अर्च्यते साधनधिया हरिर्यज्ञाङ्गयूपवत् । तेनापूर्वं भवति स एव परमेश्वरः ॥ १६ ॥
प्रयच्छति स एवास्य सुखं स्वर्गादिकं वरम् । धर्मादर्थश्च कामश्च धर्मश्चैष प्रवृत्तिदः ॥
प्रयोजनान्तरं हित्वा तेनैव पुरुषोत्तमम् । युज्यन्ते यज्ञपुरुषो वैष्णवो धर्म उच्यते ॥१८॥
एष साधारणो धर्मो निष्कामो ज्ञानवर्धनः । तस्मादुत्पद्यते चान्यो धर्मो भागवतो महान्
ज्ञात्वा भगवतो रूपं सर्वत्रास्तितया स्थितम् । धारकः प्रेरकः साक्षाद्वासुदेवः सनातनः॥
सर्वानन्दमयो नित्यो नित्यलीलानिकेतनः । सर्वावधिः सर्वशेषी सर्ववेदान्तसंमतः॥२१॥
तस्मादन्यन्नैकरूपं मायाकार्यमिदं जगत् । अनित्यं मृगतृष्णाभं गन्धर्वनगरोपमम् ॥२२॥
कर्तृत्वं च फलं हित्वा ममेदमिति कर्मणि । कुर्याद्वेदोदितं कर्म वैष्णवं तत्प्रकीर्तितम् ॥
श्रवणादीनि कर्माणि विष्णोरेव करोति यः । वत्सैष वैष्णवो धर्मः श्रोतव्यादिश्रुतीरितः
एवं साधारणा धर्मा वैष्णवा बहवो मताः । संबन्धापादनं विष्णोरसाधारणमुच्यते ॥
दासो भूत्वा यजेद्देवं पञ्चसंस्कारसंस्कृतः । वैष्णवः परमैकान्ती ह्येकान्तीति त्रिधा मतः ॥

श्रीवत्स उवाच—

वैष्णवः परमैकान्ती ह्येकान्ती यस्त्वयोदिताः । तेषां लक्षणमाख्याहि नारायण नमोऽस्तु ते

नारायण उवाच—

देवान्तरं परित्यज्य श्रीविष्णोः शरणं गतः । अकामो मोक्षकामो वा सकामो वा द्विजो-
त्तम ॥ २८ ॥
विष्णौ च वैष्णवेष्वेव निबद्धहृदयः सदा । अन्तः करणशुद्ध्यर्थं पञ्चरात्रानुसारतः ॥
श्रुतिस्मृत्युदितं धर्मं वर्णाश्रमविभागशः । संसेवते विशुद्धात्मा गृह्यं कर्म परित्यजेत् ॥
मलिनीकरणं यक्त्वा लोकनिन्दाकरं तथा । प्रतिकूलमनाज्ञप्तं सदाचारबहिष्कृतम् ॥
धृत्वा भागवतं वेषं जन्मकर्मोत्सवादिकम् । करोति विमलं प्राज्ञो वैष्णवः परमो मतः ॥
अयमेव तदात्मानं ज्ञात्वा देहादिवर्जितम् । निर्लेपमक्षरं शुद्धं परिणामविवर्जितम् ॥३३॥
सच्चिदानन्दमुन्मुक्तषट्तरङ्गमनामयम् । अवस्थात्रयनिर्लिप्तं विकाररहितं ध्रुवम् ॥ ३४ ॥
स्वरूपभूतविज्ञानमयमच्युतमस्फुटम् । उपाधिभेदरहितं शान्तं स्वप्रभया ततम् ॥ ३५ ॥
उपाधिकृतसंकोचरहितं स्फटिकोज्ज्वलम् । सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ३६॥
अप्रधृष्यमनौपम्यमप्रतर्क्यमगोचरम् । स्वरूपभूतसामर्थ्यसंपन्नं सत्यविक्रमम् ॥ ३७ ॥
सत्यसंकल्पनित्यात्मगुणाश्रयमनुत्तमम् । भगवच्छेषभूतं हि ज्ञात्वा कृत्यात्प्रमुच्यते ॥३८॥
एवमात्मस्थितिं प्राप्य ह्यनात्मासंगवर्जिते । एकान्ते चाऽऽत्मनो रूप एकान्ती संस्थितो
बुधः ॥ ३९ ॥
देहधर्मैरसंस्पृष्टो मानामानविवर्जितः । स्वात्मभूतनिजाधारपरमात्मपरायणः ॥ ४० ॥
निवृत्तानात्मसंबन्धिजनसङ्गरतिः सदा । प्रतिकूलजनान्नादिपङ्क्तिभोजनवर्जितः ॥ ४१ ॥

आचार्योपासनरतो देहाहंकृतिनिर्गतः । एकान्ती स्वस्वरूपस्थो मम प्रीतिकरो मतः॥४२॥
परमैकान्तिनं विद्धि वत्स स्वात्मानमच्युतम् । स्वाधारभूतमद्वैतमक्षरं ब्रह्मसंज्ञितम्॥४३॥
सेवते परया भक्त्या प्राप्यभोग्यधिया सदा । देहादेकान्तभूतोऽयं प्रत्यगात्मा द्विजोत्तम॥
तस्मादेकान्तभूतो हि परमात्मा सनातनः । तस्यैकवदनोल्लासविश्रान्तनयनाम्बुजः॥४५॥
यस्याऽऽनन्दकलालेशलिहो ब्रह्मादयोऽमराः । तस्याऽऽनन्दनिधेर्भक्तिः परमैकान्तिता मता ॥ ४६ ॥
परमैकान्तिको ज्ञेयो ममाऽऽत्मा तस्य चाप्यहम् । मद्ध्यानसुखविच्छेदक्षणविक्षरणाक्षमः
यस्य ज्ञानकलालेशाज्ज्ञानिनोऽखिलचेतनाः । तस्य ज्ञाननिधेर्भक्तिः परमैकान्तिता मता
यस्य कर्तृत्वसामर्थ्यात्कर्तारो जडचेतसः । तस्य कर्त्रवधेर्भक्तिः परमैकान्तिता मता ॥
यस्यैश्वर्यकलालेशादीश्वराश्च सुरासुराः । तस्यैश्वर्यनिधेर्भक्तिः परमैकान्तिता मता॥५०॥
चतुर्विंशतितत्त्वानां राशीभूतकलेवरात् । क्षेत्रज्ञलक्षणात्तस्य धारकादात्मनः परः ॥५१॥
षड्विंशको हरिः साक्षात्परमात्मा परायणः । कल्याणादिगुणोपेतो निर्गुणः प्रकृतेः परः
निरञ्जनो निरालम्बो निर्विकारो निरामयः । वाङ्मनोगोचरैश्वर्यो नित्यमुक्तजनाश्रयः ॥
आविष्कृतमहालीलः कोटिब्रह्माण्डनायकः । शुद्धसत्त्वतनुः श्रीमाञ्छ्रीभूलीलापतिः प्रभुः ॥ ५४ ॥
दिव्यायुधो दिव्यजनो दिव्यलोककृतालयः । दिव्यवाहनभूषाढ्यो दिव्यभोगमहत्प्रभुः ॥
यस्य लोकगुणांशानां विभूतीनामनेकशः । प्राकृतेऽप्यनुभूयन्ते जनानां मुक्तिहेतवे ॥
सत्यलोकस्तथा श्वेतद्वीपदुग्धाब्धिसंज्ञकाः । द्वारकामथुरायोध्याश्रीरङ्गमलयाद्रयः ॥
लोकालोकाचलादग्रे तमसः परतः परः । नरेण सहितो यत्र सदैव निवसाम्यहम् ॥५८॥
यथाऽत्र तपसा युक्तो मुनिवेषधरो द्विज । सर्वैश्वर्ययुतस्तत्र श्रीभूलीलासमन्वितः॥५९॥
तयोरेवांशभूतौ हि सितकृष्णरुचावुभौ । अवतीर्य यदोर्वंशे भुवो भारं हरिष्यतः ॥६०॥
अनन्तगरुडादीनां स्थानानि च बहून्यपि । वैकुण्ठस्यांशभूतानि ह्युपास्यानि मुमुक्षुभिः
मोक्षस्य द्वारभूतानि तत्तन्मूर्तिप्रपत्तितः । अदृश्ये निर्गुणे ब्रह्मण्यनन्ते पुरुषोत्तमे ॥ ६२ ॥
वासुदेवे भगवति रतिरुत्पद्यते कथम् । विना तद्द्वारभूतानां विभूतीनामुपासनम्॥ ६३ ॥
महावैकुण्ठलोकस्य सत्यलोक उदाहृतः । अंशभूतो हि वैकुण्ठः शुद्धसत्त्वगुणोद्भवः ॥
वैकुण्ठो ब्रह्मलोकश्च द्विधा भिन्नो महामते । वैकुण्ठो भगवान्विष्णुर्ब्रह्मलोको विधिः स्मृतः ॥६५॥
तत्र ब्रह्मा महाभागः परमैकान्तिको मतः । अधिकारावधिः प्राज्ञस्तदाज्ञां पालयन्स्थितः
वैकुण्ठस्थं हरिं साक्षात्सेवते रमया सह । अन्ते तस्मिन्निवसति महाभागवतो यतः ॥
ब्रह्मलोकं समाश्रित्य तिष्ठन्ति मुनयश्चिरम् । हैरण्यगर्भाः पुरुषा न्यासिनो विगतैषणाः ॥
तेभ्यो भगवतो भक्तिं संदिशन्त्यनपायिनीम् । अन्ते ते ब्रह्मणा सार्कं प्रविशन्ति परं पदम् ॥ ६९ ॥
महावैकुण्ठलोकस्य वैकुण्ठोऽयं महामते । महाविभूतिभूतश्च साक्षान्नारायणाश्रयः॥७०॥
इतश्च सनकादीनां शापाद्भूमिं गमिष्यतः । जयश्च विजयश्चोभौ द्वारपौ भगवानिव ॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम॥७२॥

श्वेतद्वीपाभिधं स्थानं द्वितीयं विष्टरं हरिः। परमैकान्तिनो यत्र सेवन्ते विगतैषणाः ॥
अनिन्द्रिया निराहाराः मुक्तास्ते चन्द्रवर्चसः। क्षणाक्षिपक्ष्मसंपातवियोगसहनाक्षमाः ॥
कर्मणां न गतिर्यत्र प्राकृतानां च देहिनाम्। न गतिर्योगिनां विप्र परमैकान्तिनां पदे ॥
श्वेतद्वीपाधिपं देवं श्रीवत्स सुकृतोज्ज्वलम्। विद्धि मे प्रकृतिं सूक्ष्मां चिन्तयामि निरन्तरम् ॥ ७६ ॥
द्वारकाद्या महापुर्यो वैकुण्ठांशसमुद्भवाः। परमैकान्तिनां सेव्या यत्राऽऽस्ते भगवान्स्वयम् ॥ ७७ ॥
परमैकान्तिनां स्थानं वासुदेवेऽखिलात्मनि। यो यस्य तस्य सोऽप्यस्ति किं बहूक्तेन पुत्रक ॥ ७८ ॥
वैष्णवः कर्मनिष्ठश्चेज्ज्ञानयोगसमन्वितः। अन्तर्यामिस्वरूपेण कर्मणा पूजयेद्धरिम् ॥
अन्तर्यामितया कर्म कुर्वतां कर्मिणामिह। ब्रह्मप्राप्तिर्विनिर्दिष्टा ब्रह्मानुध्यानतो द्विज ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥८१॥
विष्णोरङ्गतया ये च यजन्ते भुवि देवताः। तेऽपि तं यज्ञपुरुषं प्राप्नुवन्ति मनीषिणः ॥
एके भगवतो देवान्नित्यमावरणेषु च। उपासकास्ते कथिता वैष्णवा लोकपावनाः ॥
अनुसंधाननिरता ज्ञानिनो भगवत्पराः। परमैकान्तिनो ज्ञेया ह्यखण्डध्यानधारिणः॥८४॥
अकारत्रयसंपन्नाः परमैकान्तिनो मताः। धन्याः सुदुर्लभा लोके नित्यं तेभ्यो नमो नमः॥
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः
गृहस्थाश्च विरक्ताश्च आर्ताश्च प्रविभेदतः। प्रपन्ना भगवद्भक्ता द्विविधाः परिकीर्तिताः
त्यक्तलोका विरक्ताश्च न्यासिनो द्विजसत्तमाः। अद्वेषमाश्रिताः शान्ता मामेकं पुरुषोत्तमम् ॥ ८८ ॥
भजन्ति ध्यानयोगेन परिचर्यापरायणाः। त्रिदण्डिनः सोपवीताः शिखिनो जितमारुताः
उपासकाः कर्मिणश्च ज्ञानिनोऽपि द्विजोत्तमाः। गृहस्था बहवो जाता नारायणपदालयम् ॥ ९० ॥
ध्रुवस्तूपासनेनैव जनकः कर्मवर्त्मना। सनकाद्याश्च प्रह्लादो ज्ञानाद्यास्यन्ति सद्गतिम् ॥
भवन्तो यदि नैर्गुण्यं स्थानं मम मनोरमम्। कालव्यालविषास्पृष्टमखण्डं गन्तुमिच्छतः ॥ ९२ ॥
सांख्ययोगविनिर्धूतमायाजवनिका रतिः। संप्राप्तात्मगतिस्तात शरणं याहि सद्गुरुम् ॥
त्वं तु निर्मुक्तविषयो योगेन द्विजसत्तमः। मुच्यसे विषयासक्तः श्रीमदाचार्यसंश्रयः ॥
कृताचार्यभरस्यासौ सो नेहेताप्यन्यसाधनम्। किं न संप्राप्यतेऽभीष्टमसङ्गतिना यथा ॥
संप्राप्य दासवेषं त्वं भज मत्स्वामितामतिम्। मच्छेषतामुपादत्स्व पारतन्त्र्यं विचिन्तय ॥ ९६ ॥
नारायणपदाम्भोजं शरणं याहि मा चिरम्। प्रतिकूलजनावासं मनसाऽपि न संश्रय ॥
राजंस्त्वमपि संत्यक्तराज्यलक्ष्मीमदः सदा। अनुसंधत्स्व मामेकमात्मानं सर्वदेहिनाम् ॥
भोग्यान्तरमतिं त्यक्त्वा साधनान्तरसन्मतिम्। स्वातन्त्र्यमन्यशेषत्वं हित्वा मच्छरणो भव ॥ ९९ ॥

श्रीवत्सराजानावूचतुः—

जनकं सर्वलोकानामाधारममलद्युतिम् । कं यावः शरणं नाथ त्रैलोक्यैकगुरुं हरिम् ॥
अविज्ञातोऽपि भूतानामन्तर्यामितया स्थितः । देहेन्द्रियमनःप्राणान्संयोजयसि कर्मसु ॥
अतस्त्वमेव नौ देव मन्त्रराजं द्वयं तथा । चरमं वैष्णवं भावं देहि दीनार्तिभञ्जन ॥१०२॥

नारायण उवाच—

यद्येवं पावके ह्यस्मिंस्तीर्थभूते मदन्तिके । स्नातामाराद्वप्लुत्य भवन्तौ शरणागतौ ॥
तौ तथा चक्रतुस्तस्मिन्ह्रदे पावकसंज्ञके । स्वर्णघर्मानुवाकं च पावमानं तथैव च ॥१०४॥
पठन्तं पुरुषं कंचिद्ददृशाते घनप्रभम् । तौ सूक्ते दधतुस्तस्मात्तस्मिन्नेव जले तदा ॥
उद्धारणादमू तत्र श्रीविष्णोर्दिव्यपार्षदान् । समानवपुषः शान्तान्पीतकौशेयवाससः ॥
किरीटिनः कुण्डलिनः शङ्खचक्रगदाधरान् । मालिनो विशदस्मेरशिशिरीकृतलोचनान् ॥
भो भोश्चन्द्रप्रतीकाशहासभासितदिङ्मुखाः । के यूयमिह संविष्टाः किं जपन्तो निरामयाः ॥ १०८ ॥
ददृशतुः श्रियः सूक्तं पौरुषं सूक्तमुत्तमम् । जपतः परया भक्त्या तावूचतुरथो हि तान् ॥
किमिदं स्थानममलं मनो येन प्रसीदति । इति विज्ञातुमिच्छावो यदि योग्या ब्रुवन्तु नः

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते परमधर्मकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६८१ ॥

---

अथाष्टमोऽध्यायः ॥ ८ ॥

---

पार्षदा ऊचुः—

वयं भूचारिणो जीवाः कोटिकल्पानुचारिणः । भगवन्मायया रुद्धा ह्यासन्कल्पान्तरेषु च
नानाविधशरीराणि रचयन्तः स्वकर्मणा । उपर्यधस्ततो लोकांश्चरन्तो दुःखभागिनः ॥
कदाचिद्दैवयोगेन प्रबुद्धा ह्यभवन्पुरा । सङ्गो भागवतस्याऽऽसीद्येनेमां प्रापिता गतिम् ॥
शुभाशुभविभागेन लोकोऽयं द्विविधो मतः । शुभेन कर्मणा लोकः शुभोऽयमशुभोऽन्यथा ॥ ४ ॥
कर्मजन्यमिदं सर्वमनित्यं प्राकृतं द्वयम् । अद्वयं भगवद्धाम तृतीयं प्रकृतेः परम् ॥ ५ ॥
वैष्णवं लोकमित्याहुः सत्यं कर्मविवर्जितम् । उपासनैकलभ्यं तन्मुक्तनित्यैरुपाश्रितम् ॥
ज्ञानिनां प्रेमयुक्तानां परमैकान्तिनामसौ । नारायणो जनैर्गम्यः श्रुतवन्तो वयं ततः ॥
तदर्थमिह संप्राप्ताः श्रीमन्नारायणाश्रमम् । दीक्षां भागवतीं प्राप्य हरिं स्वेच्छानुसारतः
सेवया भो महाभागौ गता नः कालसंततिः । संप्राप्य रूपसादृश्यं मन्त्रराजप्रभावतः ॥
एके तस्य विहाराय वाञ्छन्ति द्रुमजन्मताम् । येषां पुष्पस्रजो देवो वक्षसा धारयिष्यति ॥ १० ॥
एके विहारभूमित्वमाकाङ्क्षन्ति मनीषिणः । श्रीमच्चरणविन्यासैर्दंपती विहरिष्यतः ॥
एके चन्दनकर्पूरकेशरादिविभूतयः । सेवितुं तत्र वाञ्छन्ति यत्र देवो रमापतिः ॥ १२ ॥

एके वीणामृदङ्गादिशय्यास्तरणभावनाम् । इच्छन्ति प्रेमवसतौ भगवत्प्रीतये सदा ॥
मयूरीभृङ्गविहगहंससारसकोकिलाः । इच्छामो भवितुं तत्र यत्र नैश्रेयसं वनम् ॥ १४ ॥
गायका नर्तकाश्चैव वादकाश्चानुभावकाः । वयं भवितुमिच्छामो दिव्यलीलासुधाम्बुधौ
वलयाङ्गदभृङ्गारमञ्जीररसना हरेः । पीतशैवालजम्बालवालुकाहर्मचत्वराः ॥ १६ ॥
कदाऽपि भगवत्सेवावियोगो नोपसर्पतु । इतिहेतोर्महाभागौ सूक्ते द्वे परिवर्तयन् ॥१७॥
तिष्ठामो न वयं विद्मो निवृत्ताः कति वासराः । स्थलं वैश्वानरं नाम वह्निबीजसमुद्भवम् ॥ १८ ॥
मन्त्रराजमविज्ञाय चक्रशङ्खाङ्कनं विना । विना सूक्तद्वयं नास्य सिद्धिर्भवति वैष्णवी ॥

श्रीवत्सराजानावूचतुः—

कृपया कथयध्वं नौ सूक्ते द्वे ब्रह्मसाधने । आराध्येते कथं चैते भगवत्पदसिद्धये ॥२०॥
किंनामनी च किंदेवे विनियोगः कथं तयोः । कथं चाऽऽराध्यते ताभ्यां भगवान्पुरुषोत्तमः ॥ २१ ॥

त ऊचुः—

एको नारायणो देवः श्रीमान्कमललोचनः । एका च परमा शक्तिः सर्वकार्यकरी हरेः ॥
अनन्तशक्तिसंपन्ना सा परा परमेश्वरी । संतिष्ठते सदा तस्मिन्स्वाश्रमे पुरुषोत्तमे ॥
शालिपोते यथा शालिरुष्णत्वं पावके यथा । तथा हरौ रमा साक्षात्प्रभेव शशिसूर्ययोः॥
नित्याऽनपायिनी शश्वद्विभिन्ना नैव दृश्यते । कारणे सर्वजगतामाधारे पुरुषोत्तमे॥२५॥
सर्गादौ भिद्यते रूपं तयोरेकं द्विधा कृतम् । पञ्चोपनिषदां चैकं नादात्मकमथापरम् ॥
नादात्मकं तु यद्रूपं तत्तु बीजद्वयात्मकम् । श्रीबीजं प्रणवं चैकं मूलाधारे प्रतिष्ठितम् ॥
प्रणवं पौरुषं बीजं विद्धि तत्त्वत्रयात्मकम् । श्रीबीजं तु श्रियः प्रोक्तं समस्तैश्वर्यसाधनम् ॥ २८ ॥
प्रणवावयवैः सृष्टिस्त्रिविधा द्विजसत्तम । स्वरा हलस्तथाऽन्तस्था नवभेदैः समन्विताः ॥
वासुदेवः संकर्षणः प्रद्युम्नो ह्यनिरुद्धकः । चत्वारः केशवाद्यास्तु द्वादश स्वरमूर्तयः ॥
एषा षोडशधा सृष्टिर्दया श्रीविष्णुरूपिणी । अकाररूपस्य हरेर्नित्येयं परमात्मनः ॥३१॥
हलस्तु प्रकृतेः सृष्टिरुकाराक्षरसंज्ञया । चतुर्विंशतिभेदेन कादिरूपा महात्मनः ॥ ३२ ॥
पञ्चविंशो मकारोऽयं पुरुषो नववर्णकः । एवं हि पौरुषे बीजे स्थितं वर्णात्मकं जगत् ॥
वासुदेवादिमूर्तीनां चतुर्णां शक्तयस्तु याः । तथैव च केशवादीनां द्वादशापि प्रकीर्तिताः॥
बीजभूतश्रियो रूपा विज्ञेया मन्त्रपारगैः । एवं षोडशधाभिन्नं श्रीबीजं नामतः शृणु ॥
लक्ष्मीर्गिरा रतिश्चोषा वासुदेवादिशक्तयः । श्रीर्लक्ष्मीः कमला पद्मा पद्मिनी कमलालया
रमा वृषाकपिर्धन्या पृथ्वी यज्ञा तथेन्दिरा । शक्तयः केशवादीनां संप्रोक्ता मुनिपुंगवैः ॥
उत्पत्तिस्थितिकर्तारौ बीजभूतौ सनातनौ । आत्मनो वाचकौ वाच्यौ पञ्चोपनिषदात्मकौ ॥ ३७ ॥

संहारे कारणाकारे नादे व्याकृतरूपिणौ । वाच्यावाच्याकृतौ लीनौ सर्वाधारे सनातने ॥
कार्यादौ निलये स्वस्य सृष्ट्वा विश्वं हृदम्बुजात् । प्रविष्टः प्राणरूपेण ह्यन्तर्यामितया तथा ॥ ४० ॥

नादातीतं परं ब्रह्म ह्यन्तर्यामितया स्थितम् । नादात्मकं शब्दमयं प्राणरूपेण संस्थितम् ॥
समष्टिव्यष्टिरूपेण ते रूपे परमात्मनः । प्रतिदेहं स्थितो व्यष्ट्या समष्ट्या परमे पदे ॥
छन्दोरूपं हरेः पार्श्वमासते संस्तुवन्नमुम् । तेनैव प्रोक्तवान्धर्मं परं चापरमेव च ॥ ४३ ॥
परं भागवतं धर्मं यन्निवृत्त्यात्मकं मतम् । प्रवृत्तिलक्षणं चान्यदपरं धर्ममुच्यते ॥ ४४ ॥
तद्धर्मपालनायाथ मुनिभूपतिभिर्मुनिः । स्थापयामास लोकानां हितैषी भगवान्हरिः ॥
कदाचिद्दंपती तौ तु रूपे द्वे परमाद्भुते । दधतुः कृपया भूयो मूलमन्त्रेण दृष्टये ॥४६ ॥
वाग्भिः षोडशभिर्लक्ष्मीः स्वरूपं जगृहे मुदा । अष्टादशात्मकं रूपं भगवान्भूतभावनः ॥
श्रीसूक्तं प्रथमं प्रोक्तं द्वितीयं पौरुषं मतम् । ऋषी तयोस्तु तावेव श्रीबीजं प्रणवं तथा ॥
छन्दोऽनुष्टुप्समाख्यातं देवते ते च दंपती । विनियोगस्तु सर्वत्र पुरुषार्थचतुष्टये ॥ ४९ ॥
सूक्तं मूर्तिपरं ब्रह्म सदोपास्यं मनीषिभिः । आभ्यामाराधयेद्देवं श्रीमन्नारायणं मुदा ॥
सर्वैरपि समाराध्यौ यद्यप्येतौ च दम्पती । वेदवाक्यैस्तथाऽप्येते सूक्ते साधारणे द्वयोः ॥
विष्णोराराधनार्थाय पौरुषं सूक्तमुत्तमम् । देव्या आराधनायैतच्छ्रीसूक्तं तु श्रिया कृतम् ॥
द्वे सूक्ते प्रातरुत्थाय स्मृत्वा मनसि दंपती । पठेदनन्यशरणः परमैकान्तितामियात् ॥
सूक्तयोरनयोस्तात प्रकारद्वयमुत्तमम् । उपधारय वक्ष्यामि यदि ते मनसि स्पृहा ॥ ५४ ॥
तुलामकरमेषे वा शुक्रवारे विशेषतः । अष्टमीदिनमारभ्य द्वादश्यन्तं प्रपूजयेत् ॥ ५५ ॥
क्षीराब्धितनयां देवीं रक्ताम्भोजनिवासिनीम् । महालक्ष्मीं महाविद्यां महाभयविनाशिनीम् ॥ ५६ ॥

नारायणाङ्कसंरूढां किशोरीं कनकप्रभाम् । त्रिजगन्मातरं गौरीं मातुलिङ्गधरां श्रियम् ॥
सप्तम्यां प्रातरुत्थाय गुरुं नत्वा विधानतः । अनुज्ञां देहि भगवन्महालक्ष्म्याः प्रसाधने ॥
संपादय महाभाग मण्डपं मणिवेदिकाम् । पूजाद्रव्याणि सर्वाणि कुण्डं च यजनाय वै ॥
दत्तानुज्ञस्तु गुरुणा मन्त्रस्नानं विधाय च । प्रणयेत्षोडशस्तम्भं मण्डपं वेदिकोज्ज्वलम् ॥ ६० ॥

वरयेद्ब्राह्मणाञ्शुद्धान्महाभागवताञ्शतम् । पाठार्थं तु महादेव्याः सूक्तं वै लक्षपाठतः ॥
पाठयेत्परया भक्त्या अष्टम्यादिदिनत्रयम् । पञ्चामृतेन संस्नाप्य पूजयित्वाऽर्हणोत्तमैः ॥
पायसेन तु नैवेद्यं पक्वान्नैर्विविधैस्तथा । गन्धपुष्पाक्षतैश्चैव स्तवनीराजनादिभिः ॥ ६३
रात्रौ जागरणं कुर्यान्नृत्यगीतमहोत्सवैः । एकादशीमथाऽऽरभ्य वह्निकार्यं समाचरेत् ॥
दशांशेन प्रजुहुयान्मूलमन्त्रेण वाग्यतः । लक्षं प्रजुहुयाद्वाऽपि पायसेन हविष्यभुक् ॥६५॥
द्वादश्यां पूजयेत्सर्वं वैष्णवान्भोजयेद्द्विजान् । अङ्गावरणसंयुक्तां सयानायुधभूषणाम् ॥
पूजयेत्परया भक्त्या महालक्ष्मीमनन्यधीः । सर्वान्कामानवाप्नोति निष्कामो मोक्षमाप्नुयात् ॥ ६७ ॥

प्रणवादिमृचं सम्यग्लक्ष्मीसूक्तस्य वैष्णवः । कल्पयेद्यजने देव्याः क्रमादावाहनादिषु ॥

वेद्यां प्रकल्पयेत्पीठं तत्र पद्मं तु संलिखेत् । पूरयेद्विविधैर्वर्णैस्तद्विधिं चावधारयेत् ॥
भक्ते षोडशधा क्षेत्रे चतुर्भिर्मध्यमैः पदैः । प्रागादिकैः प्रकारैश्च विदधीत नवाम्बुजम् ॥
मध्यमं कमलं कार्यमष्टपत्रं यथा शृणु । चतुर्धा भ्रामयेत्सूत्रं वर्जयित्वाऽष्टमं बहिः ॥
पद्मसंधिस्थसूत्रेण दिक्क्रमेण दलाष्टकम् । पद्मान्तराणामष्टानामेवमेवविधिर्भवेत् ॥ ७२॥
कर्णिकाकेशरं पत्रं संधिपत्रमिति क्रमात् । सूत्राणामन्तरे भूयः क्षिपेत्सूत्राष्टकं तथा ॥
बहिर्द्वारयुतं कार्यं कोणशोभादिसंयुतम् । चतुर्वर्णं रजोपेतं नवपद्मं प्रकल्पयेत् ॥ ७४ ॥
तस्मिन्नावाहयेल्लक्ष्मीमन्तर्यागं विधाय हि । हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥
घटे सुवर्णघटिते राजते ताम्रजेऽपि वा । मृन्मये वाऽपि संपूर्णे दध्ना क्षीरेण वारिणा ॥
तत्र मामच्युतोत्सङ्गे निविष्टां पद्ममालिनीम् । शरच्चन्द्रसुधासारशिशिरस्मेरशोभिताम्॥
अनिर्देश्यामनौपम्यामनन्तां विश्वभाविनीम् । आमोदमिव पुष्पाणां दिविस्थानां प्रभामिव ॥ ७८ ॥
विनिष्क्रान्तुमशक्यां तामनन्यां पुरुषोत्तमात् । नित्यानपायिनीमेव भावयित्वा निजान्तरे ॥ ७९ ॥
प्रसन्नवदनां गौरीं किशोरीं कमलालयाम् । चतुर्भुजाम्बुजकरां मातुलिङ्गकरद्वयाम् ॥
पद्मगर्भनिभां कान्तामसितायतलोचनाम् । स्फुरत्कटककेयूरहारकुण्डलमण्डिताम् ॥
गम्भीरनाभीत्रिवलीविभूषिततनूदराम् । सुकर्कशदृढोत्तुङ्गपीनवृत्तघनस्तनीम् ॥ ८२ ॥
चरद्विरेफपटलसमाक्रान्तालकावलीम् । आरक्ताधरबिम्बान्तर्लसन्मुक्ताफलद्विजाम् ॥
अर्धचन्द्रललाटस्थराजमानविशेषकाम् । सर्वलक्षणसंपन्नां कृष्णकुञ्चितमूर्धजाम्॥ ८४ ॥
वरदां पङ्कजकरां पद्ममालाविभूषिताम्। विष्णुवामभुजाश्लिष्टां भक्ताभीष्टप्रदायिनीम् ॥
ध्यात्वा मां संमुखं कुर्यान्मन्त्रमूर्तिं सनातनीम् । घटस्थहेममूर्तौ तामानयेत्पद्ममालिनीम्
ऋग्भ्यां हिरण्यपूर्वाभ्यां प्रपद्येत हरिप्रियाम् । सान्त्वयेच्च पराभ्यां चैतदभेदेन संस्थिताम् ॥ ८७ ॥
पञ्चम्या च प्रपन्नोऽयं प्रसन्नां भावयेद्धिया । ततस्तामसितापाङ्गीमावाहनपुरःसरम् ॥
मुद्राणां पञ्चकेनैव मूलमन्त्रेण मन्त्रवित् । यजेज्ज्वलनसूर्येन्दुमण्डले कमलालयाम् ॥
करन्यासं विना देहन्यासं देव्याः समाचरेत् । ऋग्भिः सूक्तस्य मूलेन युक्ताभिः क्रमशोऽभ्यसेत् ॥ ९० ॥
स्नानपीठे समारोप्य पाद्यार्घाचमनीयकम् । मधुपर्कं प्रदद्यात्तु दन्तकाष्ठादिपूर्वकम् ॥
सुगन्धतैलसंसिक्तां मुहुस्तेन समन्विताम् । कुर्यादानन्दिनीं देवीं दीप्त्या दारय(?)तीं तमः ॥ ९२ ॥
ततो नानाविधैः स्नानैः सर्वौषधिसमन्वितैः । कषायगन्धदूर्वोदकुशोदकनकोदकैः॥ ९३ ॥
तीर्थोदकैश्च शुद्धोदैस्तथा पञ्चामृतेन च । संस्नाप्य परमेशानीं सुगन्धोद्वर्तनेन ताम् ॥
उष्णोदकेन संस्नाप्य केशान्संशोध्य मुद्रया । पुनराचमनं दत्त्वा वस्त्रेणाङ्गं प्रमृज्य च ॥
वस्त्रैर्नानाविधैर्देवीं भूषणैर्विविधैस्तथा । सिन्दूरालक्तकालेयलीलाञ्जनमुखैर्यजेत् ॥

प्रतिस्नानं प्रदातव्यं पाद्यार्घ्याचमनादिकम् । निमित्तके विशेषेण विभवे सति सर्वदा ॥
गन्धं तैलं च चूर्णं च शालिगोधूमसंभवम् । हरिद्राचूर्णसंमिश्रमीषत्पद्मकभावितम् ॥
उद्वर्तनार्थेनोदेन स्नानार्थं शालिसंयुतम् । उष्णाम्बुचन्दनं चन्द्रश्रितं लेपनार्थकम् ॥
क्षीरं दधि घृतद्रव्यं मध्वैक्षवरसस्तथा । सुगन्धामलकाम्भश्च लोध्रतोयं ततः परम् ॥
रक्तचन्दनतोयं च रजनीवारि चोत्तमम् । ग्रन्थिपर्णपयः पश्चात्ततश्च तगरोदकम् ॥१०१॥
प्रियंगुजटिलाम्भश्च तथा सर्वौषधीजलम् । पत्रपुष्पफलाम्भांसि बीजगन्धोदकं तथा ॥
हेमरत्नसरित्तीर्थकेवलाम्बूनि च क्रमात् । स्नानीयाम्बुसमेतानि देयान्यम्बून्यमूनि तु ॥
स्नातशिष्टाम्बुसंपूर्णं हरिद्राशालिसंभृतम् । स्रगादिसंयुतं कुम्भं हस्ते कृत्वा परत्र तु ॥
सिद्धार्थैर्धूपवत्पात्रं धारयित्वा तु मूर्धनि । बहिः क्षिपेत्ततो दद्यात्सुधौते चाङ्गशाटिके ॥
केशोदकापकर्षार्थमम्बरं देहवारिहृत् । अन्तरीयोत्तरीये द्वे सुधौते वाससी शुभे ॥ १०६ ॥
भाविते गन्धधूपेन दद्याद्भद्रासनं ततः । अलंकारासनं पश्चाद्देयं देव्यै मृदूत्तमम् ॥
तत्र सर्वं प्रदातव्यमर्घपाद्यादि पूर्ववत् । विवेचनं तु केशानां कङ्कतेन प्रशोधनम्॥१०८॥
तैलेन मर्दनं मूर्ध्नस्ततश्चूडोपकल्पनम् । अलंक्रिया तु कर्तव्या मूलेन मनुना पृथक् ॥
कुङ्कुमागुरुकस्तूरीकर्पूरक्षोदमिश्रितम् । चन्दनं तु प्रदातव्यं शीतलं सुखवर्धनम् ॥ ११०॥
स्रजो नानाविधा देयाः सात्त्विकैः कुसुमैश्रिताः । अङ्गरागं च हृदये दद्यादञ्जनमीक्षणे॥
सीमन्तालंकृतिं कुर्यादादर्शं दर्शयेत्ततः । चामरव्यजने छत्रं गजांश्च परितो न्यसेत् ॥
ज्वलदङ्गारनिचये कृष्णागुरुमनिन्दितम् । दाहयेद्धूमधाराभिर्दिक्प्रान्तमधिवासयन् ॥
ज्वालयेत्परितो दीपान्गव्याज्येन मुदाऽन्वितः। नैवेद्यं पायसं शुद्धं राजते भाजने कृतम् ॥
घृतशर्करयोपेतं सिताखण्डैरलंकृतम् । अपूपमोदकामीष्टशाकराजिविराजितम् ॥ ११५॥
हेमपात्रगतं नीरमुशीरशशिवासितम् । एलाचूर्णमहामोदमोदितं विनिवेदितम् ॥११६ ॥
अवैष्णवजनास्पृष्टमनवेक्ष्यमवैष्णवैः । नीराजनादिना पूतमभूमिस्थं निवेदयेत् ॥११७ ॥
धेन्वाऽमृतीकृतं द्रव्यं प्रोक्षितं प्रोक्षणोदकैः । मूलेन पुटितं चैव अस्त्रेणैवाभिरक्षितम् ॥
तुलसीमिश्रितं सर्वं घण्टां वामेन वादयन्। निवेदयामि मन्त्रान्ते प्राणाहुतिमथाऽऽचरेत्
किंचित्किंचिन्मुखे देयं ततः कवलमुद्रया । ध्यायन्सावरणां देवीं नारायणकृताश्रयाम् ॥
ततश्चान्तःपटं दत्त्वा श्रीसूक्तं प्रजपन्बहिः । मूलं षोडशवारेण मध्ये नीरं निवेदयेत् ॥
दृष्टिदोषविघातार्थं दीपं पिष्टेन निर्मितम् । भ्रामयेत्सर्षपैर्युक्तं मुदा प्रोत्तानपात्रगम् ॥
भोजनं भावयित्वाऽथ दत्त्वाऽऽपोशनमुत्तरम् । करोपमर्दनं देयं सुगन्धद्रव्यसंयुतम् ॥
स्वस्थाने स्थाप्य देवेशं ताम्बूलं पूगपूरितम् । प्रदेयं परया भक्त्या मुखवासनकं परम् ॥
ततो मालां महालक्ष्म्यै तुलसीकुसुमोज्ज्वलाम् । कुसुमाञ्जलिमादाय दद्याच्छिरसि पादयोः ॥ १२५ ॥

प्रदक्षिणानमस्कारक्षमापणगुणस्तवैः । प्रतोष्य परया भक्त्या निवेद्याथ मनोरथम् ॥
संभोज्य परमान्नेन भक्त्या भागवतान्नरान् । द्वादश्यां दक्षिणां दद्याद्गुरुं संपूजयेत्ततः ॥
एवं कृते महादेव्याः समाराधनकर्मणि । अत्येतिदुष्कृतान्घोरान्परमानन्दभाग्भवेत् ॥

इति श्रीवृद्धब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते मुक्तात्रिर्भावे महालक्ष्मी-
समाराधनं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ ८०८ ॥

---

अथ नवमोऽध्यायः ।

---

पार्षदा ऊचुः—

व्रतं देव्याः प्रवक्ष्यामो वार्षिकं ह्यष्टरात्रिकम् । सर्वेषामधिकारोऽस्ति वैष्णवानां विशे-
षतः ॥ १ ॥
अकृत्वा तु व्रतं देव्या मासि भाद्रपदे सिते । तामसीं योनिमाप्नोति दारिद्र्यमधिग-
च्छति ॥ २ ॥
शुक्लाष्टमीं समारभ्य जनः प्रौष्ठपदस्य हि । दंपतीपूजनं कुर्याद्घटस्थापनपूर्वकम् ॥ ३ ॥
लक्ष्मीणां षोडशं पूज्यं केशवादिसमन्वितम् । प्रत्येकमेकमतिमाश्रयमङ्गलघोषणैः ॥
विधिं तस्य प्रवक्ष्यामो जीवानां हितकाम्यया । यस्यानुष्ठानमात्रेण श्रीविष्णोर्वल्लभो
भवेत् ॥ ५ ॥
शक्तयः केशवादीनां द्वादशानां पृथक् पृथक् । चतस्रो ह्यनिरुद्धादिशक्तयः समुदाहृताः
एकैका प्रत्यहं पूज्या क्रमात्तत्पतिना सह । ऋचा त्वैकैकया तत्तन्नाममन्त्रेण पूजयेत्॥७॥
कुर्यात्षोडशधा शुद्धिमात्मनः साधकोत्तमः। उपचारैः षोडशभिः पृथग्भूताः प्रपूजयेत्॥
अथ वा प्रत्यहं पूज्याः षोडश विष्णुवल्लभाः।महाराजोपचारेण यावत्कृष्णाष्टमी भवेत्॥
वरयेत्पुंप्रकृत्योस्तु द्वयं षोडशसंख्यया । संपूज्य भोजयेद्भक्त्या परमान्नेन वैष्णवः ॥
प्रदक्षिणानमस्कारदक्षिणाभरणादिभिः । प्रतोष्य सूक्तपाठं तु कारयेद्विभवे सति ॥११॥
यथा षोडशसंख्याकदिवसैर्लक्ष्यतामियात् । अयुतं पाठयेद्वाऽपि प्रत्यहं वा शतं शतम् ॥
न त्यजेत्पाठमेकं तु भयेऽपि समुपस्थिते । पाठाभावे प्रजप्तव्यं श्रियो मन्त्रं षडक्षरम् ॥
तेनैव पूजयेद्देवीं परिवारसमन्विताम् । पूजार्थमथ नामानि तासां वक्ष्यामि तच्छृणु ॥
श्रीर्लक्ष्मीः कमला पद्मा पद्मिनीकमलालया । रमा वृषाकपिर्धन्या पृथ्वी यज्ञा तथे-
न्दिरा ॥ १५ ॥
शक्तयः केशवादीनां महालक्ष्म्यंशमूर्तयः । उषा रतिर्गिरा देवी लक्ष्मीर्ज्ञेयातु षोडशी
एवं षोडशध भिन्ना महालक्ष्मीस्तु या स्मृता । सा तु सप्तदशी ज्ञेया निर्मला कारणा-
त्मिका ॥ १७ ॥
प्रथमे दिवसे देवी श्रीसंज्ञा केशवप्रिया । समाराध्या घटे वेद्यामास्थिते मन्त्रपूजिते ॥

द्वितीये दिवसे लक्ष्मीर्नारायणकृतालया । तृतीये कमला देवी माधवेन समन्विता ॥
चतुर्थदिवसे पद्मा गोविन्दकृतकेतना । पञ्चमे पद्मिनी पूज्या विष्णुना कमलालया ॥
मधुसूदनसंयुक्ता षष्ठे सप्तमके रमा । त्रिविक्रमेण संपूज्या वृषाकपिरथाष्टमे ॥ २१ ॥
वामनेन समं पूज्या नवमे श्रीधरेण च । धन्यानाम्नी समाराध्या पृथ्वी तु दशमे यजेत् ॥
हृषीकेशेन यज्ञाख्या पद्मनाभेन रुद्रके । इन्दिरा द्वादशे पूज्या दामोदरकृताश्रया ॥२२॥
त्रयोदश उषा देवि अनिरुद्धेन संयुता । प्रद्युम्नेन रतिस्त्विन्द्रे गिरा संकर्षणेन हि ॥
षोडशे दिवसे प्राप्ते सुधीर्लक्ष्मीं निशामुखे । पूजयेद्वासुदेवेन कृतेन मनुना मुदा ॥२५॥
कदलीस्तम्भसंवीते नववस्त्रविभूषिते । मण्डपे पूजयेद्देवीं दिक्षु दिग्गजमण्डिते ॥ २६ ॥
अथ बिल्ववने देवीं चतुर्बाहुसमन्विताम् । चामरैर्वीज्यमानां च सिक्तामेनां कुशाम्बुभिः ॥ २७ ॥
त्रिपाद्विभूतिनिलयां भूलीलाभ्यामुपासिताम् । महालक्ष्मीं सप्तदशीं महाविष्णोश्च संनिधौ ॥ २८ ॥
कलाभिश्च कलाभिश्च पूर्वोक्ताभिः समन्ततः । स्वयं सप्तदशी तत्र स्वाश्रया परमेश्वरी ॥
नित्यमुक्तैर्जनैर्गुप्ता लोकपालाङ्गनागणैः । आनन्दकन्दकमले निषण्णा ज्ञाननालिके ॥
स्फुटत्प्रकृतिपत्रे च विकारमयकेसरे । मातृकाकर्णिके पूर्णपरानन्दमधुव्रते ॥ ३१ ॥
परमात्मात्मान्तरात्मज्ञानात्मपरिवारिते । दिव्यतेजस्त्रयोपेते लक्ष्मीबीजवराटके ॥ ३२ ॥
महामाया महाविद्या महायोगिन्यधीश्वरी । महालक्ष्मीर्महादेवी महाशक्तिर्महेश्वरी ॥
सर्वाधारमयी शान्ता कान्ता विष्णोर्यशस्विनी । दिव्यायुधधरा देवी शङ्खचक्रगदाब्जभाक् ॥ ३४ ॥
यस्या अंशकलाभिश्च त्रिगुणाः कोटिशक्तयः । स्वयं तु निर्गुणा शक्तिर्नादातीता पराभिधा ॥ ३५ ॥
मत्स्यादिशक्तयस्तत्र सात्विक्यः कार्यलक्षणाः । उमाद्यास्तमसोद्रिक्ता गायत्र्याद्यास्तु राजसाः ॥ ३६ ॥
पालिका नाशिकास्त्वन्या जगदुत्पादनक्षमाः । ताभिः स्वांशकलाभिश्च सेव्यते परमे पदे
अप्राकृताभिर्नित्याभिः केशवादिकशक्तिभिः । दिव्यसृष्टिप्रसूताभिरप्रसूता समर्च्यते ॥
या कालकलनातीता गीता या सामगायकैः । उमादितामसीनां तु भैरवी कालिकादयः
शक्तयः कोटिशः सन्ति यावत्यः पिशिताशनाः । मद्यप्रियाः करालास्याः श्मशानकृतकेतनाः ॥ ४० ॥
निष्कामैर्वा सकामैर्वा वैष्णवैर्न निरीक्षिताः । सात्विक्यस्तु सदोपास्या वैष्णवैर्विष्णुना समम् ॥ ४१ ॥
तत्र दुर्गा सकामैस्तु कृष्णाधिष्ठातृदेवता । निष्कामैर्वैष्णवैः सेव्या महालक्ष्मीर्हरेः प्रिया
नन्दगोपगृहे जाता यशोदागर्भसंभवा । किंचित्कार्यं समुद्दिश्य गोपवृद्धैस्तु पूजिता ॥
गोपीभिः कृष्णकामाभिः कृष्णाल्लब्धवरा यतः । सूते सर्वार्थनिचयं जनैराराधिता सती

सकामैर्वैष्णवैश्चाथ विष्णोराज्ञापुरःसरम् । सात्विकैरुपहारैश्च चक्राद्यष्टभुजायुधा ॥
एकान्तिमस्तु लक्ष्मीशं सेवन्ते रमया सह । दीयमानं न गृह्णन्ति सालोक्यादिचतुष्टयम् ॥
सर्वविद्यामयी साक्षान्निर्गुणा परमे पदे । महालक्ष्मीर्महामाया पूजनीया हि षोडशे ॥
तस्या ध्यानं प्रवक्ष्यामि ह्यभिषेकविधिं तथा । कृते यस्मिन्समाप्नोति शाश्वतं पदमुत्तमम्
विरजायाः परे पारे निर्गुणे परमे पदे । नित्ये निरत्यये रम्ये प्राकृतैः परिवर्जिते ॥ ४९ ॥
नित्यानन्दमहाधाम्नि वनं दिव्यं विचिन्तयेत् । सर्वैश्वर्यबलज्ञानमयमूरुहमण्डितम् ॥५०॥
चम्पकाशोकपुंनागपाटलैरुपशोभितम् । लवङ्गमाधवीबिल्वदेवदारुसमेरुभिः ॥ ५१ ॥
मन्दारपारिजाताद्यैः कल्पवृक्षैः सपुष्पकैः । चन्दनैः कर्णिकारैश्च मातुलुङ्गैश्च वञ्जुलैः ॥
दाडिमीलिकुचाङ्कोलैः पूगैः कुरवकैरपि । कदलीकुन्दमन्दारनालिकेरैरनुत्तमैः ॥ ५३॥
मालतीमल्लिकाजातिकेतकीशतपत्रकैः । बासन्तीतुलसीनन्द्यावर्तैर्दमनकैरपि ॥ ५४ ॥
सर्वर्तुकुसुमोपेतैर्नमद्भिरुपशोभितम् । मन्दमारुतसंभिन्नकुसुमामोदि दिङ्मुखम् ॥ ५५ ॥
तन्मध्ये तटिनीतीरं महामन्दारमण्डलम् । सुवर्णकमलोद्यानभ्रमद्भ्रमरनादितम् ॥ ५६ ॥
मुकुदोत्पलकह्लारपङ्ककजैरुपशोभितम् । मारुतोद्धूननोद्भूतमकरन्दघनोदयम् ॥ ५७ ॥
कूजद्विहङ्गसंनादमुखरीकृतदिङ्मुखम् । तत्र रत्नमयी भूमिः कोटियोजनविस्तृता ॥
कोटिसूर्येन्दुवह्नीनां प्रभा यत्र विलीयते । तत्र श्रीमन्दिरं दिव्यं चतुर्द्वारसमावृतम् ॥५९॥
नित्यसिद्धजनैर्नित्यं कृतसंस्कारमुज्ज्वलम् । रत्नोपक्लृप्तसंशोभिकपाटाष्टकसंपुटम् ॥६०॥
नवरत्नसमाक्लृप्ततुङ्गगोपुरतोरणम् । हैमदण्डशिखालम्बिध्वजावलिपरिष्कृतम् ॥ ६१ ॥
नवरत्नसमाबद्धस्तम्भराजिविराजितम् । सहस्रदीपसंयुक्तं दीपदण्डविराजितम् ॥ ६२ ॥
तप्तहाटकसंक्लृप्तवातायनमनोहरम् । नानावर्णशुकाबद्धसुवर्णध्वजकोटिभिः ॥ ६३ ॥
किङ्किणीमालिकायुक्तपताकाभिरलंकृतम् । जातरूपमयै रत्नविचित्रैरतिविस्तृतैः ॥ ६४॥
माणिक्यवज्रवैडूर्यस्वर्णमालावलीयुतैः । अन्तरान्तरसंबद्धरत्नैर्दृष्टिमनोहरैः ॥ ६५ ॥
विचित्रैश्चित्रवस्त्रैश्च वितानैरुपशोभितम् । सर्वरत्नसमायुक्तं हेमकुट्टिममुज्ज्वलम् ॥६६॥
केतकीमालतीजातीचम्पकोत्पलकेसरैः । मल्लिकातुलसीकुन्दनन्द्यावर्तकदम्बकैः ॥ ६७ ॥
एतैरन्यैश्च कुसुमैरलंकृतमहीतलम् । अब्जकाश्मीरकर्पूरमृगनाभितमालकैः ॥ ६८ ॥
चन्दनागरुकङ्कोलैर्विमोहितादिगन्तरम् । एवं संचिन्त्य मनसा मण्डपं सुमनोहरम् ॥६९॥
तन्मध्ये भावयेन्मन्त्री पारिजातं मनोहरम् । तस्याधस्तात्स्मरेन्मन्त्री रत्नसिंहासनं महत् ॥
तस्मिन्सिंहासने देव्या यन्त्रं संचिन्तयेन्मुदा । षट्कोणाष्टदलं बाह्ये भूपुरद्वारसंयुतम् ॥
मध्ये तु भावयेद्बीजं रमायाः प्रणवान्तरम् ॥ ७२ ॥

तस्मिन्सुधांशुशतदीधितिशुद्धहासामाशागजैरुभयतः परिषिच्यमानाम् ।
ब्रह्मादिदेवरमणीमणिगीतकीर्तिं संकल्पकल्पितदयार्द्रकटाक्षपाताम् ॥ ७३ ॥

दाहाभिभूतहतदोषहिरण्यवर्णां कर्णान्तपातिनयनाम्बुजवीक्षणीयाम् ।
संकल्पनिर्गतमुखाम्बुजमुग्धगन्धमत्तालिजालमुखरीकृतगण्डसीमाम् ॥ ७४ ॥

मुक्ताच्छगुच्छधवलीकृतकर्णमूलां मूलं मनोजविकृतेः पुरुषोत्तमस्य ।
सत्पद्मरागमणिकल्पितकर्णपूरां पूरायितामतिसुखोदसरिद्वरायाः ॥ ७५ ॥

भ्रूवल्लितर्जितरतीशमदामदान्तदूरातिदूरपदपल्लवमुग्धशोभाम् ।
स्निग्धालकालिजितसालिसरोजभास्वदास्यामनन्यमतिसंश्रितपद्मनाभाम् ॥ ७६ ॥
अर्धेन्दुमण्डलललाटतटोदिताभमाणिक्यभूषणमयाच्च विशेषकामाम् ।
निर्भिन्ननीलमणिभङ्गविभिन्नकान्तिजालाभिरामकचभारलसच्छिरस्काम् ॥ ७७ ॥
सीमन्तगर्भविनिविष्टसितांशुतारधारापगापपरिमार्जितकृष्णताराम् ।
चूडाग्रबद्धमणिनद्धविभूषणार्चिर्भास्वन्मयूखविकचीकृतहृत्सरोजाम् ॥ ७८ ॥
नानामणिप्रकरमण्डितकम्बुकण्ठीमुन्निद्रकान्तिचयमौक्तिकदामशोभाम् ।
स्वर्णारविन्दमुकुलोन्नतकुङ्कुमोत्थदिव्याङ्गरागपरिमृष्टकुचप्रदेशाम् ॥ ७९ ॥
हेमारविन्दवलयाङ्गदबाहुयुग्मां सन्मातुलुङ्गविलसद्द्वयपाणिपद्माम् ।
क्षामोदरोपरिलसत्त्रिवलीतरङ्गामङ्काधिरूढपुरुषोत्तमकेलिहस्ताम् ॥ ८० ॥
काञ्चीकलापमुखरीकृतमध्यभागां मारावबोधननिरूपितनूपुरामाम् ।
पादारविन्दविगलन्मकरन्दबिन्दुसंमोहितालिमुनिवृन्दसुगीतगीताम् ॥ ८१ ॥
एवं विचिन्त्य जलजातकृताधिवासां वैकुण्ठनाथरमणीमनुनीय वाचा ।
यन्त्रे निवेश्य कुसुमाञ्जलिना सखीभिः सीमन्तिनीभिरभितः परितोषणीया॥८२॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते सूक्ताविर्भावे महालक्ष्मी-
समाराधनं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ ८९० ॥

---

अथ दशमोऽध्यायः ।

---

द्वारेषु पाठकाः स्थाप्या द्वौ द्वौ देव्यभिषेचने । लक्ष्मीसूक्तं प्रजप्तव्यं यावत्स्यादभिषे-
चनम् ॥ १ ॥
आवाहनादिकं कृत्वा भद्रपीठे हरेः प्रियाम् । सनिवेश्य वरारोहां सूक्तन्यासं समाचरेत्॥
शरीरे स्वस्य देव्याश्च भूतशुद्धिपुरःसरम्। मन्त्रन्यासं सबीजं च जितवाग्विमलाशयः ॥
स्थापयेत्कलशं भक्त्या ह्यभिषेचनिकं परम् । शतैकं षोडशाष्टौ च कार्यमुद्दिश्य भक्तितः
एकमेव तथा कुम्भं निष्कामो नित्यकर्मणि । कृत्वा नवपदात्मानं मण्डलं यन्त्रभूषितम्॥
कलशान्स्थापयेत्तेषु पदेषु शुभलक्षणान् । मूलेनावेक्षणं कुर्यात्प्रोक्ष्य चास्त्रेण वर्मणा ॥
रक्षणं सर्वतः कृत्वा क्षालनं चास्त्रतो जलैः । संनिवेश्य कुशाधारे वक्त्रं नैव पिधापयेत्
ध्यात्वा तत्र महालक्ष्मीं कलशान्पूजयेत्क्रमात्। चन्दनालिप्तसर्वाङ्गान्दूर्वाक्षतसमन्वितान्
दुकूलवेष्टितान्सर्वान्पूरयेत्तीर्थवारिभिः । नवरत्नसमाबद्धं पङ्कजं स्वर्णनिर्मितम् ॥ ९ ॥
मध्यकुम्भे क्षिपेद्धीमान्भक्त्याकर्षप्रमाणकम् । वित्तशाठ्यं न कुर्वीत पटे वा चन्दनैर्लिखेत्
मूलेन पूरयेत्तत्र चौषधीर्देवतामयीः । चन्दनोशीरकर्पूरजातीकक्कोलकुङ्कुमम् ॥ ११ ॥
कोष्ठागरुतमालैलायुतं संपिष्य भागतः । विलोड्य सर्वकुम्भेषु रत्नान्यपि विनिक्षिपेत् ॥
लक्ष्मीं दूर्वां सदाभद्रां सदादेवीं मधुव्रताम्। मुशलीं शक्रवल्लीं च कृत्वाऽपामार्गपत्रकम्

प्रियङ्गुमुद्गगोधूमव्रीहींश्च सतिलान्यवान्। शालितण्डुलमाषांश्च तेषु प्रक्षाल्य निक्षिपेत् ॥
धात्रीलकुचबिल्वानां कदलीनालिकेरयोः। फलान्यपि विनिक्षिप्य पुष्पाण्येतानि निक्षिपेत् ॥ १५ ॥

पद्मं सौगन्धिकं जातीं मल्लिकां बकुलं तथा । चम्पकाशोकपुंनागतुलसीकेतकोद्भवम् ॥
पल्लवानि वटाश्वत्थप्लक्षोदुम्बरशाखिनाम् । ब्रह्मकूर्चं विनिक्षिप्य शरावैः सफलाक्षतैः ॥
पिधाय कुम्भवक्त्राणि क्षौमैराच्छादयेत्ततः । आवाह्य मध्यकलशे महालक्ष्मीं प्रपूजयेत् ॥
पूर्वोक्तस्नानसंपन्नां वस्त्रालंकृतिभूषिताम् । निषण्णां भद्रपीठे तु स्वस्तिवाचनपूर्वकम् ॥
षोडश ब्राह्मणास्ते तु कुशैर्बिल्वदलैस्तथा । दूर्वातुलसिकापत्रैः श्रीसूक्तैः परमेश्वरीम् ॥
कुर्युः सुमङ्गलीगीतैरभिषिक्तां महोत्सवैः । अभिषिच्य महादेवीं परिवारसमन्विताम् ॥
अलंकुर्याद्विभूषाभिर्धूपदीपादिभिस्तथा । रात्रौ जागरणं गीतनृत्यवाद्यस्तवादिभिः ॥
षोडशीपूजनं चैव षोडशे दिवसे स्मृतम् । सहस्रनामभिस्तैस्तैः पुष्पैर्बिल्वदलाक्षतैः ॥
दूर्वाभिः कुङ्कुमाक्ताभिरवकाशे पृथक्पृथक् । पूजयेद्विष्णुना साकं नाकं पश्यति कर्हिचित् ॥ २४ ॥

य एवं वार्षिकीं पूजां कुर्यात्प्रयतमानसः । विनाऽप्यावरणान्यङ्ग देव्याः संपूजयेत्क्रमात्
हस्तप्रक्षालनं कृत्वा प्रदेयः कुसुमाञ्जलिः । हृदयादिमहामन्त्रैर्हृदयादीन्समर्चयेत् ॥ २६
प्रथमावरणं ह्येतच्छ्रियः प्रोक्तं मनीषिभिः । दलेष्वष्टसु संपूज्या आद्याश्चाष्ट विभूतयः ॥
दलाग्रेषु च संपूज्याः कार्याद्या अग्निकोणतः । द्वितीयावरणं ह्येतन्महालक्ष्म्याः समीरितम् ॥ २८ ॥

उमाद्याः संधिषु तथा संपूज्याः प्रयतात्मना । उमा च श्रीसरस्वत्यौ दुर्गा च धरणी तथा ॥ २९ ॥

गायत्री देव्युषा चेति पद्महस्ताः समन्ततः । तृतीयावरणं ह्येतत्ततो मत्स्यादिशक्तयः ॥
वेदा वेदवती धात्री महालक्ष्मीः सुखालया । भार्गवी च तथा सीता रेवती रुक्मिणी प्रभा ॥ ३१ ॥

मत्स्यकूर्मादिमूर्तीनां शक्तयः संप्रकीर्तिताः । चतुर्थावरणं ह्येतद्गङ्गा सूर्यसुता ततः ॥
शङ्खपद्मनिधी पूज्यौ पार्श्वयोर्धृतचामरौ । धृतातपत्रं वरुणं पूजयेत्पश्चिमे ततः ॥ ३३ ॥
संपूज्य राशीन्परितो यजेदथ नवग्रहान् । अर्चयेद्दिग्गजान्दिक्षु चतुर्दन्तविभूषितान् ॥
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च ते क्रमात् ॥
इति षष्ठे सप्तमे च दिक्पालान्पूजयेत्क्रमात् । एवमावरणैर्देवीं महालक्ष्मीं परात्पराम् ॥
संपूज्य प्रार्थयेदिष्टं क्षमापणपुरःसरम् । अनाथमथवा दीनमपराधैकभाजनम् ॥ ३७ ॥
रक्ष मां कृपया देवि तवैव शरणागतम् । भगवच्चरणाम्भोजभजनानन्दभाजनम् ॥ ३८ ॥
कुरु माममलालोकनिवारितजगद्भयम् । अगाधभवपाथोधिनिमग्नभयविप्लुतम् ॥ ३९ ॥
आनन्दिनि महामाये समुद्धर करग्रहैः । परमावधिभूताऽसि परमैश्वर्यसंश्रये ॥ ४० ॥
कमन्यं शरणं यामि परतन्त्रमनीश्वरम् । श्रीमन्नारायणानन्दसंदोहं कुरु साधने ॥ ४१ ॥
जय मातर्मदोन्मत्तमातङ्गस्खलनाभिधे । कमले कमलाक्रीडे कलानिधिसहोदरे ॥ ४२ ॥

मम देहि पदाम्भोजमयि मानसपङ्कजे। ब्रह्मादिदेवतावृन्दसमाराधितपल्लवे ॥ ४३ ॥
विमले विमलज्ञानकलया विमलं कुरु। एवं संप्रार्थ्य देवेशीमाराधनपरो भवेत् ॥ ४४ ॥
प्रातः पुनः प्रपूज्याथ हुत्वा वह्नौ स्वशाखया। श्रीसूक्तमूलमन्त्राभ्यामृग्भिः षोडशभि-
र्मुहुः ॥ ४५ ॥
पायसेन तिलैर्वाऽपि कमलैर्वा मधुप्लुतैः। प्रत्येकं षोडशदिनैः पूजिता याश्च मातरः ॥
तदर्थं जुहुयाच्चाग्नौ शतं चाथ सहस्रकम्। दत्त्वा पूर्णाहुतिं विप्रान्संभोज्याथ विसर्जयेत्॥
प्रतोष्य विविधोपायैर्गुरुं भक्त्या धनादिभिः। पश्चात्सपरिवारोऽयं यजमानः कृतोत्सवः
स्वयं भुञ्जीत मतिमानात्मानं धन्यतां वहन्। न मारी न च दुर्भिक्षं नोपसर्गभयं भवेत्॥
राजा जयति सङ्ग्रामे शत्रूनेवं कृते व्रते। महालक्ष्मीव्रतं मोहादज्ञानाच्च करोति यः ॥
दारिद्र्यं जायते तस्य मृतो नरकमाप्नुयात्। ज्ञात्वा देहाभिमानेन महालक्ष्मीव्रतं त्यजेत् ॥
तस्याऽऽस्यं च समालोक्य सचैलं स्नानमाचरेत्। जगतः पितरौ साक्षाल्लक्ष्मीनारायणौ
मतौ ॥ ५२ ॥
तावनावृत्य मूढात्मा कथं न नरकं व्रजेत्। अशक्तो व्रतमास्थातुं पयोमूलफलादिभिः ॥
हविष्येणापि नक्तेन चैकभुक्तेन वा पुनः। नयेत्कालं जपेत्सूक्तं यावत्कृष्णाष्टमी भवेत् ॥
पायसान्नं निवेद्याथ भोजयित्वा द्विजन्मनः। तेनैव पारणं कुर्यात्प्रत्यृचेन यथाविधि ॥
न वन्ध्यं दिवसं कुर्याद्वैष्णवोऽभिलषन्हरिम् ॥ ५६ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते सूक्तमहात्म्ये महालक्ष्मीव्रतविधानं
नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९४६ ॥

---

अथैकादशोऽध्यायः ॥ ११ ॥

---

पूर्वोक्तेन विधानेन नवषोडशभिर्घटैः। स्नापयेत्कार्यमुद्दिश्य यजमानं च भक्तितः ॥ १ ॥
ऋग्भिश्च पञ्चदशभिस्तस्य सिद्धिं ब्रवीमि वः। घटे घटे समभ्यर्च्याः पूर्वोक्ताः शक्तयः
क्रमात् ॥ २ ॥
मध्यमे कलशे देवीं महालक्ष्मीं प्रपूज्य च। त्रिसहस्रं जपेन्मूलं श्रीसूक्तेन समन्वितम् ॥
दिव्यज्ञानबलैश्वर्यसिद्ध्यै भद्रपीठके। समारोप्य गुरुर्भक्त्या शिष्यमासेचयेद्घटैः ॥४॥
अलंकृतं वरस्त्रीभिर्लाजैश्चाप्यभिवर्धितम्। नदत्सु पञ्चघोषेषु मुहूर्ते शोभने तथा ॥ ५ ॥
मध्यस्थकुम्भतोयेन महालक्ष्मीमनुस्मरन्। अभिषिञ्चेत्क्रमादन्यैः कलशैः शोभनाम्बुभिः
भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु। प्रणश्यत्वशुभं सर्वं जन्मजन्मान्तरे कृतम् ॥
आशिषः संप्रयुज्यैवं गुरुः शिष्यं समाहितम्। महापीठे नयेत्पाणिपल्लवे धृतमङ्गलम् ॥८॥
महादेवि महामाये वैकुण्ठहृदयप्रिये। देहि मे चरणाम्भोजे भक्तिमव्यभिचारिणीम् ॥ ९॥
नमो मातर्महालक्ष्मि मेऽनन्यशरणार्थिनः। सांनिध्यं देहि देवेशि परिचर्यासु वर्तनम् ॥
अकामो वा सकामो वा प्रार्थयेद्दीनया गिरा। गुरुं नत्वा द्विजान्भोज्य विसृज्य विहरे-
त्ततः ॥ ११ ॥

अभिषिक्ता सती वन्ध्या सूते पुत्रं महामतिम् । महारोगेषु जातेषु कुर्याद्द्रोहेषु वैष्णवः॥
भूतेषु दुर्निमित्तादौ कुर्यान्मन्त्राभिषेचनम् । सर्वसंपत्करं पुंसां सर्वसौभाग्यसिद्धिदम् ॥
सर्वरोगप्रशमनं सर्वापद्विनिवारणम् । गर्भरक्षाकरं स्त्रीणां दीर्घायुर्जनकं परम् ॥ १४ ॥
प्रसूतानामपि स्त्रीणां सूतिकागाररक्षणम् । प्रनष्टपुष्पगर्भाणां पुष्पगर्भाभिरक्षणम् ॥१५॥
आसन्नशत्रुभीतानां महाभयविनाशनम् । गतश्रीणां गताज्ञानां निर्मतीनां च भूभुजाम् ॥
श्रियमाज्ञां मतिं चैव संवर्धयति भक्तितः । आस्तिकानां वदान्यानां गुरुदेवैक्यभाविनाम्
सिद्धयो ह्यभिषेकेन समायान्ति न संशयः । नास्तिकाय न वक्तव्यं नाधनायातिहिंसिने
अवैष्णवाय दुष्टाय वैदिकायापि नो दिशेत् । आस्तिकं च विशुद्धं च शान्तं च समदर्शिनम् ॥ १९ ॥

अविप्रमपि संस्कुर्यान्महालक्ष्म्यभिषेचने । अथ प्रबोधयात्रां च कार्तिक्यां प्रब्रवीमि वः॥
यस्या विज्ञानमात्रेण मन्त्रसिद्धिमवाप्नुयात् । अमाप्रदोषसमये बोधयेत्कमलालयाम् ॥
ऋग्भिश्च पञ्चदशभिः सर्वैश्च सह वैष्णवैः । एकादशीं समारभ्य संस्कुर्याद्यागमण्डपम् ॥ २२ ॥

चित्रध्वजपताकाभिर्वितानवरतोरणैः । गृहं सुधासितं कुर्यात्सुगन्धोदकवासितम् ॥२३॥
चामरादिलसत्कुम्भं कदलीस्तम्भमण्डितम् । वीणाविनोदसंयुक्तं नटनर्तकनादितम् ॥
स्तवकामलपूगाम्रबिल्वाम्भोजकृतच्छवि । शयनीयगृहे कन्यां गां च काञ्चनदीपकम् ॥
दर्शनार्थं प्रकल्प्याथ संभारान्पूजनस्य च । प्रस्वाप्य वरपर्यङ्के पूर्वमेव प्रबोधनात् ॥२६ ॥
स्नानीयकलशान्स्थाप्य नानौषधिसमन्वितान् । पक्वान्नानि विचित्राणि नैवेद्यार्थं प्रकल्पयेत् ॥ २७ ॥

पूजापीठं च शङ्खादिस्थापनं गुरुपूजनम् । अधिवासनवत्कुर्यात्प्रदोषसमये ततः ॥ २८॥
प्रज्वाल्य परितो दीपान्दीपवृक्षांश्च सर्वशः । ततः प्रबोधयेद्देवीं द्विजैः श्रीसूक्तपाठिभिः
घण्टातालमृदङ्गैश्च वीणापणववादनैः । जयशब्दैर्नमःशब्दैः स्तवैरारार्तिकैस्तथा ॥३०॥
प्रबुद्धां दर्शयेत्तावद्गां कन्यां घृतदीपकम् । दन्तकाष्ठं च गण्डूषं दत्त्वा मङ्गलदीपकम्॥३१॥
तैलाभ्यङ्गं सुगन्धेन पाद्यार्घ्याचमनं तथा । पञ्चामृताभिषेकं च सुगन्धोद्वर्तनं तथा॥३२॥
सवस्त्राङ्गविभूषाभिरर्चयेच्चिन्तयन्सुधीः । धूपं दीपं च नैवेद्यं नानासंभारसंयुतम् ॥३३॥
ताम्बूलादर्शकुसुममालिकाभिः प्रपूज्य च । सहस्रनामभिः पूजां पृथक्कृत्वाऽक्षतादिभिः ॥
प्रसूनैस्तुलसीपत्रैर्मालतीमल्लिकादिभिः । कमलैः कमलां देवीं समभ्यर्च्य विधानतः॥३५॥
चामरैरुचिरैश्छत्रैः संवीज्य नरवाहने । समारोप्य महादेवीं तूर्यमङ्गलनिस्वनैः ॥ ३६ ॥
सूक्तपाठैः स्तवैः पुण्यैर्भ्रामयेन्नगरे निशि । महानिशायां लाजैश्च प्रसूनैश्च समर्चिताम्
तामानयेत्पुनः पीठे नीराज्य द्वारदेशके । तत्र जागरणं कुर्यात्प्रातर्भक्तान्प्रपूजयेत्॥ ३८ ॥
भोजनैर्दक्षिणाभिश्च प्रदक्षिणगतिस्तवैः । एवं यः कुरुते देव्याः कार्तिके बोधनोत्सवम् ॥
श्रीसूक्तेन गृहं तस्य महालक्ष्मीर्न मुञ्चति । एवं जन्मोत्सवं देव्या द्वादश्यां तु समाचरेत्॥
भक्तानां श्रेयसे वत्स संभूता क्षीरसागरे। श्रीसूक्तेन श्रियो देवैरेकादश्यां समर्चनम्॥४१॥
कृतं सहस्रनाम्नश्च पठनं हरिणेरितैः । द्वादश्यां कमला देवी क्षीराब्धितनया रमा ॥४२॥

देवानां कार्यसिद्ध्यर्थं निर्गता जयनिस्वनैः । तस्माच्छ्रीवैष्णवैर्देव्या द्वादश्यामुत्सवोदये॥
विप्रैः श्रीसूक्तमन्त्रज्ञैरभिषेकं प्रवर्तयेत् । पीठे तु सर्वतोभद्रे दलैः षोडशभिर्युते ॥ ४४ ॥
निवेश्य कलशे चाष्टौ परितः कलशान्न्यसेत् । सर्वौषधीसमायुक्तैस्तथा नानाविधोदकैः॥
कुङ्कुमोदकगन्धोदकषायोदकपूरितैः । तीर्थोदकैश्च शुद्धोदैर्मन्त्रपूतैः समन्ततः ॥ ४६ ॥
तुलसीकुशहस्तैश्च विप्रैर्भागवतैर्मुदा । स्वस्तिवाचनपूर्वं तु श्रीसूक्तेनाभिषेचयेत् ॥ ४७ ॥
अभिषिक्तां महादेवीं विष्णुना सह मन्दिरे । पूजयेद्गन्धपुष्पाद्यैर्नैवेद्यैर्भक्तिसंयुतः ॥४८॥
जुहुयादनिले देवीं पीठपूजनपूर्वकम् । भोजयेद्ब्राह्मणान्भक्तान्परमान्नेन श्रद्धया ॥ ४९॥
अनुभूय सुखं भूरि ह्यन्ते तद्दास्यतामियात् । सहस्रनामकवचं श्रीसूक्तं प्रत्यहं जपेत्॥५०॥
तस्य लक्ष्मीप्रसादेन कैवल्यं नातिदुर्लभम् । विना श्रीवैष्णवीं दीक्षां विना श्रीसूक्तसंस्तवम् ॥ ५१ ॥
विना श्रीपूजनं लोके कथं स्याद्वैष्णवो नरः । न विष्णुना समं देव्या अन्तरं भावयेन्मनाक् ॥ ५२॥
संलीना प्रणवे बीजे ह्यकारेण महोज्ज्वला। सहस्रनामकवचं श्रीसूक्तं पञ्चवर्णकम्॥५३॥
यदि वा परमा श्रद्धा हरिरेवोपदेक्ष्यति । श्रीसूक्तपाठकाः सर्वे वयं चेह समाश्रिताः ॥
तपः कुर्मो महादेव्याः कैंकर्यप्रातिकाम्यया। यदीच्छसि महालक्ष्म्या सहवासमनन्यधीः॥
तदाराधय मानिन्या विष्णोश्चरणपङ्कजम् ॥ ५६ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते श्रीसूक्ताराधनं नामैकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्टयङ्काः—॥ १००२ ॥

---

अथ द्वादशोऽध्यायः ।

---

श्रीवत्स उवाच—
विधिं पुरुषसूक्तस्य समाराधनवर्त्मना । वक्तुमर्हथ नो यूयं कृपां कुरुत चेतसः ॥ १ ॥
त ऊचुः—
नारायणोऽस्य सूक्तस्य कर्ता वक्ता पिता स्वयम् । तथाऽपि चाभिधास्यामः श्रूयतामेकचेतसा ॥ २ ॥
संप्राप्याऽऽचार्यतो मन्त्रं श्रीमदष्टाक्षरं परम् । विधिना पौरुषं सूक्तं गृह्णीयात्परमादरात्॥
अष्टादशऋचोपेतं प्रणवाद्यं हरिप्रियम्। सूक्तं नारायणोद्भूतं तस्याऽऽराधनसिद्धये॥४॥
उत्थाय रात्रिशेषेषु स्वगुरुं चिन्त्य चेतसा। रात्रिवासः परित्यज्य पादौ प्रक्षाल्य वारिणा ॥ ५ ॥
शुचौ स्वासनमास्तीर्य मन्त्रेणाऽऽधारदेवताम्। नत्वाऽच्युतादिनाऽऽचम्य स्थित्वा ध्यानपरो भवेत् ॥ ६ ॥
भूतोच्चाटनकं कृत्वा ह्यस्त्रेणाऽऽरक्ष्य सर्वतः। मन्त्रं सौदर्शनं जप्त्वा महाविश्वासपूर्वकम् ॥ ७ ॥

तत्त्वत्रयमनुस्मृत्य चिदचित्परमात्मकम् । चित्तत्वमात्मनो भाव्यं ह्यचिदात्मोपकारकम् ॥
पञ्च पञ्चदशैकं च प्रकृत्यादित्रिभिर्युतम् । शरीरमचिदाख्यातं कार्यरूपं महामते ॥ ९ ॥
भावनानलयोगेन संहृत्यानलविद्यया । अप्राकृतमथो बीजं पञ्चकेनोपकल्प्यताम् ॥१०॥
श्रीमद्भगवतः पादपरिचर्योपयोगिनम् । देहं विचिन्त्य मतिमान्ध्यानयोगं समारभेत् ॥
सदनन्तगुणोपेतं कल्याणैकनिकेतनम् । विचित्रशक्तिमैश्वर्यपरिपूर्णमनङ्कुशम् ॥ १२ ॥
नित्यैकरूपमत्यन्तभक्तवात्सल्यगर्भितम् । कारुण्यौदार्यगाम्भीर्यमाधुर्यैकसमाश्रयम् ॥१३॥
आधारभूतं सर्वस्य सर्वावधिमनल्पकम् । सर्वात्मकं सर्वतनुं सर्वमव्यग्रचेतसम् ॥ १४ ॥
सर्वज्ञं सर्वदैकाभं परिणामविवर्जितम् । ज्ञानानन्दबलैश्वर्यसंकोचरहितं सदा ॥ १५ ॥
स्वतन्त्रं सर्वनेतारमन्तर्यामिणमच्युतम् । निरातङ्कं निराधारं निरञ्जनमनामयम् ॥ १६ ॥
अनित्यपारतन्त्र्यादिविशेषरहितं हरिम् । अजहत्स्वविशेषाढ्यं सत्यं संकल्पसत्पतिम् ॥
कारणं सर्वकार्यस्य सर्वधार्यस्य धारकम् । हारकं सर्वहार्यस्य सर्वभास्यस्य भासकम् ॥
सर्वस्मिन्व्यापकं शुद्धं व्यापकान्तरवर्जितम् । गन्तृणां परमं गम्यं भोक्तृणां भोग्यमुत्त-
मम् ॥ १९ ॥
साधनानां परं साध्यं स्वस्य साध्यस्य साधनम् । देवानां दैवतं दिव्यं फलानां परमं
फलम् ॥ २० ॥
अनन्यानां च सर्वस्वं निर्धनानां परं धनम् । वाच्यं समस्तवेदानां चिन्तयेत्परमे पदे ॥
कलया तलमासाद्य पादपद्मासनं तु यत् । विधृतं स्वैकदेशेन तस्मिन्न्यस्ताङ्घ्रिपङ्कजम्
विद्यामये महातल्पे नवशक्तिसमन्विते । धर्मादिसेवितपदे छन्दोभिः परिवेष्टिते ॥ २३ ॥
समासीनं श्रिया सार्धं भूम्या देव्याऽभिसेवितम् । लीलया लालितं चाग्रे नानाकेलिक-
लोदयैः ॥ २४ ॥
कोटिसूर्यप्रतीकाशकिरीटावृतमस्तकम् । भास्वन्मणिगणाकीर्णकुण्डलाभ्यां विराजि-
तम् ॥ २५ ॥
कोटिमन्मथमाधुर्यमञ्जकालकमण्डितम् । नीलाम्बुजदलोद्रेकभङ्गिलोचनशोभितम् ॥
अन्यच्च फालविलसत्तिलकश्रीविमोहकम् । सान्द्रनीलाम्बुदश्यामस्वच्छादर्शकपोलकम् ॥
मन्दहासोज्ज्वलमुखं दन्तावलिविराजितम् । रुचिरौष्ठपुटामोदसमाहूतालिसंवृतम् ॥२८॥
कम्बुग्रीवोल्लसद्दिव्यकौस्तुभोद्दीप्तवक्षसम् । चतुराजानुदोर्दण्डविभूषितभुजान्तरम् ॥
चक्रशङ्खगदापद्मदिव्यायुधविकाशितम् । बालद्युमणिविस्तीर्णप्रभाम्बरविभूषितम् ॥
भ्रमद्भ्रमरझङ्कारमुखरीकृतविग्रहम् । आपादतलसंलग्नां बिभ्राणं वनमालिकाम् ॥ ३१
भक्तार्पितमहामोदविनोदितदिगन्तरम् । समञ्जरीकतुलसीमालयाऽलंकृतोदरम् ॥ ३२ ॥
स्फुरन्मयूखशीतांशुमुक्तावलिविभूषितम् । त्रिवलीगर्तविभ्रान्तविमुक्तजनमानसम् ॥
नितम्बमण्डलालम्बिरत्नकाञ्चीलसत्त्विषम् । ऊरुद्वयविनिर्धूतकदलीमत्तवारणम् ॥ ३४ ॥
जानुजङ्घोच्चगुल्फाञ्चनखकान्तिविराजितम् । सुरासुरशिरोरत्ननीराजितपदाम्बुजम् ॥
शेषभोगासनासीनं विष्वक्सेनादिभिर्युतम् । मुक्ताजाललसच्छत्रविराजितनभस्तलम् ॥
नित्यमुक्तजनाजीव्यचरणाम्बुजवैभवम् । असीमगुणमञ्जूषां श्रिया लालितपद्दलम्॥३७॥

कोटिशीतांशुसंदोहचलच्चामरमण्डितम् । छन्दोभिस्तूयमानं तं पुरतो मङ्गलरतवैः ॥३८॥
सिद्धगन्धर्वदिक्पालकिंनरोरगराक्षसैः । सदा संचिन्त्यमानाङ्घ्रिमादिदेवं विचिन्तयेत् ॥
संन्यस्य वामहस्तादिनिजाङ्गेषु विचक्षणः । मूलमन्त्रं च मतिमाञ्जपेदचलमानसः ॥
भगवत्परिचर्याङ्गतया दासोऽहमाज्ञया । देहशुद्धिं करिष्यामि चेति संकल्प्य सर्वतः ॥
मनसा वचसा चैव शरीरेण तथैव हि । यथा कुर्यात्तवैवाहं कर्म नाथ तथा कुरु ॥४२॥
यत्र यत्र रमाकान्तं मनो मे परिसर्पति । तत्र तत्र तवानन्त देहबुद्ध्या प्रसर्पतु ॥ ४३ ॥
तत्सृष्टयेति च वाक्येन कार्यमात्रे व्यवस्थितः । आत्मरूपतया यस्मात्त्वमेव पुरुषोत्तम ॥
इति बुद्ध्या हृषीकेश निर्वैरः स्यां हि सर्वतः । भेदबुद्धिर्न चैवास्तु त्वयि वस्तुनि चाऽऽत्मनि
परमैकान्तिनां प्राप्यस्त्वमेव करुणानिधे । परमैकान्तिनं देव परज्ञानसमन्वितम् ॥ ४६ ॥
परभक्तियुतं साक्षात्कुरु मामनपायिनम् । निःसीमनवसौन्दर्यसुधासिन्धुविगाहिनम् ॥
एवं विचार्य मनसा नित्यसंबन्धमात्मनः । नाहं देहो न वै प्राणो न मनोऽहं न चेन्द्रियम्
न वर्णो नाऽऽश्रमश्चाहं न मनुष्यो न देवता । न यक्षो राक्षसो नैव न दैत्यो दानवस्तथा ॥
निरुपाधिकसत्तस्त्वास्तव दासोऽस्मि केवलम् । तवानन्यार्हशेषोऽहं तवाऽऽज्ञापरिपालकः ॥
दासोऽहं नित्यसंबन्धी त्वमेव मम सत्पतिः । अतो ह्यनन्यसेवार्थं नियोजय निजं जनम् ॥
ततो मृल्लेपनं कृत्वा हस्तपादाङ्गशीर्षणि । आचान्तः संयतो मौनी तीर्थान्यावाह्य तज्जले ॥ ५२ ॥

प्राणानायम्य संचिन्त्य हृदि लक्ष्मीसमन्वितम् । मूलेन स्नानविधिना स्नात्वा देवं प्रतोष्य च
सूर्यमण्डलमध्यस्थं श्रीमन्नारायणं हरिम् । अर्घ्यं दत्त्वा तु गायत्र्या प्रद्युम्नादिधिया पितॄन् ॥ ५४ ॥
संतर्प्य दर्भपाणिस्तु प्राणानायम्य सर्वतः । संप्रोक्ष्यास्त्रेण चास्पृष्टं धौतं कार्पासकं तथा ॥
क्षौमं वा ह्याविकं वाऽपि धृत्वा वृक्षमयं तु वा । गुरुवैष्णवपादाब्जतीर्थमाधार्य मस्तके
ऊर्ध्वपुण्ड्रादिकं कृत्वा श्रीरेखामरुणप्रभाम् । धृत्वा दासोऽस्मि संचिन्त्य तथा तुलसीमा-लिकाम् ॥ ५७ ॥

पूजार्थं श्रीपतेः कुम्भमादायोद्धार्य मूर्धनि । नाम संकीर्तयन्विष्णोः पठन्सूक्तमथापि वा
पुष्पाणि तुलसीं चैव नीत्वा गच्छेद्धरेर्गृहम् । द्वारदेवान्नमस्कृत्य नित्यमुक्तांश्च पार्षदान्
मार्जयेन्मन्दिरं विष्णोर्निर्माल्यं चापवाहयेत् । लेपयेत्परया भक्त्या दासो मृद्गोमया-म्भसा ॥ ६० ॥

दीपान्प्रज्वाल्य परितो घृततैलमयान्पृथक् । प्रबोधयेत्पठन्सूक्तं देवं पर्यङ्कशायिनम् ॥
घण्टादुन्दुभिनिर्घोषैः शङ्खतालमृदङ्गकैः । गुणाननुवदन्पुण्यान्पुराणागमसंस्तुतान् ॥
संस्थाप्य लक्ष्मीसहितं दिव्यसिंहासने प्रभुम् । दन्तोल्लेखं कारयित्वा मूलेन तुलसी-दलैः ॥ ६३ ॥

मङ्गलार्तिकमादाय प्रभासंदर्शनाद्बुधैः । प्रागेव भ्रामयेद्विद्वान्घण्टां वामेन वादयन् ॥
पात्रासादनकं कर्म कुर्याद्गुरुपदं स्मरन् । स्वासने विधिना क्लप्ते भूतशुद्धिं विधाय च ॥
लिपितत्त्वहृषीकेशमुनिमन्त्रपदाक्षरान् । विन्यस्य हृदयाद्यङ्गे करन्यासं विधाय च ॥६६॥

ततो बद्धशिखी मौनी चोर्ध्वपुण्ड्रधरोऽनघः। संन्यसेत्पौरुषं सूक्तं श्रीसूक्तं च विधानतः
हस्तस्य संपुटं कृत्वा स्मृत्वा विष्णुं तथाऽव्ययम् । श्रीभूलीलासुखासीनं मायातीते परे
पदे ॥ ६८ ॥

विन्यस्य प्रथमां वामे द्वितीयां दक्षिणे करे । तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्
पञ्चमीं वामबाहौ तु षष्ठीं दक्षिणतो न्यसेत् । कण्ठे त्रयोदशीं न्यस्येत्तथा वक्त्रे चतुर्द-
शीम् ॥ ७० ॥

अक्ष्णोः पञ्चदशीं कृत्वा षोडशीं मूर्ध्नि विन्यसेत् । सर्वाङ्गं मार्जयेद्वाभ्यामृग्भ्यामात्मनि
साधकः ॥ ७१ ॥

एवं देवतनौ न्यस्य पश्चाद्यागं समारभेत् । आविर्भूतस्य देवस्य महावैकुण्ठविष्टरात् ॥
मायातल्पे निषण्णानां जीवानामशरीरिणाम् । शरीरकॢप्तये भोगभुक्तये मुक्तये तथा ॥
पादैकलीलो भगवाँल्लीलया प्रेरितो मुदा । सहस्रशीर्षा पुरुषः प्रथमो भवनात्मकः ॥
महत्संज्ञोऽज्ञगर्भश्च ब्रह्मयोनिः सनातनः । जलशायी जगन्नाथः प्राकृताधीश्वरो हरिः ॥
त्रिव्यूहकार्यकारी च नानारूपो निरञ्जनः। भूर्लोकपादो विश्वात्मा भुवो जानुः सुवः कटिः
महर्नाभिश्च हृदयं जनलोकः प्रकीर्तितः । कण्ठदेशे तपस्तस्य लोकः ख्यातः परात्मनः॥
भ्रुवोर्ललाटसंध्योस्तु सत्यलोकः प्रतिष्ठितः। सर्वावतारनिलयः पुरुषोऽयं सनातनः॥७८॥
वैराजः श्रीपतिः श्रीमानुपास्यो मुक्तिकाङ्क्षिभिः । अस्यैवांशकलाः सर्वे मत्स्यकूर्माद-
यश्च ये ॥ ७९ ॥

तथैव ब्रह्मरुद्राद्या देवा मन्वादयो नृपाः । पूज्याः पुरुषसूक्तेन नानाबलिपरिच्छदैः ॥
शालग्रामे जले वह्नौ हृदये च गुरौ द्विजे । अर्चायामात्मनि तथा वैष्णवे भगवत्प्रिये ॥
संपूज्य परया भक्त्या हरिर्नारायणः स्वयम् । सगुणात्पुरुषादस्माद्वैराजात्पुरुषः परः ॥
लोकातीतः परपदे परमात्मा व्यवस्थितः । हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ॥
तच्छुद्धं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः । गमनागमनातीतः सदैकरसविष्टरः ॥
सदैकलीलानिरतः सदनन्तगुणान्वितः । अप्राकृतविहारस्थो नित्यमुक्तजनाश्रयः ॥८५॥
सर्वावधिः सर्वशेषी निर्विकारो निरञ्जनः । प्रकृतिः पुरुषस्यायं वैराजस्य महात्मनः ॥
एतस्मान्न परं किंचित्सा काष्ठा सा परा गतिः । परमैकान्तिनां गम्यः सेव्यो भोग्योऽर्थ-
साधनम् ॥ ८७ ॥

मन्त्रराजानुसंधानकर्तृणामयनं हि सः । सर्वधर्मान्परित्यज्य प्रपन्ना ये हरिं परम् ॥
ते यान्ति परमं स्थानं यतो नाऽऽवर्तते पुनः।एष भागवतानां हि लीलारसविलोकिनाम्
लोको नित्यः परे व्योम्नि निर्गुणः सद्गुणाश्रयः । न कर्मिणां गतिश्चात्र ज्ञानिनां न गतिः
पुनः ॥ ९० ॥

गतिरेकान्तिनामत्र यैर्भारो निहितो हरौ । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥
योऽण्डभूमिं समाविश्य दशाङ्गुलमथाभवत् । तस्मात्पुरुष एवेदं सर्वं चिदुदरीकृतम् ॥
भूतं भव्यं भविष्यं यद्येनाऽऽविश्य प्रकाशितम् । यो धर्ताऽस्य शरीरस्य चतुर्दशपदा-
त्मनः ॥ ९३ ॥

महापुरुषनामाऽसौ यः शेते सलिले पुरा। नारायणेतिविख्यातः प्रवेशाद्विष्णुरुच्यते ॥
वासनाद्वासुदेवेति हरणाद्धरिरुच्यते। त्रिपाद्विभूतिसंविष्टः पादभूतिमुपस्थितः ॥ ९६ ॥
उपास्यः स्वैकरूपेण नानारूपेण वा पुनः। वैराजश्चैकरूपेण नानामत्स्यादिमूर्तिभिः ॥
अन्तर्यामितया ब्रह्मरुद्रेन्द्रवसुमूर्तिषु। एकानेकस्वरूपासु सर्वार्चासु त्रिपात्प्रभुः ॥९७॥
आवाहयेत्तमेकान्ती यो ज्यायानतितिष्ठति। अमृतत्वस्य चेशानो भगवान्पुरुषोत्तमः ॥
न कर्मफलभुग्भोक्ता भोजकः सर्वकर्मिणाम्। आधारशक्तिमारभ्य पीठदेवान्प्रपूज्य तु ॥
कर्णिकायामथो देवमानयेदाद्यया ऋचा। यथा देहे तथा देवे न्यासं कुर्याद्विधानतः॥१००॥
द्वितीययाऽऽसनं दद्यात्पाद्यं चैव तृतीयया। चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनं तथा॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वसनं तथा। यज्ञोपवीतं चाष्टम्या नवम्या गन्धलेपनम् ॥
पुष्पं देयं दशम्या स्यादेकादश्या तु धूपकम्। द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम्॥
चतुर्दश्या जलं दद्यात्पञ्चदश्या प्रदक्षिणम्। षोडश्योद्वासनं कुर्याद्वाभ्यां संस्तवनं स्मृतम् ॥
एवं षोडशभिश्चैके केऽप्यष्टादशभिस्तथा। ताभिरिच्छन्ति कृतिनो वैष्णवं यजनं सदा ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं पृथक्। षण्मासात्सिद्धिमाप्नोति योऽर्चयेदेवमेव हि ॥
द्वादश्यां तु विशेषेण यजनं हवनं स्मृतम्। लक्षं पुरुषसूक्तस्य पाठयित्वा द्विजातिभिः॥
सहस्रनाम्नामयुतं श्रीसूक्तेन समन्वितम्। त्रिभिर्दिनैश्च जुहुयाद्दशम्यादिभिरेव च ॥
लक्षमेकं तिलाज्येन श्रीमदष्टाक्षरेण च। कार्यसिद्धिर्भवेत्तस्य निष्कामो मोक्षमाप्नुयात् ॥
हविष्याशी भूमिशायी मौनी पठनमाचरेत्। यावध्यानं न विकृतं यावदासनसंस्थितिः॥
तावदेवाभ्यसेत्सूक्तं श्रीसूक्तपुटितं यमी। एवं चायुतपाठेन लक्षपाठेन वा पुनः ॥ १११ ॥
असाध्यं साधयेद्धीमान्पुरुषाराधने विधिः। दशलक्षप्रपाठेन महापुरुष ईरितः ॥११२॥
कोटिपाठेन भवति तथाऽतिपुरुषात्मकः। ब्रह्माभ्येति परं सो हि यजते पुरुषोत्तमम् ॥
योऽतीत्य सर्वपुरुषान्सर्वावधितया स्थितः। एवं सावरणं साङ्गायुधं च सहशक्तिकम् ॥
अर्चयेत्परया भक्त्या सूक्तेनानेन वैष्णवः। तस्माद्विप्रधरानाथ सूक्ताभ्यां श्रीपतिं यज ॥
सह योगो भगवता भविष्यति न संशयः। तदर्थमिह तिष्ठामो वह्नितीर्थे समाहिताः ॥
सूक्तं प्रजपतां चात्र व्यतीयुर्नः शतं समाः। श्रीवत्सो विष्णुधर्मा च संप्राप्यानेककारणम्॥
प्रणिपत्योत्थितौ तावन्नारायणमपश्यताम् ॥ ११८ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते पुरुषसूक्ताराधनविधिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ ११२० ॥

---

अथ त्रयोदशोऽध्यायः।

---

ततस्तौ भगवत्पार्श्वमागतौ नृपतिद्विजौ। द्वयाधिकारिणौ भूत्वा स्नात्वा संतपनह्रदे ॥
देहि नौ मन्त्रराजं च द्वयं च चरमं तथा। सूक्ते द्वे स्वर्णघर्मानुवाके वै पावमानकम् ॥
दासत्वं देहि दीनार्तिभञ्जनानन्दविग्रह। तव तीर्थस्य माहात्म्यं विज्ञातं स्नानमात्रतः ॥
निवर्त्य विधिकैङ्कर्यमाकारत्रयसंयुतः। पालयन्भगवद्वाक्यं द्वयमावर्तयन्मुदा ॥ ४ ॥

आदेहान्तमिह स्थास्ये लोकयात्रां प्रवर्तयन् । अतोऽनुग्रहवर्षिण्या दृष्ट्या देवावलोकय ॥
एवं संश्रुत्य तद्वाक्यं नरो नारायणो मुनिः । सस्मार पावकोद्दीप्तज्वालामालिसुदर्शनम् ॥
द्वादशारं महाशङ्खं कोटिसूर्यानलप्रभम् । महामोहतमोभूतसृष्टिसंहारकारकम् ॥ ७ ॥
ज्ञानविज्ञानजनकं दुरितक्षयकारकम् । सांनिध्यं परमेशस्य परमैकान्तिनां निधिम् ॥ ८॥
मोक्षद्वारं सहस्रारं ददर्श पुरतः स्थितम् । तथैव पाञ्चजन्याख्यं ध्वानध्वस्ताखिलामयम् ॥
सुदर्शन महाज्वाल पाञ्चजन्य महारव । प्रपन्नयोर्द्वयोर्गात्रं कुरुतं लाञ्छनान्वितम् ॥१०॥
इत्युक्त्वा बाहुयुगलं तयोर्नारायणो हरिः । अङ्कयामास हेतिभ्यां पारमैकान्त्यसिद्धये ॥
पञ्चामृतेन संस्नाप्य शङ्खचक्रे निजायुधे । स्थापयामास पुरतः संस्कारान्तरसिद्धये ॥१२॥
सुदर्शनप्रभावेण प्रध्वस्तानेकबन्धनौ । शुद्धस्फटिकसंकाशौ क्षणादेव बभूवतुः ॥ १३ ॥
तीर्थभूते शरीरे हि तयोस्तु संनिधिस्थिताः । मुनयः पूजयांचक्रुश्चरणक्षालनादिभिः ॥
वह्निपूतशरीरस्य पादतीर्थाभिषेचनम् । ये कुर्वन्ति जनास्ते वै भवन्ति ह्यधिकारिणः ॥
अधिकारस्य सिद्ध्यर्थं चक्रयुक्तस्य ये तनुम् । प्रणमन्ति मुदा युक्तास्ते कृतार्था न संशयः
वयं धन्या वयं धन्या वयं धन्या इति ध्वनिः । समपद्यत सर्वत्र गिरिगह्वरनिर्गतः ॥१७॥
सहस्रशस्तदा प्राप्ताश्चिरकालनिवासिनः । चक्राङ्कस्यावलोकार्थं पुण्याहमितिवादिनः ॥
तदा नारायणं देवं बद्ध्वाऽञ्जलिपुटौ च तौ । ऊचतुः संभ्रमं प्राप्तौ श्रीवत्सनृपसत्तमौ ॥
सानुरागा मही चैषा धत्ते सोत्पुलकां तनुम् । द्यौरशोभत निर्घोषैर्देववादीनां जयस्वनैः ॥
प्रववृषुर्लताश्चैता मारुतान्दोलिता भृशम् । सुमनांसि जगुश्चैते सिद्धगन्धर्वकिंनराः ॥२१॥

नारायण उवाच—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिदात्मानमेव माम् ॥
वेद तत्त्वविदां कोऽपि मदेकरसनिर्भरः । प्रपन्नो जायते कोऽपि ह्येकान्ती चक्रलाञ्छितः ॥
पुत्रे कारागृहान्मुक्ते यथाऽऽनन्दः पितुर्भवेत् । तथाऽऽनन्दमयोऽहं स्यां परमैकान्तिदर्शने
शरीरभूता मे सर्वे जडचेतनयोनयः । ममाऽऽनन्दवशात्सर्वे लोका भूरादयो द्विज ॥२५॥
आनन्दिनो भवन्तीह परमोत्सवनिर्वृताः । देवासुरमनुष्याश्च सिद्धगन्धर्वकिंनराः ॥२६॥
अयं भागवतो जातो वैकुण्ठं यास्यति ध्रुवम् । आक्रमिष्यति स्वर्गादिलोकानेष महो-
ज्ज्वलः ॥ २७ ॥
अतिथिर्भविताऽस्माकं यस्य पादजलैस्तदा । आत्मानं पावयिष्याम इति नृत्यन्ति खे-
चराः ॥ २८ ॥
विना भागवतीं दीक्षां विनैकान्तिनिषेवणम् । नाधिकारो महाभाग परमैकान्तिनां पथि
भगवत्कृपया ज्ञानकर्मयोगादिभिर्नृणाम् । मुक्तिर्भुक्तिस्तथा सिद्धिर्जायते नात्र संशयः ॥
विना भागवतानां हि पादाब्जाम्भोभिषेचनात् । नाऽऽत्यन्तिकः परो भावः कल्पकोटि-
शतैरपि ॥ ३१ ॥
महाभागवता यत्र निवसन्ति महीतले । धन्या सेयं मही राजन्यथा दातरि राजनि ॥३२॥
बहुकालकृतावासाः संलब्धात्मविचारणाः । नैकान्तिभावोपगता येन यामो रमापतिम् ॥
मुक्तिद्वारमिदं जातमस्माकमितिवादिनः । अभिद्रवन्ते वां पार्श्वं षट्पदाः पादपं यथा ॥

बुभुक्षितानां दीनानां सुभिक्षोऽपि च वासरे । अन्नं च लभ्यते यत्र पुण्याहं तु तदुच्यते॥ पृथिव्यां यत्र चैकान्ती सा धन्या सा परा मही । स कामो यत्र चैकान्तभावो भागवतो भवेत् ॥ ३६ ॥
ईषणात्रयनिर्मुक्तं मामेकमनुवर्तिनम् । एकान्तिनमुपास्येऽहं किमुतासुरमानुषाः ॥३७॥
एवं प्रभाषितौ विप्रनृपौ नारायणेन वै । प्रहृष्टौ गतसंदेहौ प्रणामं चक्रतुर्मुदा ॥ ३८ ॥
ततो नारायणो देवः सस्मार द्वादशाऽऽकृतीः । केशवाद्याः समाजग्मुः सपत्नीकाः कृपान्विताः ॥ ३९ ॥
स्वस्ववाहनभूषाढ्यान्स्वनामाह्वानकातरान् । तान्विलोक्य मुदा युक्तः सर्वाचार्यशिरोमणिः ॥ ४० ॥
उवाच वचनं चारु विकसद्वदनाम्बुजः । चक्रसंतप्तयोः पूतगात्रयोर्दासभूतयोः ॥ ४१ ॥
ललाटादिषु चाङ्गेषु कुर्वन्तु गतिमात्मनः । प्रणवाकारतां प्राप्य रेखाभिस्तिसृभिःसदा ॥
इमौ तु परमोदारौ देवान्तरमपोह्य च । प्रयोजनान्तरं हित्वा साधनान्तरमेव च ॥ ४३ ॥
संबन्धान्तरमुत्सृज्य स्वकर्तृत्वं विहाय च । साक्षादेकेन मनसा श्रीपतिं शरणं गतौ॥४४॥
तस्मात्पुण्ड्रात्मना स्थेयं रक्षार्थं सुरसत्तमाः। यथाऽनयोर्मनोयोगो नान्यत्राऽऽक्रमते मनाक्
प्रतिज्ञेयं कृता पूर्वं विष्णुना प्रभविष्णुना । मयि न्यस्तभरो रक्ष्यो मया सर्वात्मना जनः॥
प्राणैर्दारैर्गणैश्चैव हेतिभिस्तनुभिस्तथा । मयाऽपि सर्वनाथेन संरक्ष्यः शरणागतः ॥
प्रदीपकलिकाकारा या रेखा पुण्ड्रमध्यगा । तस्या रूपेण लक्ष्मीस्त्वं कलया संनिधिं कुरु ॥ ४८ ॥
ॐ नमः केशवायेति मन्त्रोच्चारणमात्रतः । प्रपन्नस्य तनुं तावत्संत्यजेन्नाशुचावपि ॥
ललाटे दृश्यते यावदूर्ध्वपुण्ड्रं विधानतः । अतस्तु श्वेतद्रव्येण चोर्ध्वपुण्ड्रधरो भवेः॥५०॥
श्रीवत्स शासनाद्विष्णोर्नामतः केशवादयः । आविर्भवन्ति पुण्ड्रेषु नात्र संदेहभाग्भवेत् ॥
चतुर्धा वासुदेवस्य मूर्तिर्मन्ना विलोक्यते । शालग्रामशिलारूपं द्वितीया सुरनिम्नगा ॥
तृतीया मन्त्ररूपा च चतुर्थी पुण्ड्ररूपिणी । वैष्णवानां हितार्थाय जीवानां पावनेच्छया
[या शुद्धिः स्नानशीलानां नानातीर्थनिषेविणाम् । या शुद्धिः स्नानशीलानां सा सिद्धिः (शुद्धिः) पुण्ड्रधारिणाम्॥ ५४ ॥]
पुण्ड्राकारं समालोक्य तनौ संविशते हरिः । श्रिया सार्धं निजावासमालोक्य पुरुषोत्तमः ॥ ५५ ॥
अशुचिर्वाप्यनाचारी महापापयुतोऽपि हि । पुण्ड्रसंधारणादेव निर्भयत्वं प्रपद्यते ॥ ५६॥
स्त्रियो वैश्यास्तथा शूद्रा म्लेच्छा वाऽन्त्यजजातयः । ऊर्ध्वपुण्ड्रधराः सर्वे नमस्या देवता इव ॥ ५७ ॥
प्रणमन्ति विमानस्था देवा अपि सहस्रशः । दृष्ट्वा भागवतं दूरादूर्ध्वपुण्ड्राङ्कितं जनम् ॥
ध्यानार्थमूर्ध्वपुण्ड्राणां देवता दृक्पथं गताः । एवं ध्यात्वा तनौ धार्याः श्रिया देव्या समन्विताः ॥ ५९ ॥

---

धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तकस्थः ।

श्रीनारदाद्या ऊचुः—
पितामह महाप्राज्ञ श्रीवत्सेन नृपेण च । यथाऽवलोकितास्तात तथा नो वक्तुमर्हसि ॥
ब्रह्मोवाच—
ललाटे केशवं शङ्खचक्रखड्गगदाधरम् । सुपर्णवर्णममलं मुक्ताभरणभूषितम् ॥ ६१ ॥
शुक्लाम्बरधरं सौम्यं नारायणमथोदरे । पीतवाससमब्जाक्षं शङ्खपद्मगदासिकम् ॥ ६२ ॥
मेघश्यामं मणिव्रातविभूषणधरं स्मरेत् । माधवं चोत्पलप्रख्यं तप्तकाञ्चनभूषणम् ॥ ६३ ॥
चक्रशार्ङ्गगदाखड्गधारिणं वक्षसि स्थितम् । गोविन्दं कण्ठदेशे तु तथैवैनं विचिन्तयेत्
विष्णुं च दक्षिणे कुक्षौ गौरवर्णं मनोहरम् । चक्रं शङ्खं हलं खड्गं बिभ्राणं क्षौमवाससम् ॥ ६५ ॥
अरविन्दनिभं देवं बाहौ मधुविनाशनम् । चक्रे शार्ङ्गं च मुशलं पद्मं बाहुचतुष्टये ॥६६॥
कंधरे दक्षिणे देवं रक्तवर्णं त्रिविक्रमम् । शङ्खचक्रगदाखड्गधारिणं मुकुटान्वितम् ॥
वामनं कुन्दवर्णाभं पुण्डरीकायतेक्षणम् । दोर्भिर्वज्रं गदां शङ्खं ध्यायेद्बिभ्राणमम्बुजम् ॥
वामकुक्षौ तथा वामबाहुके श्रीधरं स्मरेत् । चर्मशार्ङ्गासिपद्मानि धारयन्तं महाप्रभम् ॥
रक्तारविन्दनयनं मुक्तादामविभूषितम् । विद्युद्वर्णं हृषीकेशं वामस्कन्धेऽरुणस्रजम् ॥
रक्ताम्बरधरं चक्रं शार्ङ्गं हलमसिं तथा । धारयन्तं स्फुरत्कर्णं पुण्डरीकावतंसकम् ॥
पद्मनाभं तथा पृष्ठे पीतवाससमेव हि । इन्द्रनीलनिभं शङ्खचक्रपद्मगदाधरम् ॥ ७२ ॥
त्रिके दामोदरं नाम रत्नभूषणभूषितम् । पद्मं शार्ङ्गमसिं शङ्खं धारयन्तं घनप्रभम् ॥
वासुदेवं च शिरसि चिन्तयेदुक्तलक्षणम् । सहस्रदलमध्यस्थं कोटिसूर्यसमप्रभम् ॥ ७४ ॥
चतुर्बाहुं श्रिया युक्तं स्फुरन्मकरकुण्डलम् । एवं ध्यात्वा मृदा कुर्यादूर्ध्वपुण्ड्राणि वैष्णवः
प्राकृतत्वमपोह्याऽऽशु सादृश्यं लभते हरेः । नारायणोऽदर्शयद्या ध्यानार्थं पुण्ड्रदेवताः ॥
ता एव द्वादशाङ्गेषु तयोः संविविशुः क्षणात् । तासां धारणतस्तौ तु विनिर्धूतमनोमलौ ॥ ७७ ॥
ऊचतुः परया भक्त्या पुटीकृतकरद्वयौ । हरिस्तु भगवान्साक्षाद्वासुदेवो रमापतिः ॥७८॥
कथं द्वादशधा जातो यः सर्वत्रैक उच्यते ॥ ७९ ॥
नारायण उवाच—
एतद्गुह्यतमं मह्यं भवन्तौ शरणागतौ । अपृच्छतां रहस्यं हि ज्ञानं भागवतं महत् ॥ ८० ॥
शुद्धा च मलिना चैव सृष्टिस्तु द्विविधा मता । मलिना प्राकृता तत्र शुद्धा त्वप्राकृता मता ॥ ८१ ॥
बन्धाय मलिना प्रोक्ता शुद्धा सृष्टिर्विमुक्तये । प्राकृता महदादिभ्यो विशुद्धा वासुदेवतः
वासुदेवात्समुत्पन्ना या सृष्टिर्द्विजसत्तम । संक्षेपात्तां प्रवक्ष्यामि मूर्तितत्त्वं प्रबुध्यताम् ॥
वैष्णवानां सदा पूज्याश्चतुर्विंशतिमूर्तयः । संधार्यास्तत्र चाङ्गेषु केशवाद्याद्विषट्स्मृताः
आत्मनः प्रोक्षणस्पर्शे द्वादशान्याश्च मूर्तयः । स्नानतर्पणपूजायां संयोज्या वैष्णवैस्त्विमाः ॥ ८५ ॥
ज्योतीरूपमजं नित्यं सर्वाधिष्ठानमव्ययम् । परिभ्रमादिरहितं तथा हेयविवर्जितम् ॥८६॥

कल्याणादिगुणोपेतं निराकारं निरञ्जनम् । स्वाधारं बीजभूतं हि शुद्धस्य मलिनस्य च
प्रकृतेः पुरुषस्यापि कार्यमात्रस्य सत्तमम् । आत्माधारस्य रूपं च बीजं वृक्षस्य वै यथा ॥
अयःपिण्डे यथा वह्निरलक्ष्योऽपि पृथक्स्थितः । तापयन्स्वप्रकाशेन परमात्मा सना-
तनः ॥ ८९ ॥

धरित्री सर्वबीजानां प्रावृट्कालेन सर्वतः । धत्तेऽङ्कुराणि सर्वत्र ह्यसंपृक्तानि वै यथा ॥
कालकर्मेच्छया विष्णोः स्वाश्रितान्यणुरूपतः । तथा भवन्ति विप्रेन्द्र व्यक्तानि स्थूल-
रूपतः ॥ ९१ ॥

मुक्तये निर्विकारोऽसावात्मानं व्यतनोद्विभुः । न कर्मफलभोगार्थं गुणमय्या न मायया
ज्ञानेनैवाहमेकोऽहं बहु स्यां विनिवृत्तये । मामाराध्य ममैवांशैरभिन्नैः प्राकृतात्मनाम् ॥
शुद्धसत्त्वेन द्रव्येण ह्यनावरणरूपिणा । आविर्बभूव भगवानंशेनाऽऽधाररूपतः ॥ ९४ ॥
अयमंशो भगवतो ह्यभिन्नोऽप्राकृतो मम । भगवानेव नो जीवो यो मया बध्यतेऽवशः
न मुक्तो नापि नित्यस्तु जीवादन्यः परः पुमान् । द्विहस्तं ह्येकवक्त्रं च शुद्धस्फटिकसं-
निभम् ॥ ९६ ॥

सहस्रकोटिवह्नीन्दुलक्षकोट्यर्कसंनिभम् । पीताम्बरधरं सौम्यरूपमाद्यमिदं हरेः ॥ ९७ ॥
ध्यानैकसाधनं ध्येयं योगिभिर्हृदयाम्बुजे । मरीचिमण्डले संस्थं चक्राद्यायुधलाञ्छितम्
किरीटहारकेयूरवनमालाविराजितम् । पश्यन्ति सूरयः शश्वत्तद्विष्णोः परमं पदम् ॥ ९९ ॥
वासुदेवेतिविख्यातं ततोऽन्यत्समपद्यत । वासुदेवाभिधः सोऽपि ह्येकवक्त्रश्चतुर्भुजः ॥
चक्राद्यायुधसंयुक्तस्तस्य कृत्यं निशामय । स्थित्यै चक्रं सरसिजं दधानं सृष्टये पुनः ॥
मुक्तये पाञ्चजन्यं च गदां संहृतये तथा । मयूरवर्णवच्छ्यामः पीतनैसर्गिकाम्बरः ॥
स्फुरन्मुकुटकेयूरकाञ्चीमञ्जीरमण्डितः । स वासुदेवो भगवान्सृष्टिस्थित्यन्तमुक्तिदः ॥
केनापि हेतुनैवाभूद्द्वितीयश्च चतुर्मुखः । नारायणो वासुदेवस्तृतीयोऽयं द्विधा भवेत् ॥
तयोरेको वासुदेवः शुद्धस्फटिकसंनिभः । नारायणेति यः प्रोक्तो नीलाम्बुदसमप्रभः ॥
एतस्माद्वासुदेवात्तु व्यूहोत्पत्तिं निशामय । संकर्षणो वासुदेवात्तस्मात्प्रद्युम्नसंभवः ॥ १०६ ॥
प्रद्युम्नादनिरुद्धोऽभूत्सर्व एव चतुर्भुजाः । ज्ञानादिगुणसामान्यो वासुदेवः प्रकीर्तितः ॥
सत्त्वादिगुणसामान्या प्राकृते प्रकृतिर्यथा । तथा गुणानां वैषम्ये वक्ष्यन्ते मूर्तयः
क्रमात् ॥ १०८ ॥

गुणत्रयस्य वैषम्ये यथा स्युर्महदादयः । ज्ञानाधिकोऽभवद्ब्रह्मन्संकर्षणसमाह्वयः ॥ १०९ ॥
बलाधिकः स्यात्प्रद्युम्न ऐश्वर्ये चानिरुद्धकः । मूर्तिभ्यश्च चतसृभ्यश्चतुर्विंशतिमूर्तयः ॥
जायन्ते क्रमशो ब्रह्मन्दीपाद्दीपान्तरं यथा । सर्वे चतुर्भुजाः पञ्च शङ्खचक्रगदाधराः ॥
रुद्रादिदेवतानां च व्युत्पत्तिस्तावदुच्यते । वासुदेवादादिदेवात्प्रथमात्केशवस्तथा ॥ ११२ ॥
नारायणो माधवश्च त्रयस्त्वेते बभूविरे । संकर्षणाच्च गोविन्दो विष्णुश्च मधुसूदनः ॥
त्रिविक्रमो वामनश्च प्रद्युम्नाच्छ्रीधरस्तथा । अनिरुद्धाद्धृषीकेशः पद्मनाभश्च सुव्रतः ॥
दामोदरश्च तैरित्थं द्वादशांशाः प्रजज्ञिरे । चतुर्व्यूहाच्चतुर्व्यूहस्त्वन्योऽपि समपद्यत ॥ ११५ ॥
तस्याप्यंशान्प्रवक्ष्यामि चेतसा पुरुषर्षभ । वासुदेवाच्च तन्नामा तथा संकर्षणादपि ॥

प्रद्युम्नादपि तन्नामा तन्नामैवानिरुद्धकात् । अभूवन्क्रमशस्तेभ्यश्चत्वारः पुरुषोत्तमः ॥
अधोक्षजो नृसिंहश्च चतुर्थश्चाच्युतो मतः । एतस्मादपि संभूतः पुरुषोत्तमसंज्ञकात् ॥
व्यूहादपि परो व्यूहो जनार्दनमुखो महान् । जनार्दनस्तथोपेन्द्रो हरिः कृष्णः समाख्यया॥
एवं द्वादशधा भेदो द्वितीयः समपद्यत । चतुर्विंशतिमूर्तीनां कीर्तनं पापनाशनम् ॥
दर्शनं चोर्ध्वपुण्ड्रेषु वन्दनं च द्विजोत्तमाः । पश्यतां हन्ति शमलं किमुतोद्धृतां तनौ ॥
नमतां सर्वलोकाश्च नमन्ति मम शासनात् । श्राद्धे जपे तथा होमे स्वाध्याये देवतार्चने ॥
दाने तीर्थावगाहे च कृतं भवति चाक्षयम् । धत्ते पुण्ड्राणि यो मर्त्यो लक्ष्मीरेखायुतानि च ॥ १२४ ॥
आयुः श्रीश्च बलं ज्ञानं वैराग्यं तस्य वर्धते । केशवादीनि नामानि सलक्ष्मीकाणि बिभ्रताम् ॥ १२५ ॥
दुरितं यदिहोत्पन्नं तत्क्षणादेव नश्यति । धृत्वा पुण्ड्राणि गात्रेषु ब्रह्मत्वं भावयेद्यदि ॥
ब्रह्मापरोक्षतामेति माया गच्छति नाशनम् । अज्ञानादथ वा ज्ञानात्प्रेरणाल्लोभतोऽपि वा
सलक्ष्मीकाणि नामानि धृत्वा पापात्प्रमुच्यते । प्रायश्चित्तं तु पापानां मङ्गलानां च मङ्गलम् ॥ १२८ ॥
विष्णुतीर्थमृदाऽङ्गेषु केशवादीन्करोति यत् । भुक्तिं मुक्तिमपीच्छूनां सलक्ष्मीकाश्च देवताः ॥ १२९ ॥
उभयं तु प्रयच्छन्ति यद्यूर्ध्वतिलकं धृतम् । लक्ष्मीसृद्धिं हरिज्ञानं भोगं मोक्षं सदैव तु ॥
प्रयच्छन्ति महाभागा वैष्णवा ऊर्ध्वपुण्ड्रिणः । द्वादशापि च नामानि वासुदेवादिकानि च ॥ १३१ ॥
प्रपन्नेषु च देयानि पावनाय सुखाय च । यस्य नाम भवेद्विष्णोः संबन्धेन धरासुर ॥
नामापि न स्पृशन्त्यस्य दूताः पितृपतेरपि । वासुदेवाद्देवदेवादपि केनापि हेतुना॥१३३॥
क्षितेर्बीजाङ्कुरमिव मूर्त्यष्टकमजायत । ब्राह्मी च मूर्तिः प्रथमा प्राजापत्या द्वितीयिका ॥
तृतीया वैष्णवी दिव्या चतुर्थी पुण्ड्ररूपिणी । पञ्चमी मानुषी ज्ञेया सप्तमी चाऽऽसुरी
मता पैशाची चरमा चैता मूर्तयो लोकविश्रुताः ॥ १३५ ॥
मीनाद्या जज्ञिरे विप्र चतुर्व्यूहाद्यथाक्रमम् । मत्स्यः कूर्मो वराहश्च वासुदेवादजायत ॥
नृसिंहो वामनो रामो जामदग्न्योऽप्यजायत । संकर्षणात्तथा जज्ञे प्रद्युम्नाद्राघवो बली॥
अनिरुद्धादभूत्कृष्णः कल्कीति दश मूर्तयः । संकर्षणाच्च पुरुषः सत्यः प्रद्युम्नसंभवः ॥
जातोऽच्युतोऽनिरुद्धाच्च बभ्रुस्त्रैलोक्यमोहनः । दाशार्हः शौरिरन्यांशा वासुदेवाच्च जज्ञिरे
संकर्षणाद्धयग्रीवः शङ्खोदरनृकेसरी । वैकुण्ठमूर्तिराधातुर्मुकुन्दश्च वृषाकपिः ॥ १४० ॥
तत्रैवाऽऽदिवराहश्च ततः संकर्षणादपि । अनन्तः पन्नगो जातः सहस्रफणवान्बली ॥
सुदर्शनाद्यायुधानि किरीटादिविभूषणम् । मूर्त्याविर्भावसमये सहैवैतानि जज्ञिरे॥१४२॥
देव्यश्च श्र्यादयस्तत्तन्मूर्तिभेदं समाश्रिताः । श्रीवत्सादेव सकला जज्ञिरे दिव्यलाञ्छनात् ॥ १४३ ॥
गरुडः पक्षिणामिन्द्रो वाहको बलिनां वरः । वासुदेवादिमूर्तिभ्यश्छन्दोमूर्तिरजायत ॥

कुमुदाद्यैश्च भूतेशाः सर्वैः पारिषदैः सह। पादतश्चानिरुद्धस्य समभूवन्सहस्रशः ॥१४५॥
सहस्रशीर्षचरणहस्तनेत्राद्भुताकृतेः। अनिरुद्धाज्जगज्जज्ञे स्वाङ्गादेव यथाक्रमम् ॥१४६॥
ईश्वरः पुरुषोऽव्यक्तोऽनिरुद्धाख्यो निजाङ्गतः। मुखादिन्द्रं च वह्निं च छन्दांस्यङ्गानि षट् तथा ॥ १४७॥ ॥
जनयामास संलीनांश्चतुर्थांशो हरेरयम्। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि
प्रद्युम्नसंकर्षणकवासुदेवा इति त्रयः। त्रिपाद्विभूतिराख्याता अमृता मुक्तिसेतवः॥१४९॥
अतो देवादिभिः पैत्रे ब्राह्मणा ब्रह्मकाङ्क्षिणः। त्रिपादं पुरुषं साक्षाद्यजन्ति मनसा धिया
आत्मानमनिरुद्धेन ह्यभिन्नं चिन्त्य चेतसा। प्रद्युम्नादिस्वरूपेण त्रिपादी पुरुषत्रयम् ॥
पैत्रं स्थानं वैष्णवानामिदमेव परं मतम्। मार्गोऽयमर्चिरादिः स्यात्सूर्यलोकमुखेन हि॥
मार्गेणानेन गच्छन्ति वैष्णवाः परमात्मनि। नान्यो लोके निवासाय श्रुतिरत्र सनातनी॥
कर्मिणां सूर्यपुत्रस्य लोकद्वारेण वै गतिः। वसुरुद्रादिरूपेण पैत्रं स्थानमथापरम् ॥
वैष्णवानामनन्यानां वासुदेवमुपेयुषाम्। यजनं शुद्धरूपाणां केशवादिस्वरूपिणाम् ॥
सर्वकर्मसु विप्रेन्द्र सर्वावस्थासु नित्यशः। वैष्णवो न यजेदन्यं चतुर्व्यूहात्परं मुने॥१५६॥
केशवादिममूर्तीनां पूजनं मुक्तये मतम्। स्वर्गादिदिव्यभोगानां भुक्तयेऽन्ये प्रकीर्तिताः॥
यद्यप्यन्यन्न लोकेऽस्मिंश्चतुर्व्यूहान्मनागपि। तथाऽपि नियमस्तावन्मतो मार्गद्वये द्विज॥
पादलीलाविभूतीनां सेवनं पादमुक्तये। त्रिपाद्विभूतीसेवा तु मुक्तये नात्रसंशयः॥१५९॥
त्रिपाद्विभूतिगा देवा विविच्याऽऽत्मविभूतितः। महाभागवतैः पूज्याः शङ्खचक्रादिधारिणः ॥ १६० ॥
अर्चिर्धूमविभागेन द्विधा मार्गो निरूपितः। अर्चिर्भागवतानां हि धूमाख्यः कर्मिणां मतः ॥ १६१ ॥
धूममार्गेण द्विविधा गतिः प्रोक्ता मनीषिभिः। दैवी पैत्रीति विख्याता दैवी स्वर्गगतिः स्मृता ॥ १६२ ॥
अग्निष्वात्तादयो यत्र दिव्याश्च पितरो मताः। मोदन्ते विविधैर्दत्तैर्भोगैः पुत्रादिनिर्मितैः
कर्मणा पितृलोके हि गतिः पैत्री ह्युदाहृता। ज्योतिष्टोमादिभिर्दैवी गतिरुक्ता द्विजोत्तम ॥ १६४ ॥
द्वावमू पुनरावृत्तियुतौ मार्गौ सनातनौ। आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनो यतः॥
अर्चिरादिगतानां हि वैष्णवानां हरिः स्वयम्। गतिः स्मृत्या विनिर्दिष्टा श्रुत्या चापि द्विजोत्तम ॥ १६६ ॥
मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम्। नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः
सूर्यमण्डलमाविध्य भित्त्वाऽऽवरणसंहतिम्। आप्लुत्य विरजातोये नित्यान्मुक्तान्समेत्य च
स्वाधारं विरजं ब्रह्म गुणातीतमनामयम्। शुद्धं महाविभूतीशं वासुदेवाख्यमद्वयम् ॥
प्राप्नुवन्ति महात्मानो महाभागवता द्विजाः। नावर्तन्ते पुनस्तस्मात्पन्था नान्योऽयनाय च ॥ १७० ॥

एवं कर्मणि मन्त्रेषु वेदेषु यजनेषु च । सर्वात्मकेऽपि संप्राप्तो भेदः सर्वात्मना द्विज ॥
प्राप्ये भोग्ये यतो भेदो नित्यानित्यविभदेतः । विवेकार्थं पुनस्तावदनिरुद्धो निरूप्यते ॥
द्यौर्मूर्ध्नो नयनात्सूर्यो मनसश्चन्द्रमा अपि । श्रोत्राद्दिशो नभो नाभेः पद्भ्यां भूमिर-
जायत ॥ १७३ ॥
प्राणाद्वायुस्तथाऽपानान्मृत्युः केशात्तथाऽम्बुदाः । ऋत्वादिकालभेदाश्च कालश्चाभूत्तथा
धियः ॥ १७४ ॥
वनस्पतय औषध्यो रोमकूपाद्विनिःसृताः । यज्ञाश्च जज्ञिरे तस्माद्बहवो बहुदक्षिणाः ॥
चातुर्वर्ण्यं क्रमाद्वक्त्रबाहूरुचरणोद्भवम् । एवं सृष्ट्या जगत्सर्वमनिरुद्धो जगत्तनुः ॥
अयं जगज्जगद्धाम कार्यकारणयोर्मतः । अभेदो बोधितः सद्भिर्बीजपादपयोरिव॥१७७॥
ज्ञानबुद्ध्याद्यभेदेन पूजनं पुरुषस्य हि । निष्कामानां मुमुक्षूणामन्तःकरणशुद्धये ॥
ब्रह्मरुद्रेन्द्रवरुणमनुकालयमादयः । चतुर्व्यूहात्मकाः सर्वे ह्यनिरुद्धतनौ स्थिताः॥१७९ ॥
भेदेन सेविता भोगमा ब्रह्मभुवनं ददुः । राज्यं भौमं तथा चैन्द्रं प्राजापत्यं च वारुणम्॥
ज्ञानवैराग्यकैवल्यं प्रयच्छन्ति ह्यभेदतः । उपासितः पृथक्कृत्य ह्यनिरुद्धो निजायुधैः ॥
भूषणायुधजालैस्तु परमैकान्तिनां गतिम् । प्रयच्छन्ति न संदेहो यतो नाऽऽवर्तते पुनः ॥
पृथक्कृत्य स्वमात्मानमास्तेऽनन्तासनो हरिः । अनिरुद्धात्मको देवः श्रीभूमिभ्यां सह
प्रभुः ॥ १८३ ॥
मध्ये क्षीरार्णवं श्वेतद्वीपाख्ये हेमनिर्मिते । प्रासादे सेव्यमानश्च योगिभिर्विविधैरपि ॥
चण्डाद्यैर्द्वारपालैश्च कुमुदाद्यनुजीविभिः । पक्षीन्द्रविष्वक्सेनाभ्यां सेव्यमानो मुदा-
न्वितः ॥ १८५ ॥
श्रीवत्सवक्षा नित्यश्रीरजेयः शाश्वतो ध्रुवः । अनिरुद्धो जगत्स्वांशैरिन्द्राद्यैः परि-
पालयन् ॥१८६॥
एवं सृष्टिर्द्विधा भिन्ना वैष्णवी ब्राह्मणीति च । वैष्णवी वासुदेवाद्या केशवाद्या
प्रकीर्तिता ॥ १८७ ॥
अनिरुद्धात्मिका सृष्टिर्ब्राह्मी तत्र प्रकीर्तिता । नाभिपद्मसमुद्भूतो ब्रह्मा यत्र चतुर्मुखः
अनिरुद्धो हि पुरुषो योऽयं नाभिसमुद्भवः । मरीच्याद्याः समभवन्सनकाद्यास्तु
योगिनः ॥ १८९ ॥
क्रोधाद्रुद्रादयश्चाऽऽसंस्तेभ्यो जाताः सहस्रशः । प्राकृतेऽस्मिन्महाभाग संपूज्यास्तेऽपि
भूरिशः ॥ १९० ॥
नानाकामपरैः पुंभिः समानीकृत्य विष्णुना । कामानवाप्य संसारान्निवर्तन्ते न कर्हि-
चित् ॥ १९१ ॥
निर्हेतुककृपादृष्ट्या यमवेक्षेत माधवः । स एव निर्गुणे मार्गे परमैकान्तिनां मुने ॥
याति सर्वात्मना सर्वान्धर्मान्संत्यज्य वैष्णवः । अन्यदेवेन साम्यं च न्यूनत्वं परमात्मनः
संत्यज्य सर्वशेषित्वमाश्रित्याऽऽराधयेद्धरिम् । श्रुतिस्मृत्युदितं धर्मं पालयन्वैष्णवोत्तमः ॥
ज्ञात्वतान्ममनिर्दिष्टधर्मान्भागवतांस्तथा । उपास्यपरमैकान्तिभावमासाद्य वैष्णवः ॥

प्रेमातिशययोगेन प्रद्युम्नादीनवाप्य सः । वासुदेवमवाप्नोति यतो नाऽऽवर्तते पुनः ॥
एवं धर्ममविज्ञाय मोहिता मायया हरेः । निन्दन्तु नाम ते भक्तान्प्रहसन्तु निरङ्कुशाः ॥
तेषां न सङ्गः कर्तव्यः परमैकान्तिभिर्नरैः । सङ्गादेव मतिभ्रंशो जायते नात्र संशयः ॥
श्रीवत्स वैष्णवो धर्मस्तत्राप्येकान्तिनामयम् । न श्राव्यो नास्तिकानां च ये द्विषन्ति रमापतिम् ॥ १९९ ॥
प्रहृष्टौ भगवद्धर्ममाकर्ण्य द्विजपार्थिवौ । द्वयार्थं चक्रतुस्तावद्विज्ञापनमतन्द्रितौ ॥२००॥
ततो नारायणो देवः करुणार्द्रीकृतेक्षणः । द्वयं च मन्त्रराजं च चरमं सूक्तयोर्द्वयम् ॥
समादिदेश सार्थं च तयोर्दीक्षाविधानतः । तदानीमेव संप्राप्तः शरीरे च रमापतिः ॥
ध्यायेत्तं परया भक्त्या विना साधनकोटिभिः । अयमेव परो योगो यच्छक्त्या पुरुषं भजेत् ॥ २०३ ॥
ध्याने नारायणं वीक्ष्य श्रीवत्सादिविभूषितम् । सदा किशोरवयसं कोटिकंदर्पसुन्दरम् ॥
सुस्वरूपावधिं दृश्यपद्मपत्रनिभेक्षणम् । स्फुरद्दिव्यालकव्याप्तवदनाम्बुजमद्वयम् ॥२०५॥
श्रिया भूम्या लीलया च नित्यमुक्तैरुपासितम् । प्राप्यं भोग्यं रक्षकं च यदेकं श्रुतिबोधितम् ॥ २०६ ॥
तदेव ध्यानविषयं संप्राप्य द्विजसत्तमः । तत्रैवालकनन्दायास्तीरे नारायणाश्रमे ॥२०७॥
नृपश्च कौस्तुमालोकी द्वयं ध्यायन्समाहितः । मन्त्रराजं जपंस्तत्र चरमार्थं विचिन्तयन् ॥
पठन्सूक्तं हरेर्नामसहस्रं प्रपठन्मुखात् । उद्वहन्नित्यसंबन्धमात्मनः प्रभुणा सह ॥ २०९ ॥
विरहं चासहन्विष्णोर्दिव्यवक्षःस्थलस्य च । श्रीवत्सलक्ष्मयुक्तस्य श्रीवत्साख्यो द्विजोत्तमः ॥ २१० ॥
ध्यायमानो मुदा तत्र बहुकालं समास्थितः । विष्णुधर्माऽपि राजर्षिः कौस्तुमार्पितमानसः ॥ २११ ॥
तयोः सममवत्कालो यो लोकानां क्षयंकरः । श्रीवत्सकौस्तुमासक्तौ तत्प्रभामुपजग्मतुः॥
नारायणोपदेशेन तीर्थस्याम्बुनिषेवणात् । (*तेन कार्याणि सर्वाणि कारणे विविशुः स्वके ॥ २१३ ॥
एतौ देवि मम प्रीत्वा मामेव शरणं गतौ । ) शङ्खचक्रोर्ध्वपुण्ड्रादिधारणादर्थचिन्तनात
मत्प्रेमातिशयात्सार्ष्टिं प्रयातौ परमोत्सवात् । इयं श्रीवत्ससामीप्ये या प्रभा ह्यवलोक्यते ॥ २१५ ॥
या तु कौस्तुभसामीप्ये तदाकारा तु वा प्रभा । तावेव द्विजराजानौ भवतीव मया धृतौ
योऽयं मम तनौ भाति विशेषोऽब्धिसमुद्भवे । नित्यो वा मम भक्तो वा मद्योगं प्राप्य तिष्ठति ॥ २१७ ॥
क्व चायं प्राकृतो जीवो मायया मलिनीकृतः । क्वेयं भक्त्यभिधा दूती यया ऽहं संपुटीकृतः ॥ २१८ ॥

---

* अयं ग्रन्थः क. पुस्तके वर्तते ।

---

१ क. ॰नतीरय सः ।

भक्त्याऽहमेकया ग्राह्यो नाहं साधनकोटिभिः । नाहं त्वां विसृजे भक्त्या वक्षसा धारयाम्यहम् ॥ २१९ ॥
एष एव परोपाय उपायानां शतेषु च । परमैकान्तिभावेन यो मामेवं प्रपद्यते ॥ २२० ॥
एवं प्रबोधिता लक्ष्मीः पुरा मे पद्मसंभव । हास्येन स्मारिता भूयो न त्वं शोचितुमर्हसि
यदि ते मुक्तिकामोऽस्ति संसारात्कमलासन । तदा मच्छरणं याहि परमैकान्तितां भजन्
रूपं तु वैष्णवं कृत्वा तनुं संताप्य हेतिना । नैवातप्ततनुर्ब्रह्मन्यतो मामुपयाति हि ॥
नाम्नां द्वादशकं धृत्वा दिव्यसृष्टिं विचिन्तय । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु
मदनन्यार्हशेषोऽभूर्मदनन्यार्हसाधनः । न ते बन्धः प्रभविता सत्यं सत्यं वदाम्यहम् ॥२२५॥
मामुवाच ततो धर्मं निजं संस्कृत्य हेतिना । मुनयो निवसाम्यत्र वैष्णवं वेषमुद्वहन् ॥
भवन्तोऽपि मदादेशाद्धर्मं भागवतं मम । प्रबन्धैः स्वैर्विनिर्माय मुमुक्षूञ्शरणागतान् ॥
दिशन्तु हेतिसंस्कारपूर्वकं विनिवृत्तये । सुदर्शनाभिधा गीता गेया सज्जनसंनिधौ ॥२२८॥
पुण्यर्क्षे पुण्यवारे च पुण्यमासे तिथौ तथा । पुण्यतीर्थे विशेषेण द्वादश्यां श्राद्धवासरे ॥
वैष्णवैर्वैष्णवी गीता श्रीवत्सचरितान्विता । श्रोतव्या च तथा श्राव्या जन्मबन्धविनाशनी ॥ २३० ॥
वैष्णवाय प्रयच्छन्ति लिखित्वा पुस्तकं तु ये । ते वैष्णवा भविष्यन्ति परमैकान्तिनोऽमलाः ॥ २३१ ॥
इति वः कथितं विप्राश्चरितं ह्यात्मनो मया । किं भूयः श्रोतुमुत्कण्ठा मुनयो ज्ञानदर्शिनः ॥ २३२ ॥

इति श्रीबृहद्ब्रह्मसंहितायां सुदर्शनगीतायां श्रीवत्सचरिते सूक्ताविर्भावे पुरुषसूक्ताराधनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

समाप्तोऽयं प्रथमः पादः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ १३५२ ॥

---

अथ प्रथमोऽध्यायः ।

---

ऋषय ऊचुः—

ब्रह्मञ्श्रीवत्सचरितात्संदेहो विगतो हि नः । विना भागवतं धर्मं वैष्णवी दुर्लभा गतिः॥
विष्णोः स्वरूपं लोकं च वैष्णवं धर्ममुत्तमम् । गतिं विस्तरतो ब्रूहि प्रजास्तव पितामह

श्रीब्रह्मोवाच—

के वै विमातुं प्रभवन्ति विष्णोः स्वरूपलीलाविभवांस्तु लोके ।
तस्तम्भ यो विश्वमिदं समस्तं पादेन चैकेन समस्तसत्त्वम् ॥ ३ ॥
अहं पुरा नाभिसरोजजातो महाजलौघे श्वसनावधूते ।
न यत्र सूर्येन्दुहुताशना यो दिगन्तरं तान्गमयांचकार ॥ ४ ॥

अभूतपूर्वं परितो निरीक्ष्य तमश्चकम्पे मनसाऽहमेकः ।
कोऽहं किमेतत्क च संस्थितोऽहं कस्याहमत्र प्रकरोमि किं वा ॥ ५ ॥
एवं विचारेण चिरं विमुह्यंश्चैतन्यरूपोऽपि विमोहितोऽत्र ।
अपश्यमत्यन्तविकासमादौ तिरस्कृतानन्तदिनेशकान्ति ॥ ६ ॥
हिरण्मयं पङ्कजमप्रमेयं सहस्रपत्रं विकसत्सुकोशम् ।
सकर्णिकारं सितवर्णमद्भुतं समस्तविश्वस्य निधानभूतम् ॥ ७ ॥
विलोक्य पद्मं परितः प्रवृद्धं कुतोऽस्य मूलं किमिदं व्यतर्कि ।
निरीक्ष्य किंचिद्विवरं च तस्मिन्नहं प्रविष्टः परिलब्धमार्गः ॥ ८ ॥
तस्मिन्गतोऽहं न ददर्श पारं नवै पुनर्निर्गनाय मार्गम् ।
एकोऽहमब्जान्तरसंनिविष्टश्चिन्तामनन्तां मनसात्ववापम् ॥ ९ ॥
प्रभ्राम्यतो मे निरगादनन्तः कालः कलाभिः कलयन्ननायुः ।
अण्डं च हैमं विधृतं मुरारेर्महौजसा तत्र ददर्श चैकः ॥ १० ॥

तदण्डं पञ्चभूतात्ममूतं शुद्धमतर्कितम् । तद्भेत्तुमसमर्थोऽहमासमानतवीक्षणः ॥ ११ ॥
तदाऽहं देवपद्मस्य पुनर्नालमुपेयिवान् । तन्मार्गेण गतो भूयो ह्यपश्यं कंचिदद्भुतम् ॥१२॥
पुरुषं तत्र संसुप्तं नागभोगे निरामयम् । यन्नाभौ लोकपद्मस्य नाल एष नियोजितः ॥
यस्य प्रकाशलेशेन नालरन्ध्रप्रवर्तिना । भातं कमलकिञ्जल्कपत्रकेसरवैभवम् ॥ १४ ॥
काऽपि तत्रारुणापाङ्गा सुन्दरी रूपमञ्जरी । संश्लिष्टा दिव्यवसना चन्द्रिकायुतशीतला॥
प्रसुप्तपरिवारान्तामीषद्विकसितेक्षणाम् । लीलयाऽऽलीढहृदयां मातरं वीक्ष्य विस्मितः ॥
सा मामुवाच जठरे मया पूर्वं चिरं धृतः । पुरुषानुमते भूयो विश्वसृष्टौ बहिष्कृतः ॥
अनेन नालमार्गेण कथं पुनरिहाऽऽगतः । अजानन्नात्मनो योनिमिव मध्ये प्रधावसि ॥
पद्मनाभः पिता ह्येष तव पुत्र सनातनः । *यदन्यद्द्रष्टुकामोऽसि किमप्यन्याद्विलोकय ।
संहृत्य लोकान्विश्वात्मा ह्यनिरुद्धसमुद्भवः । अनिरुद्धांशजो धीमान्पद्मनाभः पुरातनः
तदाऽहं कौतुकाकाङ्क्षी नमस्कृत्याऽऽददे वचः । मातरस्यान्तमभ्येतुं यामि मे देहि शासनम् ॥ २१ ॥
विहस्य मामुवाचेदं गच्छ पुत्र यथासुखम् । गत्वाऽहं तत्र मुनयो न्यग्रोधं वीक्ष्य सस्मितः
वटपत्रपुटे विष्टं पद्मनाभं सपन्नगम् । कोमलाङ्गं श्रिया युक्तं बालरूपं चतुर्भुजम्॥ २३ ॥
यस्य नाभिह्रदे पद्ममद्राक्षं भ्रमरोपमः । तत्रैकां सुन्दरीं दृष्ट्वा बद्धपाणिपुटां सतीम् ॥
अवोचं तामुपेत्याहं काऽसि कल्याणि संनिधौ । कोऽयं च पुरुषः शेते वटपत्रे महाद्युतिः
सा मामुवाच विकसद्वदना विश्वकारिणी । दुर्गाशक्तिः समाख्याता पादलीलाविहारिणी ॥ २६ ॥
नियोगात्पुरुषस्यास्य संलब्धबलपौरुषा । विष्णोः शक्तिर्महाभाग नान्यं देवं भजाम्यहम्
शक्याऽभिभवितुं नाहं केनापि पुरुषेण वै । महाविभूतिसंस्थस्य दुर्गभूता वसाम्यहम् ॥
विना विष्णुप्रसादेन मामनादृत्य कर्मणा । लीलाभूमिमवाप्नोति कोऽपि नैव जगत्त्रये ॥

---

* इदमर्धं ख. पुस्तके नास्ति ।

न चाहं परिखाकारा शैलकाननभित्तयः । स्वशक्त्या सर्वतो व्याप्ता दुर्गभूताऽस्मि वैष्णवी ॥ ३० ॥

अहं न्यग्रोधरूपाऽस्मि ह्यनिरुद्धांशजाऽनघ । पश्यैनं तरुराजं च पुरःस्थं कारणात्मकम्
यावन्ति वटपत्राणि कोटिशो विलसन्ति हि । तेषु सर्वेषु मत्स्वामी परमात्मा समाहितः
पुटपर्यङ्कसंसुप्ता बालरूपाश्चतुर्भुजाः । ज्ञानरूपबलोपेताः पद्मनाभेति कीर्तिताः ॥ ३३ ॥
यथा त्वद्योनिभूतोऽसौ यस्य नाभेस्त्वमभ्यगाः । एवमेतेषु सर्वेषु नाभिनालान्विलोकय
तेषु त्वमिव ब्रह्माणः कोटिशो विचरन्ति हि । स्वस्य स्वस्य च नालस्य नान्तं गच्छन्ति केचन ॥ ३५ ॥

मयैव ह्यावृताः सर्वे दुर्गया दुर्गरूपया । अभिभूयानिरुद्धं मच्छेषिणं परमेश्वरम् ॥ ३६ ॥
न गच्छन्ति त्रिपादस्थं वासुदेवं सनातनम् । यदि ते संशयो देव गच्छ चान्यत्र पश्य च
यत्र यत्र महाबाहो गमिष्यसि दिदृक्षया । पुरुषेण सहैवं मां दुर्गाख्यं परिपश्यसि॥३८॥
एकैवाहं महाभाग कोटिब्रह्माण्डवेष्टने । एकेनाहं च देवेन रक्षिता बहुरूपिणा ॥ ३९ ॥
अन्याश्च शक्तयस्तस्य कोटिशः प्रभवन्ति हि । दुर्गाख्ये कर्मणि तथा दुर्गैकाऽहं प्रतिष्ठिता
ये मामुपासते लोका दुष्करेष्वपि कर्मसु । तेषां पादविभूतिस्थं कार्यं सर्वं करोम्यहम् ॥
जगत्येवं नियोगो मे ब्रह्मन्भगवता कृतः । तदधीनाऽस्मि तच्छक्तिः शक्ताऽहं नातिवर्ति-तुम् ॥ ४२ ॥
अप्राकृतविहारस्थाः शक्तयः कमलोद्भव । उपासांचक्रिरे विष्णुं कोटिशस्तदनुज्ञया ॥
इत्युक्तोऽहं गतोऽन्यत्र वटपत्रे प्रहृष्टधीः । एकाकिनं बालरूपमपश्यं पुरुषोत्तमम् ॥४४॥
पादस्याङ्गुष्ठमादाय पिबन्तं सुन्दरस्मितम् । तमादातुं ममेच्छाऽभूद्बालं ज्ञात्वा महर्षयः ॥
तावन्मां वारयामास दुर्गा देवी समेत्य च । नेयं लीला भवद्योग्या बीजभूतान्यसंसृतेः ॥
अस्या अन्तमनालोच्य कथमन्यामुपेष्यसि । नाधिजग्मुः परे पारं ब्रह्माणः कालचालिताः
एवमुक्तोहमवदं त्वमेका व्याप्य संस्थिता । प्रदर्शय महामाये स्वरूपं पुरुषस्य ते ॥ ४८॥
अन्तर्हिता तदा देवी सकाशमगमं शिशोः । तेनाहं स्वास्यमार्गेण ह्यन्तर्नीतोऽस्मि चक्रिणा ॥ ४९ ॥
अपारजलधौ तत्र कोटिशो वटपादपाः । कोटिशः पुरुषास्तत्र वटपत्रनिवासिनः॥५०॥
कोटीनां वटवृक्षाणामनन्तपुटतल्पगाः । अनन्ताण्डसमाधाराः कोऽवधारयितुं क्षमः ॥
दुर्गाभिर्दुर्गमास्ते तु सर्वे सत्यमनोरथाः । विस्मृतोऽस्मि स्विकां योनिं यामपोह्येह चाऽऽ-गतः ॥ ५२ ॥
यस्य नाभिसमुद्भूतनालगर्भकृतालयः । क्वासौ स पुरुषः साक्षादनिरुद्धात्मकः परः॥५३॥
क्व च सा सुन्दरी देवी नीलोत्पलविलोचना । क्व च सा दुर्गमा शक्तिर्ययाऽहं विनिवा-रितः ॥ ५४ ॥
एवं चिन्तयमानस्य पुरतो मम सुन्दरी । आविर्बभूव दुर्गाख्या दुर्गमा सर्वदैवतैः॥ ५५ ॥
ब्रह्मन्नासादितं पुंसो वैभवं किमियत्तया । निवारितो मया पूर्वं वचो मे नावधारितम् ॥
स्वामिनो मम लीलेयं पादरूपा महात्मनः । निगृहीता न केनापि त्वद्विधैरवलोकिता ॥

न मायया भ्रमश्चैष स्वप्नवत्कमलोद्भव । अनन्तानन्तरूपेण शक्तिश्चैषा रमापतेः॥ ५८ ॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । स एव पुरुषः साक्षादाधारः पुरुषोत्तमः ॥
अनादिर्वैष्णवी चैषा पादलीलाऽवधार्यताम् । अविज्ञातेति यज्ज्ञानं तज्ज्ञानमिह कथ्यते
मया ज्ञातमिति ज्ञानमज्ञानं कमलोद्भव । अज्ञानेनाऽऽवृतो जीवो मुह्यत्येवेति मे मतिः
संप्रार्थ्यश्चैष पुरुषः प्रकृतिं गन्तुमात्मनः । विजिज्ञासामीति धियं विनिवर्तय सर्वतः ॥
एवमुक्तोऽनया देव्या बद्धाञ्जलिरहं पुनः । स्वाभिमानं परित्यज्य बभाषे शरणं गतः ॥
तस्मिन्नेव महावृक्षे प्राप्तो वक्त्राद्विनिर्गतः । अपश्यं वटपत्रस्थं सदुर्गं पुरुषं परम् ॥६४॥
शरीरान्मुनयस्तावत्सुन्दर्यौ मम निर्गते । विलीना नयने चैका हास्ये चैका परात्मनः ॥
संशयो मे महानासीन्मुनयः समवेक्ष्य ते । दुर्गा विहस्य मामाह किमर्थमनुशोचसि॥६६॥
अयं तु पुरुषः साक्षाद्वटपत्रपुटे स्थितः । शक्तयो बहवः सन्ति तत्रामू च विनिर्गते ॥
हास्यरूपेण वदने लीलाख्या वसति प्रभोः। व्यामोहिनी महाशक्तिः सहासे नयनाम्बुजे
लीलया विधूतस्त्वं तु पारं गन्तुं मनोऽकरोः । मया निवारितो नूनं न बुद्धः कम-
लोद्भव ॥ ६९ ॥
मोहिन्या मोहितस्त्वं तु विस्मृतो योनिमात्मनः । प्रविष्टेऽमू शरीरे ते यावन्न शरणं गतः
मदाज्ञया प्रपन्नस्य शरीरात्ते विनिर्गते । द्रुतं ते स्वाश्रयं प्राप्ते प्रभोः प्रीतिं विधाय च ॥
एवं ज्ञानादयोऽनन्ताः शक्तयः पूर्णरूपतः। महाविभूतिलीलायां पादे पादेन संस्थिताः
कृतं कर्म करिष्यामो वयमत्र तदाज्ञया । हरिर्यथा यथा स्वांशैराविर्भूतस्तथा वयम् ॥
एक एव पुरैवाऽऽसीद्देवो नारायणः स्वयम्। स्वांशैरशेषैः संयुक्तो नामरूपक्रियोज्झितैः॥
एवं रमा महाशक्तिः शक्तीनां परमाय[हि]'सा। तस्यामेव वयं सर्वा लयं यामो युगात्यये
विलीना हृदये तस्य या रमेत्यभिधीयते । ययाऽयं रमते नित्यं तस्मादेषा रमा स्मृता ॥
यावन्तश्चेतना भावाः प्रसिध्यन्त्यादिसंभवे । अचेतनसमालीढाः प्रलीयन्ते निजात्मनि॥
वयं च त्वमिमे सर्वे स्वांशैः शुद्धैर्भलीमसैः । सर्वं नारायण इति परिशिष्येत नापरः ॥
यथा वटप्रवालानि स्कन्धशाखाः फलानि च । अदृश्यान्येव तिष्ठन्ति बीजे बीजस्वरू-
पतः ॥ ७९ ॥
सिसृक्षया पुनस्तस्य रमा क्रीडनकात्मिका । भूम्या च लीलया साकं भिन्ना भवति
पद्मज ॥ ८० ॥
भूमिराधाररूपा हि लीलाकेल्यङ्कुरोदयम् । करोति सततं विष्णोर्नयनाङ्गणनर्तकी॥८१॥
रमा तु सर्वरूपेण समस्ताश्रितशक्तिभिः । विनोदयति भूयिष्ठं परिपूर्णाऽनपायिनी ॥
भविष्यति रमैवैका कीर्तिकान्त्यादिरूपिणी । सरस्वत्यादिरूपेण तथा मत्स्यादिरूपिणी॥
ब्राह्मी गौरी गिरा देवी सीता सत्या च रुक्मिणी ।सत्यभामा धरारूपा लीला गोपसुता
भवेत् ॥ ८४ ॥
अहनप्यनयोर्दासी केल्यावरणरूपिणी । महिषादिमहारूपान्नाशयिष्येऽसुरान्बहून् ॥
यदाऽयं पुरुषः पूर्णो वसुदेवाद्भविष्यति । भारापनोदनार्थाय सुरकार्यचिकीर्षया ॥
तदाऽहं नन्दभार्यायां यशोदायां महाबला। मोहनाय भविष्यामि त्वमाज्ञास्यसि भूयशः॥

ब्रह्माण्डानामनेकेषां सृष्टानां कमलोद्भव । सर्वत्र वटरूपेण ह्यनिरुद्धसमुद्भवा ॥ ८८ ॥
तिष्ठामि दुर्गरूपेण दुर्गमाऽहं दुरात्मनाम् । निदानं भगवद्भक्तैः परमैकान्तिनां सुखम् ॥
मत्परा तु परा लीला ह्यसंख्याता न संशयः । नित्यमुक्तजनैः सेव्या तत्र शक्तिर्न वै मम
वैकुण्ठाधीश्वरी देवी लक्ष्मीर्नित्याऽनपायिनी । सा समाराधिता नूनमंशेन कमलाऽपि वा ॥ ९१ ॥
नारायणेन सहिता तदुक्तागमचिन्तया । पादलीलां परित्यज्य गुणत्रयविवर्जितम् ॥
मुक्तः स तु महालीलारसं जानाति नापरः । यथा विश्वसुखं कोऽपि मामृते नाधिगच्छति ॥ ९३ ॥
एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत । अहं च नालमार्गेण कर्णिकायामुपस्थितः ॥
एवमेष महालीलो भगवान्भूतभावनः । वक्तुं द्रष्टुं च विज्ञातुं न शक्यः कोटिजन्मभिः ॥
मुनयो बीजभूतं हि स्वरूपं कारणात्मकम् । कार्यभूतं च वक्ष्यामि यदि वो मनसो रुचिः

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १४४८ ॥

---

अथ द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीब्रह्मोवाच—

संस्कृतोऽहं यदा विप्राः परमैकान्त्यसिद्धये । तदा मामवदद्विष्णुः स्वरूपं मेऽनुचिन्तय ॥ १ ॥
चिन्तयानः स्वरूपं मे मां परं सर्वकारणम् । अभ्येति पुरुषो नूनमात्मानमजमव्ययम् ॥
तदाऽपृच्छमहं तस्य स्वरूपं ब्रह्मलक्षणम् । यत्प्राप्य न निवर्त्तन्ते पुनः संसारवर्त्मनि ॥

श्रीनारायण उवाच—

आनन्दलक्षणं ब्रह्म मत्स्वरूपमविक्रियम् । क्लेशादिभिरसंस्पृष्टं निष्क्रियं निर्विकल्पकम्
अद्वंद्वमनवच्छिन्नं स्वसंवेद्यं निरञ्जनम् । सुसूक्ष्मं स्ववशं स्वैरं स्वयं ज्योतिरनादिमत् ॥
ध्रुवमेकं सदानन्दस्वरूपं सर्वगं धरम् । गतागतविनिर्मुक्तं वासुदेवाह्वयं प्रभु ॥ ६ ॥
श्रुत्वेदं संशयमना भूयः संपृष्टवानजम् । सर्वगं च धरं चेति निष्क्रियं निर्विकल्पनम् ॥
कथं स्याद्भवतो रूपं विरुद्धं प्रतिभाति मे । निष्क्रिये गमनं कुत्र धारणं निर्विकल्पने ॥

श्रीनारायण उवाच—

अहं तु परिपूर्णात्मा परिच्छेदविवर्जितः । परिच्छिन्नं मया सर्वं द्वितीयं यद्विलोक्यते ॥
ममैव शेषरूपत्वादहमेव तदेव च । तत्तदाकारतस्तत्र तत्र चान्यत्र संस्थितः ॥ १० ॥
अचञ्चलो यथा चन्द्रो व्योममण्डलमास्थितः । चलद्भिर्जलदैर्ब्रह्मंश्चलन्निव यथा भवेत् ॥
मच्छरीरतया सर्वं श्रुत्या स्मृत्या विनिश्चितम् । सामानाधिकरण्यं तु तत्कृतं मयि भासते॥
तत्सृष्ट्वा तत्प्रविश्याहं सर्वनामतया स्थितः । अतो मां सर्वगं प्राहुः सर्वं च मयि संस्थितम् ॥ १३ ॥

मदायत्तस्थितित्वाच्च मच्छरीरतया विधे। अहमात्मतया धर्ता सर्वस्यास्य महामते ॥
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्। सेतुर्विधृतिरित्येवं श्रुतिस्मृत्यवबोधितः ॥
न तदस्ति विना यत्स्यान्मया भूतं चराचरम्। अतो मां धारकं प्राहुः सतरङ्गमिवाम्बु-
धिम् ॥ १६ ॥
दृश्यमानमिदं सर्वं चेतनाचेतनाश्रितम्। अदृश्यरूपमासाद्य कारणे मयि संस्थितम् ॥
अक्षरं लीयते तावत्तमसीतिश्रुतिर्जगौ। तमः परस्मिन्मय्येव नाहमन्यत्र कुत्रचित् ॥
मत्तः परतरं नान्यत्किंचिदस्ति मनागपि। अहं सर्वस्य प्रभवो मत्तः सर्वमिदं जगत् ॥
दृश्यरूपतया सर्वं काष्ठादग्निरिवोत्थितम्। नामरूपक्रियाभिश्च मयि सर्वं प्रतिष्ठितम् ॥
मृद्येव सूक्ष्मरूपेण निर्विशेषतया स्थितः। विशेषरूपेण यथा मृद्येवोन्मज्जते घटः ॥२१॥
सघटाऽपि मही पूर्वं निर्घटा ह्यनुभूयते। पश्चाद्घटेन संयुक्ता सविशेषा प्रतीयते॥२२ ॥
एवं विकल्पहीनोऽपि सविकल्पो भवाम्यहम्। आधारोऽहमशेषस्य सर्वावस्थास्थि-
तस्य च ॥ २३ ॥
मय्येव निर्विकल्पत्वं सविकल्पत्वमीक्ष्यताम्। वटबीजे वटो ब्रह्मन्वीक्ष्यते नापि वीक्ष्यते॥
सर्वं कार्ये मयि व्यक्तमव्यक्तं कारणे मयि। सर्वमेवाहमेवं च न चाहमहमेव च ॥ २५ ॥
सर्वाधारतया ब्रह्मन्नहमेकोऽद्वयः परः। मदेकायनतः सर्वमहमेव न संशयः ॥ २६ ॥
द्वैतं नास्तीति बोधेन मनसो द्वैतनाशनम्। एतदन्तो हि संसारो ब्रह्मन्नेवं विचारय ॥
प्रभवं सर्वभूतानामीश्वरं पुरुषोत्तमम्। स्वभावनिर्मलं नित्यं निस्तरङ्गं निराकुलम् ॥२८॥
निर्गुणं तं गुणातीतं सगुणं सर्वकामदम्। हीनवर्णैरसंसेव्यमीक्षमाणैरतर्कितम् ॥ २९ ॥
मुनयः पुनरेवाहमपृच्छमकुतोभयः। संदेहमभजत्क्वैव जायते कोऽपि मानुषः ॥ ३० ॥
गुणातीतं हि सगुणं कथं भवितुमर्हति। हीनवर्णैः कुतोऽसेव्यं कथमन्यैरतर्कितम् ॥

श्रीनारायण उवाच—

स्वभावनिर्मलत्वं मे स्वरूपमवधारय। कदाऽपि प्रकृतेः सङ्गान्मालिन्यं नोपजायते ॥
अंशात्मकस्य मे ब्रह्मन्मलिनांशे तु वै पुनः। मालिन्यं जायते योगादिति मे निश्चयः
प्रिय ॥ ३३ ॥
ममैवांशो जीवलोके जीवभूतः सनातनः। प्रकृतेः कार्यभूतानि मनः पञ्चेन्द्रियाणि च ॥
तान्यात्मत्वेन गृह्णाति मालिन्यादिति कथ्यते। अनात्मत्वेन जानाति यदा सोऽपि
मदात्मकः ॥ ३५ ॥
निर्मलो भवति ब्रह्मन्यथाऽहं पुरुषोत्तमः। मत्प्रसादादहं तावदात्मैषां नित्यनिर्मलः ॥
कदाऽपि मलसंयोगो वियोगो नापि मे भवेत्। चिदचित्प्रकृतौ यद्यप्यन्तर्यामितया
स्थितः ॥ ३७ ॥
लीलार्थमवतारादौ यद्यप्यनुकरोम्यहम्। अनुग्रहीता जानन्ति मामेकं ज्ञानविग्रहम् ॥
मलिनं मां विजानन्ति मलिना मम मायया। तेषां न सङ्गः कर्तव्यो मदीयैर्मोक्षकाङ्-
क्षिभिः ॥ ३९ ॥

---

१ कु. 'योगः संयो'।

कदाऽपि प्रकृतेः सङ्गो मोहकः स्यान्न वै मम । मत्त एव प्रभवतः स्मृतिज्ञानव्यपोहने ॥
स्वभावनिर्मलोऽहं वै सर्वावस्थासु पद्मज । अंशो मे जायते ब्रह्मन्नवस्थान्तरमागिह ॥
बन्धावस्थाकृतं तत्र मालिन्यमनुभूयते । अहमज्ञो ब्रह्मणश्च संसारी सुखदुःखभाक् ॥
ब्रह्मैवास्मीति बोधेन तत्साद्दश्यमुपेत्य सः । निर्मलो भवति ब्रह्मभ्मत्तेजो ह्यमलं महत् ॥
द्विविधेऽपि ममैवांशे संसारो ह्यवलोक्यते । लोकं दृष्ट्वा तु चैकत्र व्यामोहादेकतो मतः
अवतारस्वरूपे तु लोकदृष्ट्या न मोहतः । जीवरूपे ममैवांशे मोहतः परिकीर्तितः ॥४५॥
अंशयोगेन मय्येवं संसारं श्रुतिरुज्जगौ । स्वभावनिर्मलत्वं हि मतं व्यावर्तकं द्वयोः ॥
अनंशभूते पूर्णे तु परमात्मनि शेषिणि । स्वभावतो न मालिन्यं शेषयोर्नापि तत्त्वतः ॥
तरङ्गभूतयोरेतदंशयोः पुरुषोत्तमः । पृथक्त्वान्निस्तरङ्गोर्मिः संसाराच्च निराकुलः ॥४८॥
समष्टिव्यष्टिदेहत्वान्मानं मे प्रतिभासते । उभयोरात्मभूतत्वान्निर्गुणं मां प्रचक्षते ॥ ४९ ॥
सत्त्वादित्रिगुणः प्रोक्तो जीवोंऽशः सगुणो मतः । मोक्षेऽपि निर्गुणं सोऽपि गुणातीतो यदुच्यते ॥ ५० ॥
अहं तु निर्गुणो नित्यं प्रकृतेः सङ्गवर्जनात् । प्रपन्नस्य ममांशस्य गुणत्रयविमोचकः ॥
निर्गुणो मम शब्दोऽयमंशव्यावर्तको मतः । नित्यानन्तगुणैः पूर्णः सगुणोऽहं परात्परः ॥
एकस्यैव ममांशस्य गुणव्यामोहतो जगत् । द्वितीयस्यान्यदृष्ट्या तु भासते नापि बन्धनम् ॥ ५३ ॥
सगुणानां मदंशानां गुणित्वविनिवृत्तये । निर्गुणोऽपि मदंशोऽन्यो गुणवानिव भासते ॥
हीनवर्णैर्ज्ञानशून्यैरसेव्योऽहं न संशयः । त्रिधा भिन्नं स्वरूपं मे न जानन्ति कदाचन ॥
पूर्णरूपमविज्ञेयं ज्ञेयं शब्दानुमानतः । आधारभूतं सर्वेषामाधेयानां चतुर्मुख ॥ ५६ ॥
सर्वतोऽन्यतमश्चातः सर्वशब्दैर्न बाध्यते । पूर्णरूपक्रियाभिश्च सर्वेभ्यो ह्यतिरिच्यते॥५७॥
अस्त्याधारतया ब्रह्मन्ननभिव्यक्तकल्पनम् । सदेव सोम्येदमग्र आसीदिति श्रुतेर्बलात् ॥
सदेव ब्रह्म विज्ञेयं गुरुशास्त्रोपदेशतः । अनधीतात्मशास्त्राणां हीनानां सुगतिर्मता॥५९॥
स्वगताशेषसंव्यक्तौ नानाधेयगुणादिभिः । प्राकृताप्राकृतो देवः सर्वरूपो बभूव ह ॥
द्वितीयं ज्ञानमाख्यातं सर्वं विष्णुमयं जगत् । व्यक्ताधेयविशिष्टं हि तृतीयमवधार्यताम् ॥
शुद्धसत्त्वस्वरूपेण परित्राणाय वै सताम् । स्वानुकूलायुधानेकविभवेन समन्वितम् ॥
आविर्भूतं स्वरूपं मे ह्यहमेवाच्युतं परम् । मदीया एव जानन्ति ज्ञानिनो मदनुग्रहात् ॥
यस्मिन्न्यस्तधियो मूढा वैरिणोऽपि चतुर्मुख । मद्गतिं प्राप्नुवन्तीह सर्वशास्त्रेषु डिण्डिमः
ब्रह्मात्मकं जगत्सर्गे कारणे जगदात्मकम् । कार्ये ब्रह्म महाभाग सेव्यं सर्वात्मना बुधैः ॥
कार्यकारणरूपेण ब्रह्मैकं हि द्विधा स्थितम् । ज्ञानशून्यैरगम्यत्वात्कथं सेव्यं भवेदिह ॥
अन्यैर्मुमुक्षुभिस्तात ब्रह्म सेव्यमतर्कितम् । गुरुशास्त्रोपदेशेन संशयस्योपसंक्षयात् ॥
अध्येयं ध्येयमाश्चर्यमवाङ्मनसगोचरम् । षाड्गुण्यविग्रहं सर्वशक्तिस्वाश्रयसंज्ञितम् ॥
इयत्तयाऽनभिध्येयं ध्येयं वस्त्वस्ति वेदनात् । अदृश्यानेकविषयं निर्विशेषं स्वयं च तत्॥
विशेषं न ततो भिन्नं निर्विशेषं न तद्भवेत् । विशेषादपरो यस्माद्विजातीयस्वभावतः ॥
अतोऽस्य ज्ञानमाश्चर्यं वक्तुर्ज्ञातुः स्वरूपतः । विज्ञायाऽऽत्मन्यशेषेण मूकत्वं वहतः सुखम् ॥ ७१ ॥

तदुक्त्वाऽन्यद्वचो नैव वदेत्सैव तु पण्डितः । तमास्वाद्य समस्तानां रसानामयनं परम् ॥
नाऽऽस्वादयेत मतिमान्मायिकं क्षणभङ्गुरम् । अवाच्यं वाच्यतां प्राप्तं वाच्यं याति ह्यवाच्यताम् ॥ ७३ ॥
कार्ये च कारणे ब्रह्मंस्तत्त्वं तदवधार्यताम् । काष्ठाद्युपाध्यभावेऽपि लोहपाषाणकादिषु ॥
प्रकाशदाहसंयुक्तो वह्निस्तिष्ठति नो हिमम् । निरुपाधिकसत्ताऽपि स्वभावान्न विविच्यते
स्वाश्रयं षड्गुणव्याप्तं सर्वशक्तिस्वभावतः । अजस्वभावं ब्रह्मोक्तं ब्रह्मलक्ष्यं मनीषिभिः ॥
कदाचिद्वाच्यतां याति कदाचिद्यात्यवाच्यताम् । प्रकृतेर्गुणसंयोगाद्यद्वाच्यत्वं प्रजायते ॥
नैकरूपमनित्यं तज्जहदित्युच्यते विधे । बृहत्वादिगुणोपेतं सत्यं यज्ज्ञानमद्वयम् ॥ ७८ ॥
सर्वज्ञं सर्वशक्त्येतत्सर्वैश्वर्यसमन्वितम् । नित्यासाधारणानेकविशेषेण समन्वितम् ॥७९॥
सविशेषमिह प्रोक्तं ध्येयं ब्रह्मन्मनीषिभिः । अनित्यप्राकृतानेकविशेषेण समन्वितम् ॥८०॥
सविशेषमिह प्रोक्तं तध्द्येयं योगवर्तकैः । तेनेदं निर्विशेषं हि निर्धर्मकमनामयम् ॥ ८१ ॥
काष्ठादियोगजं वह्नेर्दाहकत्वं यथा भवेत् । अहेयं ज्ञानमैश्वर्यं सर्वशक्त्यादिकं च तत् ॥
कारणे सत्स्वरूपेण निर्विशेषं विचिन्त्यताम् । तद्विशिष्टं परं ब्रह्म सन्मात्रं निष्कलं विधे
निरञ्जनं निराधारमद्वयं तमसः परम् । सत्त्वादिकगुणैर्युक्तं पादलीलाविहारिणम् ॥८४॥
सगुणं परमात्मानं वैराजादिकसंज्ञितम् । रूपं ममैतत्कल्याणं मच्छरीरतया विदुः ॥८५॥
आत्मानमेकमात्मस्थमजहत्स्वगुणान्वितम् । ते प्राप्नुवन्ति मामेव मद्भक्त्या कमलोद्भव
सगुणोपासनं तावत्साधनं निर्गुणस्य च । विविच्य सर्वतोरूपं दिव्यभूषणवाहनम् ॥८७॥
दिव्यायुधधरं दिव्यं नित्यमुक्तनिषेवितम् । दिव्यसद्गुणसंयुक्तं दिव्यलोकनिकेतनम् ॥८८॥
महाविभूतिनेतारं निर्गुणं प्रकृतेः परम् । स्वरूपमिदमेवैकं मम नित्यमकर्मकम् ॥ ८९ ॥
ज्ञानभक्त्यैकसंप्राप्यं मद्विलासनिकेतनम् । परमैकान्तिनां प्राप्यं सत्त्वद्रव्यमयं परम् ॥
ये भजन्ति महात्मानो मामेकं प्रविशन्ति ते । बद्धानां प्राकृतं स्थानं प्रकृत्येकगुणोद्भवम्
मयैवाधिष्ठितं तात त्वन्मुखैर्गुणनायकैः । ब्रह्मविष्णुमहेशाद्यैः सृष्टिस्थित्यन्तकारिभिः ॥
मद्व्यूहांशसमुद्भूतैर्मत्प्रसादात्तवैभवैः । यथा च मद्विहारोऽत्र प्राकृतैर्महदादिभिः ॥९३॥
तथा दिव्यपदे ब्रह्मन्नप्राकृतविभूतिभिः । ममैव केवलं तद्धि लीलानिलयमुत्तमम् ॥९४॥
न प्राकृतजनानां च भोग्यमिन्द्रादिसेविनाम् । मत्साद्दश्यमिह प्राप्ता निवृत्तगुणवृत्तयः ॥
भक्त्या मे ज्ञानिनो ब्रह्मन्समायान्ति ममाऽऽलयम् । समानभोगविभवा जगद्व्यापारवर्जिताः ॥ ९६ ॥
मुक्ता मदात्मका ब्रह्मन्यद्रूपे निवसन्ति ते । दिव्यादिव्याश्रयो ब्रह्मन्नात्मभूतो द्वयोरहम् ॥
अद्वयं स्वाश्रयं ब्रह्मन्स्वरूपं मेऽनुचिन्तय । भगवान्वासुदेवेति परमात्मेति वै हरिः ॥९८॥
विष्णुर्नारायणश्चेति ब्रह्मेति श्रुतयो जगुः ॥ ९९ ॥

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे विष्णुस्वरूपकथनं नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ १५४७ ॥

---

१ क. °ह ध्येयं सूक्ष्मं द्वयमयोगतः ।

अथ तृतीयोऽध्यायः ।

श्रीनारायण उवाच—

ब्रह्मंस्तेऽहं प्रवक्ष्यामि कृपया लोकनिर्णयम् । यस्य श्रवणमात्रेण सर्वपापाद्विमुच्यते॥
आत्मैकः परमात्मैकः पुरुषो द्विविधो मतः । आत्मा मच्छेषभूतोऽसावहमेव न संशयः॥
सच्चिदानन्दरूपोऽयं नित्यदुःखस्वभावतः । परतन्त्रोऽणुरूपश्च व्यापकश्च प्रकाशतः ॥३॥
भासको ह्यचितः स्वस्य चितोऽपि मम वल्लभः । अहमस्मीति बोधेन ज्ञानरूपोऽवधार्यताम् ॥ ४ ॥
जानामीति प्रयोगेण ब्रह्मञ्ज्ञानगुणः स्मृतः । जीवोऽयं द्विविधस्तावदक्षरक्षरभेदतः ॥५॥
क्षरः प्रकृतिसंयोगाद्बद्ध इत्युपचर्यते । अक्षरः प्रकृतेर्मुक्तो मुक्त इत्यभिधीयते ॥ ६ ॥
प्राकृतो योऽहमित्युक्तो भावो लोकतया स्मृतः । सर्वं हि प्रकृतेर्जातं सर्वत्रैव विलोक्यते
प्रकृतेर्योगतो ब्रह्मन्प्राकृतोऽसौ मतो मम । अतः प्रकृतिलोकोऽयं विज्ञेयः प्रथमं विधे॥८॥
ब्राह्मणादिकवर्णोऽहं शरीरस्यानुयोगतः । लोकोऽयमपरो ब्रह्मंस्तृतीयो ह्याश्रमाभिधः॥
यद्यदुत्पद्यते ब्रह्मन्यावत्तत्रावतिष्ठते । सकलः स हि वै लोकः सूक्ष्मदृष्ट्याऽवलोक्यताम्॥
कर्मणां तारतम्येन प्रकृतेः परिणामतः । यो यो भावः प्रसिध्येत जीवलोकः स एव हि ॥
पातालतलमारभ्य ये लोकाः सप्त कीर्तिताः । बिलस्थास्तामसास्ते तु जीवक्रीडनभूमयः॥
स्वर्लोकश्च ततः प्रोक्तो यत्रेन्द्रादिविभूतयः । सात्त्विका निवसन्तीति नम्या राजसतामसैः ॥ १३ ॥
स्वर्गादपि महर्लोको जनलोकस्तपस्ततः । सत्यस्तदुपरि ब्रह्मन्यत्र त्वमपि तिष्ठसि ॥
स्वर्गस्थानां नमस्यास्ते महरादिनिवासिनः । मायिकेषु ममैवैषा ज्ञेया लोकचतुष्टयी ॥
वैष्णवानां निवासाय यावत्तव लयो भवेत् । निर्मितं शुद्धसत्त्वेन गुणेन प्रकृतेर्मया ॥

ब्रह्मोवाच—

भगवन्भूतभव्येश लोकाः प्रकृतिसंभवाः । क्षरजीवविहारार्थं सप्त प्रोक्ताः क्रमात्पुनः ॥
अन्तरा यत्प्रमाणाश्च यादृशा यदधिष्ठिताः । भूर्लोकः कथितो यावत्प्रमाणोत्सेधविस्तरैः
सरिच्छैलवनोद्देशवर्षसागरराजभिः । तावत्सर्वं समाचक्ष्व विभूतिस्ते रमापते ॥ १९ ॥
भुवर्लोकस्य किं मानं शक्त्या ते विधृतो हि यः । त्वयि सूत्रे सितं सर्वमात्मा त्वमसि सर्वशः ॥ २० ॥
स्वर्गादीनां स्थितिं ब्रह्मंस्त्रिपदैकपदस्य ते । लोकं विज्ञातुकामोऽस्मि तव सिद्धान्तवर्त्मना ॥ २१ ॥

श्रीनारायण उवाच—

भूर्लोकादप्यधस्ताद्धि लोकाः सप्त प्रकीर्तिताः । तेषां नामानि मर्यादा ह्यन्तरालेन वच्म्यहम् ॥ २२ ॥
अतलं प्रथमं तस्मादधस्तु वितलाह्वयम् । तृतीयं तु तलं ज्ञेयं चतुर्थं तु गभस्तिमत् ॥
पञ्चमं महदाह्वानं सुतलं षष्ठमीरितम् । पातालं सप्तमं यत्र मत्कला विश्वधारिणी ॥

सप्ततिस्तु सहस्राणामुच्छ्रायः कथितो मया । दशसाहस्रमेकैकं तलं भवति पद्मज ॥
शुक्लकृष्णाऽरुणा पीता शर्करा रौप्यकाञ्चनी । भूमयो यत्र सन्त्यङ्ग वरप्रासादशोभिताः
तत्र दानवदैतेयजातयश्च सहस्रशः । सन्ति भोगसमाविष्टाः स्वर्गादप्यधिकश्रियः ॥
भक्ष्यं भोज्यं तथा पेयं स्वादिष्ठं गुणवत्तरम् । मणीनां दीप्तयो यत्र बाधन्ते ध्वान्तसंहतिम् ॥ २८ ॥
नार्को न चन्द्रमास्तत्र जनैराकाङ्क्ष्यते क्वचित् । विहारभूमयो यत्र सरित्कासारवापिकाः
स्वर्लोकादतिरम्याणि पातालानि भवन्ति हि । अपवर्गसुखं यत्र नेच्छन्ति मनसाऽपि हि
पातालानामधस्तात्तु सहस्रेषु प्रजापते । त्रिंशत्संख्येष्वतीतेषु योजनानामहीश्वरः ॥
आस्ते संकर्षणः साक्षात्कर्षको द्रष्टृदृश्ययोः । सात्वतीया महाभागा मदीया यमुपासते॥
यस्याऽऽननात्समुत्पन्नः शिवः संकर्षणात्मकः । यस्य मूर्ध्नि मही ब्रह्मन्सशैलवनकानना॥
राजते पुष्पमालेव मद्यपानलसद्दृशः । सहस्रशिरसि व्यक्तस्वस्तिकामलभूषणः॥ ३४ ॥
फणामणिसहस्रेण यः सदा द्योतयन्दिशः । सर्वान्करोति निर्वीर्यान्हिताय जगतोऽसुरान्॥
मदाघूर्णितनेत्रोऽसौ यः सदैवैककुण्डलः । उपास्यते स्वयं कान्त्या वारुण्या चैव मूर्तया ॥ ३६ ॥
कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः । संकर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥ ३७ ॥
स्वयं शय्यास्वरूपेण धत्ते मां रमया सह । अतलादिषु विज्ञेयाः क्रमात्तामसयोनयः ॥
बलो हरौ बलिश्चैव मयः क्रोधवशो गणः । पणयो वासुकिश्चैते बिलेषु निवसन्ति हि ॥
एषामाधारभूतोऽहि भगवाञ्शेषसंज्ञकः । स्थानान्येतानि गच्छन्ति पुण्यशीला हि जन्तवः ॥ ४० ॥
पापिनां निरयस्थानं निबोध कमलासन । भूमेरधो जलादूर्ध्वं दक्षिणस्यां दिशि स्थितम् ॥ ४१ ॥
स्थानं पितृगणानां च ह्यग्निष्वात्तादयश्च ते । साधयन्ति हितं स्वानामात्मयोगसमाधिना ॥ ४२ ॥
कर्मणा पितृलोको हि श्रुतिरेषा सनातनी । तत्रैव पितृराजो हि यमो वैवस्वतः स्मृतः ॥
आज्ञया मे महाभाग निरयान्संप्रयच्छति । धर्मरूपेण पुण्यानां यमरूपेण पापिनाम् ॥
स्थानं शुभाशुभं धत्ते धर्माणां तारतम्यतः । तामिस्रश्चान्धतामिस्रो रौरवः सूकरस्तथा ॥
रोधस्तलो विनशनो महाज्वालस्तथैव च । तथा कुम्भोऽथ शबलो विमोहन इति स्मृतः ॥ ४६ ॥
रुधिरान्धो वैतरणी क्रिमिशः क्रिमिभोजनः । असिपत्रवनः कृष्णो लालाभक्षश्च दारुणः
तथा पूयवहः पापो वह्निज्वालो ह्यधःशिराः । संदंशः कृष्णसूत्रश्च तमश्चावीचिरेव च ॥
श्वभोजनोऽम्बुपातश्च शूलप्रोतोऽथ कण्टकः । सूचीमुखो दन्दशूकः क्षारकर्दम एव च ॥
रक्षोगणाशनस्तात पर्वतावर्तनस्तथा । इत्येवमादयश्चान्ये नरका भृशदारुणाः ॥ ५० ॥
गच्छन्ति पापिनो नूनं विष्णुधर्मविवर्जिताः ॥ ५१ ॥

मुनय ऊचुः—
कर्मणा येन ये यान्ति यां यां निरययातनाम् । तत्सर्वं सम्यगाचक्ष्व यथा नारायणाच्छ्रुतम् ॥ ५२ ॥

ब्रह्मोवाच—
स्वस्वरूपमविज्ञाय द्वैविध्यं जायते नृणाम् । कामस्य वशतां यान्ति देवानां वशतामुत ॥
अनिर्जितेन्द्रियाः कामवशगाः पापकारिणः । तामिस्रादिमहाघोरनिरयेषु वसन्ति हि ॥
स्वाचारनिरता देववशमाः पुण्यकारिणः । ते वै स्वर्गादिभोगेषु निवसन्ति यथासुखम् ॥
अहं ममेति ये बुद्ध्या भूतेषु द्रोहकारिणः । परवित्तमथापत्यकलत्राणि हरन्ति च ॥
बद्धास्ते कालपाशेन यमदूतैर्दुरासदैः । स्मृतिर्न यत्र यान्त्येते तामिस्रं नरकं चिरम् ॥
वञ्चयित्वा परान्यस्तु दारान्वा पुरुषांस्तथा । भुङ्क्ते स चान्धतामिस्रे पात्यते भृशदारुणे ॥
कूटसाक्षी तथा सम्यक्पक्षपातेन यो वदेत् । अनृतं वक्ति यो मोहात्स नरो याति रौरवम् ॥ ५९ ॥
भ्रूणहा पुत्रहन्ता च गोघ्नश्च कमलोद्भव । यान्ति ते नरकं रोधं सद्यः श्वासनिरोधकः ॥
सुरापो ब्रह्महा हर्ता सुवर्णस्य च सूकरम् । प्रयान्ति नरकं यश्च तैः संसर्गमुपैति वै ॥
राजन्यवैश्यहन्ता वै तथैव गुरुतल्पगः । करोति कर्णिनो यस्तु यश्च खड्गादिकृन्नरः ॥
प्रयान्ति ते विशसने नरके घोरदारुणे । स्नुषां सुतां चाभिगामी महाज्वाले निपात्यते ॥
तप्तकुम्भे स्वसृगामी हन्ति राजभर्टांश्च यः । अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः
वेददूषयिता यश्च वेदविक्रयिकश्च यः । अगम्यागामी यश्च स्यात्ते यान्ति शबलाभिधम् ॥
चौरो विमोहयति यो मर्यादादूषकश्च यः । रङ्गोपजीवी कैवर्तः कुण्डाशी गरदस्तथा ॥
सूची माहिषकश्चैव पर्वगामी च यो नरः । अगारदाही मित्रघ्नः शाकुनिर्ग्रामदाहकः ॥
रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये । मधुहा ग्रामहन्ता च याति वैतरणीं नरः ॥
देवद्विजपितृद्वेषी रत्नदूषयिता च यः । स याति कृमिभक्षे वै कृमिशेषदुरिष्टकृत् ॥
असिपत्रवनं याति वनच्छेदी वृथैव यः । रेतःपानादिकर्तारो मर्यादाभेदिनश्च ये ॥
ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये । पितृदेवातिथीन्हित्वा यश्चाश्नाति नराधमः ॥ ७१ ॥
लालाभक्षे स यात्युग्रे शरकर्ता च दारुणे । वेगिपूयवहं चैको याति मृष्टान्नभुङ्नरः ॥
शौवभ्रिको मृगव्याधो वन्हिज्वाले पतत्ययम् । याति तत्रैव सततं यः श्वपाकेषु वह्निदः ॥ ७३ ॥
असत्प्रतिग्रहीता तु नरके यात्यधोमुखे । अयाज्ययाजकः सत्रे तथा नक्षत्रसूचकः ॥७४॥
व्रतेषु लोपको यश्च स्वाश्रमाद्विच्युतश्च यः । संदंशयातनामध्ये पततस्तावुभावपि ॥७५॥
लाक्षामांसरसानां च तिलानां लवणस्य च । विक्रेता ब्राह्मणो याति तथैव नरकं द्विजः
दिवा स्वप्नेषु स्कन्दन्ते ये नरा ब्रह्मचारिणः । अवीचिनरके यान्ति येऽनृतौ गृहमेधिनः॥
पुत्रैरध्यापिता ये च ते पतन्ति श्वभोजने । अम्बुपाते निपात्यन्ते तेऽम्बून्यपहरन्ति ये ॥

---

१ क, 'हा गुरुह' ।

शूलसूत्रैश्च ये जीवान्व्यथयन्ति प्रलोभनैः । क्रीडार्थं तेऽभिनीयन्ते शूलप्रोते भयावहे ॥
याम्यास्तु कर्षयन्तीति पादुकापानहारिणः । भेदनो वाक्शरैर्मर्म कण्टकेषु च संक्षिपन् ॥
योऽभिश्रुत्य धनी विप्रं तिरश्चीनेन चक्षुषा । न प्रयच्छति दुर्मेधाः स सचीमुखगो भवेत्॥
उद्वेजयन्ति ये जीवान्दन्दशूका इवापरे। ते दन्दशूके गच्छन्ति यमदूतैर्निपातिताः ॥८२॥
हीना वर्णादिना ये च उत्तमान्विद्यया युतान् । क्षारकर्दमके यान्ति ये न मन्यन्ति निस्त्रपाः ॥ ८३ ॥
कार्यमुद्यम्य ये मूढा नरमेधेन पर्वणि । रक्षोगणाशने यान्ति यजन्ते मांसभोजिनः॥८४॥
मनोरथान्विनिघ्नन्ति वृथा नृणां तु ये नराः ।पात्यन्ते पर्वताद्भूयो नीयन्ते च पुनः पुनः॥
एते चान्ये च नरकाः शतशोऽथ सहस्रशः । ये च दुष्कृतकर्माणः पच्यन्ते यातनागताः॥
वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः । कर्मणा मनसा वाचा निरयेषु पतन्ति ते ॥
अशुभस्य गतिश्चैषा शुभस्योर्ध्वं प्रकीर्तिता । गतिर्भागवती या तु सा प्रोक्ता प्रकृतेः पुरा

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे लोकाख्यानेऽधोलोककथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १६३५ ॥

---

अथ चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीब्रह्मोवाच—
कर्मणां गतयो विप्रा मया नारायणाच्छ्रुताः । भूर्लोकं च प्रवक्ष्यामि नारायणमुखाच्छ्रुतम् ॥ १ ॥
नारायणस्तु मामाह भूर्लोकस्य तु विस्तरम् ।कथयामि महाभाग यत्राहं चक्रमे गतिम्॥
मच्छरीरतया यद्यप्यहमेव व्यवस्थितः । तथाऽपि भूतले ब्रह्मन्पृथग्भूय व्यवस्थितः ॥३॥
अवतारास्तु जीवानां तारणाय मया कृताः । भूर्लोके ते च सर्वे वै मर्यादां पालयन्ति हि
चतुरस्राऽभवद्भूमिः पञ्चाशत्कोटियोजनैः । विस्तीर्णा सर्वतो दिक्षूद्यानं वै कोटियोजनम् ॥ ५ ॥
द्वीपानि सप्त सन्त्यत्र तावन्तो जलराशयः । वलयानीव ते सर्वे भूमेरुपरि वेष्टिताः॥ ६ ॥
जम्बूप्लक्षकुशक्रौञ्चशाकद्वीपं तथाऽपरम् । शाल्मली पुष्करं नाम सप्तमं जलधीञ्शृणु ॥
लवणेक्षुरसौ पश्चान्मैरेयं तदनन्तरम् । सर्पिर्दधि पयस्त्वन्यस्ततः शुद्धोदकं स्मृतम् ॥८॥
जम्बूद्वीपं तु भूमध्ये लक्षयोजनविस्तृतम् । तावृक्क्षाराम्बुधिस्तत्र ततो द्वीपान्तरं शृणु ॥
उत्तरोत्तरमेकैकं द्विगुणायामविस्तरम् । द्वीपानि षट्समुद्राश्च ह्युपरिष्टाच्चतुर्मुख ॥ १० ॥
द्वीपं जम्बूसमाख्यातं विभजे नवधा पुनः । भागे तु मध्यमे मेरुरुच्छ्राये लक्षसंमितः ॥
योजनानां क्षितेरन्तर्मग्नः षोडशसंख्यया । चतुरशीतिसाहस्रैर्योजनैर्बहिरुच्छ्रितः ॥
द्वात्रिंशच्च सहस्राणि योजनानां च विस्तृतः । मूर्ध्नि देशे च विज्ञेयः सर्वतः कनकाचलः
भूयश्च कर्णिकाकारः संस्थितः कमलोद्भव । हिमवान्हेमकूटश्च निषधश्चास्ति दक्षिणे ॥
नीलः श्वेतः शृङ्गवांश्च पर्वता उत्तरे त्रयः। लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथाऽपरे॥

दशांशेन यतो लीनाः समुद्राम्बुनि पद्मज । सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥
भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ १७ ॥
रम्यकं चोत्तरं वर्षं तस्यैवानुहिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥१८॥
नवसाहस्रमेकैकमेतेषामन्तरं विधे । इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ १९ ॥
मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् । इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥२०॥
विष्कम्भा रचिता मेरोर्योजनायतमुच्छ्रिताः। पूर्वे तु मन्दरो नाम दक्षिणे गन्धमादनः ॥
विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्थितः। चत्वारः पादपास्तत्र ब्रह्मन्केतुवदुच्छ्रिताः॥
कदम्बो मन्दरे ज्ञेयो जम्ब्वाख्यो गन्धमादने । विपुले पिप्पलो बोधिः सुपार्श्वे वट-वृक्षकः ॥ २४ ॥
एकादश समायामाः पादपाः सुरसत्तम । जम्बूद्वीपस्य सा जम्बूर्नामहेतुः प्रयुज्यते ॥
जम्बाः फलानि दृश्यन्ते महागजसमानि च । पर्वते पतितानां च रसेन हि सरिद्वरा ॥
जम्बूनाम्नी समाख्याता पीता तत्तीरवासिभिः । जरां स्वेदं च दौर्गन्ध्यमिन्द्रियाणामपाटवम् ॥ २७ ॥
हन्ति रोधसि तन्नीरं वायुना शोषितं च यत् । जाम्बूनदं तद्भवति सुवर्णं सिद्धभूषणम् ॥ २८ ॥
भद्राश्वं कल्पमाख्यातं मेरोः प्राच्यां चतुर्मुख । पश्चिमं केतुमालाख्यं तयोर्मध्य इलावृतम् ॥ २९ ॥
वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम् । वैभ्राजं पश्चिमे मेरोर्वनं नन्दनमुत्तरे ॥ ३० ॥
तथा सरांसि चत्वारि मेरोः पूर्वादिषु क्रमात् । अरुणोदं महाभद्रं ससितोदं च मानसम् ॥ ३१ ॥
शीताम्भश्च मुकुन्दश्च कुररी माल्यवांस्तथा । वैकङ्कनामा पञ्चैते विज्ञेयाः केसराचलाः ॥
त्रिकूटः शिशिरश्चैव पतङ्गो रुचकाह्वयः । निषधः पञ्चमश्चैते दक्षिणे केसराचलाः ॥
शिखिरासोऽथ वैडूर्यः कपिलो गन्धमादनः । जारुधिप्रमुखाश्चैते पश्चिमे केसराचलाः ॥
शङ्खकूटोऽथ ऋषभो हंसो नागस्तथाऽपरः । कालञ्जरश्च पञ्चैत उत्तरे केसराचलाः ॥
मेरोरनन्तराङ्गेषु द्वौ द्वौ च परिकल्पितौ । पूर्वादिक्रमयोगेण तन्मध्येऽथ महापुरी ॥
विष्कम्भा रचिता मेरोर्योजनायतमुच्छ्रिताः । पूर्वे तु मन्दरो नाम दक्षिणे गन्धमादनः॥
जठरो देवकूटश्च पर्वतावुदगायतौ । अष्टाद[illegible] सहस्राणि योजनानि स्थितौ हि तौ ॥
पृथू तुङ्गौ द्विसहस्रं तथाऽन्यौ दक्षिणां श्रितौ । पवनः पारिजातश्च कैलासकरवीरकौ ॥
पश्चिम चोत्तरे चव त्रिशृङ्गमकराविति । मध्ये तव महाभाग ब्राह्मी मेरोश्च मूर्धनि ॥
चतुर्भिर्दशभिश्चैव सहस्रैर्योजनैर्मिता । तस्याः समन्ततः पुर्यो इन्द्रादीनां यथाक्रमम् ॥
इन्द्राग्नियमनैर्ऋत्यवरुण[illegible]लयक्षपाः । ईशश्चाष्टौ समाख्याताः पुरीणामधिपा इमे ॥
पुरी मघवतो ज्ञेया नाम्ना चैवामरावती । तेजोवती तथाऽऽग्नेय्यां याम्यां संयमनी मता ॥ ४३ ॥
रक्षोवती राक्षसी तु श्रद्धावत्यथ वारुणी । वायोर्गन्धवती ख्याता सौम्या ख्याता महोदया ॥ ४४ ॥

यशोवती भवस्योक्ता केसराचलभूमिषु। ता महैश्वर्यसंपन्ना विष्णुना कलया वृताः ॥
भित्त्वाऽण्डमण्डलं गङ्गा भगवत्पादसंभवाः। दिवः पतन्ति परितो ब्रह्मणः सदनस्य हि॥
सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात्। पतन्ति नामभेदेन दिग्भेदेन चतुर्मुख ॥
सीताऽन्तरिक्षगा पूर्वं शैलान्निष्क्रम्य निम्नगा। याति पूर्वेण वर्षेण भद्राश्वेन च संज्ञया॥
प्रविष्टा सागरमुखं दक्षिणेन तथाऽध्वना। भारतं वर्षमभ्येति शैलान्सप्तमुखी ततः ॥
द्वितीयाऽलकनन्दाऽम्भोनिधिं त्रैलोक्यपावनी। चक्षुस्तु पश्चिमाच्छैलात्केतुमालं प्रयाति हि ॥ ५० ॥
तेनैव वारिधिं याति निम्नगा सरितां पतिम्। अनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥
अतीत्य वर्षमम्भोधिमेति योषिद्यथा पतिम्। भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् ॥
मध्ये तयोर्मेरुशैलः कर्णिका पङ्कजे यथा। भारतं केतुमालं च भद्राश्वं कुरुनामकम् ॥
पत्राणि लोकपद्मस्य मर्यादा शैलतो बहिः। देवकूटश्च निषधो दक्षिणोत्तरमायतौ ॥
मर्यादापर्वतौ ज्ञेयौ कैलासो गन्धमादनः। अशीतियोजनायामौ पूर्वापरमहोदधौ ॥
निषधः पारियात्रश्च निषधावधिभूभृतौ। मेरोः पश्चिमभूभागे पूर्वोत्तरधरौ स्मृतौ ॥
त्रिशृङ्गो जारुधिश्चैवमुत्तरौ वर्षपर्वतौ। पूर्वपश्चिमगावेतावर्णवान्तर्व्यवस्थितौ ॥ ५७ ॥
इत्येते पद्मज प्रोक्ता मर्यादागिरयस्तव। पर्वतानामवस्थानमानन्त्यान्न प्रपञ्च्यते॥ ५८॥
शैलानामन्तरद्रोण्यः सेव्यन्ते सिद्धचारणैः। अन्यैश्च पुण्यकृद्भिश्च दैत्यदानवकिंनरैः ॥
भौमा ह्येताः कृताः स्वर्गा दुर्लभाः पापकर्मभिः। ज्ञानमूर्तिर्हयग्रीवो भद्राश्वे वसति स्वयम् ॥ ६० ॥
वर्षेषु मूर्तयो विष्णोर्मर्यादापर्वतेषु च। वसन्ति लोकरक्षायै नानारूपविशेषतः ॥ ६१ ॥
यानि किंपुरुषादीनि वर्षेष्वेतेषु सन्त्यज। निरातङ्काः प्रजाः शश्वन्न शोको न भयं तथा ॥
न पिपासा बुभुक्षा च नोद्वेगो नाऽऽयुषः क्षयः। सन्ति तेषां सहस्राणि वर्षाणि द्वौ च विंशतिः ॥ ६३ ॥
आयुर्न तेषु देशेषु भौममम्भो न वर्षति। एतेषु नर्तुभेदोऽस्ति न कालो युगभेदवान् ॥
सदा कृतयुगः कालो वर्तते चतुरानन। धर्मश्चतुष्पात्सकलो ध्यानमेवार्चनं हरेः॥ ६५ ॥
पर्वताः सरितश्चापि सन्ति तत्र पुराणि च। ग्रामाश्च सन्ति बहवः स्वधर्मनिरताः सदा॥
ब्राह्मणा भूमिपाश्चैव प्रजापालनतत्पराः। स्वे स्वे कर्मण्यभिरताश्चातुर्वर्ण्यमवस्थितम् ॥
चातुराश्रम्यमप्येवं यथोक्तमवतिष्ठते। आ दाक्षिणात्यादम्भोधेरा शैलाच्च हिमालयात् ॥
देशोऽयं भारतं वर्षं भूरेषा कर्मिणां नृणाम्। योजनानि सहस्राणि नैवाविस्तारं उच्यते ॥
स्वर्गापवर्गफलदं कर्म कार्यं नृणामिह। सह्यो महेन्द्रो मलयः शुक्तिमानृक्षपर्वतः ॥
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः। अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयन्ति च ॥
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा विधे। इहैव क्रियमाणस्य कर्मणो नरकं फलम् ॥
वर्षेष्वन्येषु सर्वेषु केवलं भुज्यते फलम्। इहैव चातुराश्रम्यचातुर्वर्ण्यव्यवस्थितिः ॥७३॥
कृतादियुगभेदानां चतुर्णामिह संभवः। दानं यज्ञं तपो मर्त्याः परलोकफलार्थिनः॥७४॥

१ क. न वि॰। २ क. °रत उ°।

इह कुर्वन्ति यज्ञेशं यजन्ते पुरुषोत्तमम् । श्रेष्ठं तद्भारतं वर्षं सर्ववर्षेषु संमतम् ॥ ७५ ॥
फलार्थिनः कामयन्ते कर्मभूमिजनिं बुधाः।सहस्राणि तथैवास्मिन्दिव्यानिनि सदनानि च
नद्यः सहस्रशः पुण्या आस्ते च पुरुषः परः । नद्यस्तु पर्वतोद्भूता लोके सन्ति सहस्रशः
मुख्यास्तासु महाभाग नामतः प्रवदाम्यहम् । गिरयः पावनाः सन्ति ब्रह्मन्नन्ये कुलाच-
लात् ॥ ७८ ॥
मैनाको मङ्गलप्रस्थस्त्रिकूट ऋषमस्तथा । ऋष्यमूकः कोष्टकश्च श्रीशैलो वारिधारकः ॥
द्रोणऋक्षो देवगिरिश्चित्रकूटोऽथ रैवतः । गोवर्धनोऽहमेवात्र नीलोऽपि मम विग्रहः ॥
गोकामुखोऽथ ककुभो हरिकील इति स्मृतः । कामाङ्गो वेङ्कटाद्रिश्च मद्रूपः पापनाशनः
शतद्रुश्चन्द्रभागाद्या हिमवत्पादनिःसृताः । वेदस्मृतिमुखाश्चान्याः पारियात्रोद्भवा मुने॥
नर्मदासुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः ।तापीपयोष्णीनिर्विन्ध्याप्रमुखा ऋक्षसंभवाः
गोदावरीभीमरथीकृष्णावेण्यादिकास्तथा। सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः॥
कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः । त्रिसामाशेषकुल्याद्या महेन्द्रप्रभवाः स्मृताः ॥
ऋषिकुल्याकुमार्याद्याः शुक्तिमत्पादसंभवाः । त्रिसामाऋषिकुल्याद्याः सन्त्यन्याश्च सह-
स्रशः ॥ ८६ ॥
कलिङ्गनगसंभूता कालिन्दी लोकपावनी । क्रीडार्थं मम देवेश नित्यं तत्र वसाम्यहम् ॥
तथैव सरयूः पुण्या यत्र कुत्रावगाहिता । विशेषेण मम क्षेत्रे त्वयोध्यायां मनीषिभिः ॥
क्षेत्राणि भारते वर्षे पुर्यश्च बहुशो विधे । स्नानध्यानजपाभ्यासान्मत्प्राप्तिर्यत्र निश्चिता ॥
मथ्नाति सर्वपापानि राति मे प्रेमवारिधिम् । चकास्ति चक्रविस्तारे मत्प्राप्तिर्भाववेदिका
मथुरेति पुरी रम्या पुण्यारण्यविभूषिता । गुप्तोऽहं निवसाम्यत्र श्वेतद्वीपाभिधे यथा ॥
कदाऽपि कृतिनां प्रीत्यै द्वापरान्ते विशेषतः । प्राग्गुप्तं भावये ब्रह्मन्कल्पे कल्पे तवाऽऽ-
ज्ञया ॥ ९२ ॥
तत्र वृन्दावनं नाम मत्केलिनिलयं मतम् । वृन्दाभिधानया भक्त्या मूर्तिमत्या निषेवि-
तम् ॥ ९३ ॥
निगूढमनवद्यं मे लीलया प्रियया सह । निवसामि महाभाग परमानन्दसंयुतः ॥ ९४ ॥
विमुक्तिनाम्नी जननी तया क्रोडीकृतोऽस्म्यहम् । सुषुम्नायां विहारो मे ब्रह्मञ्जानीहि
नित्यशः ॥ ९५ ॥
विना ज्ञानं विना ध्यानं विना चेन्द्रियनिग्रहम् । विमुक्तिर्वसतां तत्र किं पुनस्त्यजतां
तनुम् ॥ ९६ ॥

ब्रह्मोवाच—

भगवन्कौतुकं मह्यं प्रतिभाति वचस्तव । कथं वृन्दावनं नित्यं केलिभूतं तव प्रभो ॥९७॥
का वृन्दा का विमुक्तिस्तु परमानन्दसंज्ञकः। कोऽयं कमलपत्राक्ष का लीलाख्या च सुन्दरी
का सुषुम्ना त्वया प्रोक्ता मुक्तिर्निवसतां कथम् ॥ ॥ ९८ ॥

श्रीनारायण उवाच—

निर्गुणायास्तु लीलाया यद्यप्यन्तो न विद्यते । आविर्भावस्तिरोभावो ह्यस्ति केनापि
हेतुना ॥ ९९ ॥

गोलोकगोकुलोद्भूतश्वेतद्वीपादिकेलिवत्। नित्या सूक्ष्मस्वरूपेण कल्पान्ते चापि वर्तते॥
ये जीवाः कृपया विष्णोर्वीक्षिताः सुरसत्तम। वसन्ति रसमार्गीया नित्यलीलाभिका-
ङ्क्षिणः॥ १०१॥
तेषामाराधनार्थाय प्राप्यभोगतया स्थितः। भगवान्निजरूपेण कोटिमन्मथमन्मथः॥
रसमार्गेण ये देवमीक्षन्ते परिशीलितुम्। तेषां भूमावपि निजं स्थानमाविष्कृतं मया॥
सुदर्शने महाचक्रे मायामयनिवारके। दुर्लभे साधनैरन्यैर्विना प्रेमामृतौषधम्॥ १०४॥
स्थानेऽपि परमैकान्तप्रेमनिर्भिन्नचेतसाम्। निवासाय सदा यत्र किशोरो नित्ययौवनः॥
सदा रासरसाविष्टो वेणुवाद्यधरो हरिः। मयूरपिच्छाभरणः कोटिकंदर्पसुन्दरः॥ १०६॥
गीयमानो मुदा युक्तो नित्यमुक्तवधूजनैः। सेविताङ्घ्रिसुधासारो नित्यानन्दगुणाम्बुधिः॥
सर्गादौ परमं ज्योतिः स्वानन्दैकनिकेतनम्। एकमेवाद्वितीयाख्यं सदेव पदबोधितम्॥
निजाधारं निजाभासमवाङ्मनसगोचरम्। निस्तरङ्गाम्बुधिरिव निजानन्दनिकेतनम्॥
नान्तरं न बहिस्तत्र नाम्बरं नावनीतलम्। कारणं सर्वसत्त्वानां निधानं बीजमव्ययम्॥
लीलेच्छादिसदायुक्तं दिव्यानन्तगुणास्पदम्। संकल्पमकरोत्तत्र कदाऽपि परमं महः॥
एकेन त्रिगुणां मायां तस्मान्निर्गमयन्बहिः। बद्धानां सुखभोगाय लीनानां प्रकृतौ
पुरा॥ ११२॥
द्वितीयेन विमुक्तानां नित्यानां नित्यलीलया। गुणैकनिलयां नित्यां शक्तिं निर्गमयन्बहिः
ज्ञानानन्दमयी साक्षादेकरूपा निरामया। त्रिगुणप्रकृतेर्भिन्ना निर्गुणा प्रकृतिस्त्वियम्॥
ब्रह्मैव सगुणा साक्षादानन्दरसदायिनी। प्राकृतावरणाद्भिन्ने दिव्याकाशे परात्परे॥
सृष्टिं वितनुते स्वस्य दिव्याममलरूपिणीम्। यस्यामानन्दनिलयः साक्षादुपनिषत्तनुः॥
रमते रमया साकं नित्यं मुक्तैरुपाश्रितः। नात्र कालगतिः साक्षादिच्छैका परमात्मनः॥
निर्माय द्विविधं सर्गं प्राकृताप्राकृतं हरिः। पुनः संकल्पयन्देव्या वीक्षितः श्रीनिकेतनः॥

श्रीदेव्युवाच—

अतिदूरतरं दिव्यमवाङ्मनसगोचरम्। धाम ते परमेशान नित्यानन्दमनश्वरम्॥ ११९॥
अविदित्वा सुखं चास्य प्राकृतस्य कथं रुचिः। स्वामिन्नुत्पद्यते जन्तुर्नित्यलीलासुखा-
म्बुधौ॥ १२०॥
त्वयि सर्वं रमेशान श्रूयते दृश्यते च यत्। विलीनं जायते सर्वं वयांसीव दिनात्यये॥
त्वदधीनमिदं सर्वं चिदाचिच्छब्दसंज्ञितम्। उद्बोधयसि सर्वाणि त्वमेव पुरुषोत्तम॥
उन्मज्जन्मज्जदेवैतन्नैकरूपेण तिष्ठति। त्वमेकरूपः स्वायत्त आत्मभूतः सनातनः॥१२३॥
यथाऽप्राकृतमेवदमतीत्य तव विष्टरम्। समाभाति महाराज नात्रेदममलद्युते॥ १२४॥

श्रीभगवानुवाच—

त्वमप्येतन्न जानासि नित्ये कमलसंभवे। रहस्यं पश्य यल्लोके प्राकृतेऽपि प्रकाशितम्॥
एवं प्रजल्पतस्तस्य कर्पूरक्षोदपाण्डुरा। सुन्दरी दक्षनयनादुदतिष्ठत्क्षणादिह॥ १२६॥

---

१ ख. प्राग्जीवस्य°।

वृन्दशो रसिकान्नीत्वा विलीनान्प्राङ्गनिजानने । तामुवाच रहो देवो विहस्य जलजेक्षणः ॥ १२७ ॥
संविशस्व महाभागे प्राकृते मम वेश्मनि । नीत्वा मदनुरागार्थं विलीनांस्त्वयि सुन्दरि ॥
त्वं तु वृन्दाभिधा भक्तिं वृन्दशस्त्वमुपाश्रिता । विनोदाय मम प्रीत्या वनरूपं त्वमावह ॥
यथाऽत्र त्वं गवां लोके तिष्ठसि प्राणवल्लभे । तथैव प्रतिभासेन स्वांशेन प्रविशस्व गाम्॥
इयं च विरजा देवी वैकुण्ठद्वारवाहिनी । सूर्यमार्गेण निर्याता जम्बूद्वीपं विशेषतः ॥
कलिन्दगिरिमासाद्य कालिन्दी नाम निम्नगा । अभिषिञ्चतु ते वीथीमरविन्दजलैर्मुदा ॥
सुषुम्नेव द्वयोर्मध्ये दैवे पित्र्ये च वर्त्मनि । विमुक्तवपुषां नेत्री गोलोके मम वेश्मनि ॥
इडया सूर्यरूपिण्या देवलोकं न संशयः । पितृलोकं पिङ्गलया कर्ममार्गेण याति हि ॥
योगेन न्यस्तदेहानां देवयानेन गच्छताम् । सुषुम्नायां प्रविष्टानां भक्तानां वैष्णवी गतिः ॥ १३५ ॥
यमुनेयं सुषुम्नेव संलग्ना मम मन्दिरे । श्रद्धया सेवनादस्या जनो मल्लोकमाप्नुयात् ॥
एष वाऽप्राकृतो रत्नराशिर्गोवर्धनाभिधः । अंशेन मद्विलासार्थं या तु देवत्वमाप्नुयात् ॥
नासाया मध्यभागोऽयं सुषुम्ना यत्र तिष्ठति । अंशेन मद्विलासार्थं या तु दैवी सरिद्वरा॥
यस्या विलोकनात्सद्यो रसास्वादोऽभिजायते ॥ १३९ ॥
रसिकानां विनोदार्थं शारदी चन्द्रिका शुभा । सदैकरूपा विशतु दिव्या किरणचामरैः॥
मुक्तिं विना न मत्प्राप्तिः सा तु भक्त्यैकसंश्रया । सा तु वृन्दे त्वया नेया परानन्देन संयुता ॥ १४१ ॥
भक्तिस्त्वं वनरूपेण यशोदा मुक्तिरूपिणी । नन्दोऽयं परमानन्दो ह्याविर्भवतु भूतले ॥
नाऽऽविर्भावस्तिरोभावो नित्याया वनसंपदः । आविर्भावस्तिरोभावो दृश्यायास्तु युगे युगे
रूपं लीला समीपस्था सदानन्दस्वरूपिणी । स्वांशेन शक्तिभिः साकं या तु वृन्दावने वने ॥ १४४ ॥
लीलया लालितोऽहं च करिष्येऽस्या विनिश्चितम् । स्वतन्त्रोऽपि समर्थोऽपि सर्वज्ञोऽपि निरन्तरम् ॥ १४५ ॥
लीलामेवानुवर्तिष्ये लीलाभङ्गोऽन्यथा भवेत् । लीलायामपराधं तु नाऽऽद्रियन्ते मनीषिणः ॥ १४६ ॥
लीलासङ्गं न त्यजामि न मां लीला विमुञ्चति । अहं लीलामयः साक्षाल्लीला देवी तु मन्मयी ॥ १४७ ॥
यावन्ति मम रूपाणि लीला तावत्स्वरूपिणी । नानाभिधानैरन्यत्र राधा वृन्दावने वने ॥ १४८ ॥
अपराधैश्च लीलायाः पूजनं मम जायते । क्षत्रियाणां यथा युद्धे सायकैर्मम पूजनम् ॥
लीला लीलां न संधत्ते निरानन्दस्तदा ह्यहम् । निर्मितेयं मया शक्तिर्लीलार्थं चैव केवलम् ॥ १५० ॥

---

१ ख. नीला° । २ ख. °नीला° ।

करोमि लीलया सर्वं प्राकृताप्राकृतं जगत् । तिष्ठामि लीलया युक्तो निरुद्धोऽपि सदा ह्यहम् ॥ १५१ ॥
सूक्ष्मरूपेण मां लीला कदाऽपि न विमुञ्चति । स्थूलरूपेण मामेकमुपास्ते सर्वकर्मसु ॥
योऽहं सा मम लीला तु या लीला सोऽस्म्यहं पुनः । अन्तरं नैव पश्यामि यथा वै शेषशेषिणोः ॥ १५३ ॥
नित्याश्च शक्तयो ह्यस्या ललिताद्याः सुमङ्गलाः । अष्टौ नित्यविहारस्य रसज्ञाः कौतुकोज्ज्वलाः ॥ १५४ ॥
आविर्भवन्तु लीलायां सूक्ष्मरूपेण संस्थिताः । आसामपि परा ह्यष्टौ प्रत्येकैकं व्यवस्थिताः ॥ १५५ ॥
चतुःषष्टिर्मुदा युक्ता हावभावविचक्षणाः । नित्यज्ञानकलाभिज्ञा वाद्याभिनयनिम्नगाः ॥
यौवनारम्भलिप्ताङ्ग्यः श्रीमत्यः श्रीपरिग्रहाः । तवाऽऽज्ञामनुवर्तिन्यो लीले सन्तु सहस्रशः ॥ १५७ ॥
मया सह विनोदार्थं येषामस्ति मनोरथः । तेषामिह समावासो नित्यं वृन्दावनेऽस्तु हि॥
द्विपरार्धावसानोऽयं कालः स्वावयवैरिह । नैव शक्तोऽभिभवितुं नित्यलीलारसोत्सवम्
यथा वैकुण्ठभक्तानां श्वेतद्वीपनिवासिनाम् । वयोवस्थाकृतो भेदो नैव द्वेषादिवैभवम् ॥
जरामरणदौर्गन्ध्यस्वेदवीर्यादिसंक्षयः । तथाऽत्र द्विपरार्धान्तमेकरूपत्वमेव हि ॥ १६१ ॥
दृश्यादृश्यविभेदेन लीला मे द्विविधा त्वियम् । अदृश्या त्वेकरूपेण सुदर्शनसमाश्रिता ॥
दृश्या तु त्रिविधा सैव रसिकानां तु साधनम् । साध्या दृश्या समाख्याता रसिकानां न संशयः ॥ १६३ ॥
जगद्धिताय लोकेऽस्मिन्दृश्यं वृन्दावनं ह्यभूत् । गोलोकं वश्यलोकेऽस्मिन्यथा दृश्यतया स्थितम् ॥ १६४ ॥
नन्दगोपस्वरूपेण परानन्दो नराकृतिः । जाता मुक्तिः समायाता यशोदारूपधारिणी ॥
अंशेन च गवां वृन्दं समायातं यदन्तिके । गोवर्धनाभिधः शैलः समुन्मग्नश्च तत्क्षणात्॥
व्यदृश्यत घनश्यामा सुषुम्नाऽमृतवाहिनी । कालिन्दी सूर्यतनया मम मार्गविरोधिनी ॥
भ्रमद्भ्रमरझंकारमन्दारतरुमारुतम् । श्रीमद्वृन्दावनं नाम कालिन्दीकूलकेतनम् ॥१६८॥
दृश्यं भविष्यति क्षिप्रं महत्पुण्यवतां नृणाम् । पञ्चयोजनविस्तीर्णं रसधामैव केवलम् ॥
लीले त्वं च विलासार्थं गोपकन्यात्वमाप्नुहि । सखीभिः कोमलाङ्गाभिर्दृश्यलीलामहोत्सवे ॥ १७० ॥
अदृश्येयमपि श्यामे नास्तिकानां कलौ युगे। कामक्रोधाभिभूतानां नानादेवैकसेविनाम्
परद्रोहपरोद्वेगपराणां विषयात्मनाम् । अभाग्यानामधन्यानामसतामधिकारिणाम् ॥
गोपायति जनान्यस्मात्प्रपन्नानेव दोषतः। अतो गोपीति विख्याता लीलाख्या परदेवता
त्वया चाऽऽराधितो यस्मादहं कुञ्जमहोत्सवे । राधेतिनामविख्याता रसलीलाविधायिका
विना श्रीमन्त्रराजेन श्रीचिन्तामणिसंज्ञिना । विना द्वयानुसंधानमनन्यशरणं विना ॥

---

१ क. नीला° ।

विनाऽऽचार्यप्रसादेन विना वननिषेवया । श्रीनारायणसंभोगलीला नैवावलोक्यते ॥
दृश्या लीला द्वितीया तु मथुरायां भविष्यति । जन्मना मम देवेशि यत्र कंसो निपा-
तितः ॥ १७७ ॥
जातोऽहं निगमात्साक्षाद्वसुदेवाभिधात्प्रिये । देवक्यां ब्रह्मविद्यायां बलेन बलिना सह ॥
मल्लोकप्राप्तिकामानां प्रपन्नानां नृणामिह । मथ्नाति सर्वपापानि मथुरेति निगद्यते ॥
तृतीया दृश्यरूपा तु द्वारकायां प्रकाशिता । श्रीभूम्यां सहिता यत्र निवसामि वरानने ॥
अहं तु कृष्णरूपेण रुक्मिणी त्वं भविष्यसि । भूदेवी सत्यभामेयं नीलेन्दीवरलोचना ॥
आवाभ्यां रचितं कर्म ध्यात्वा दृष्ट्वा मनीषिणः । यास्यन्ति मद्गतिं धीरा मा विषाद-
परा भव ॥ १८२ ॥

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे भूर्लोकवर्णने श्रीवृन्दावनचरितं नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १८१७ ॥

---

अथ पञ्चमोऽध्यायः ॥ ५ ॥

---

मयैवं बोधिता लक्ष्मीर्ब्रह्मन्नमिततेजसा । मामुवाच पुनः स्नेहादुद्भूतनयनोदका ॥ १ ॥
श्रीरुवाच—
रसिकानां सदोपास्यो लीलया सहितो भवान् । कथं ध्येया विशालाक्षी श्रीमद्वृन्दा-
वने वद ॥ २ ॥
मन्त्रचिन्तामणिं ब्रूहि द्वयं च शरणागतिम् । किं स्तोत्रं किं च पीठस्ते(ठं ते) किमावर-
ल्पनम् ॥ ३ ॥

श्रीभगवानुवाच—
शृणु सुन्दरि वक्ष्यामि लीलया सहितस्य मे । पूजनं मन्त्रराजं च द्वयं च शरणागतिम्
रहस्यानां रहस्यं च गुह्यानां गुह्यमुत्तमम् । मन्त्रचिन्तामणिर्नाम सांनिध्यं मे प्रयच्छति॥
एषा पञ्चपदी विद्या द्वयमित्यभिधीयते । उभाभ्यां मन्त्रराजाभ्यां जायते प्राणवल्लभे ॥
नमो गोपीजनेत्युक्त्वा वल्लभाय वदेत्ततः । द्विपदी दशवर्णेयं विद्यायाः खण्ड उच्यते ॥
गोपीजनपदं चोक्त्वा वल्लभेति पदं ततः । चरणौ शरणं पश्चात्प्रपद्ये तु पदं पुनः ॥ ८ ॥
त्रिपदी षोडशार्णेयं विद्याखण्डो द्वितीयकः । एवं पञ्चपदी विद्या विज्ञेया युगला-
त्मिका ॥ ९ ॥
एतां पञ्चपदीं विद्यां श्रद्धया धारयेत्तु यः । कृष्णप्रियावृन्दमध्ये गच्छत्येष न संशयः ॥
न पुरश्चरणापेक्षा नापि न्यासविधिर्मतः । न देशकालनियमो नारिमित्रादिशोधनम् ॥
सर्वेऽधिकारिणश्चात्र चण्डालान्ताश्च सुन्दरि । स्त्रियः शूद्रादयश्चापि जडमूकान्धपङ्गवः
आन्धहूणकिराताश्च पुलिन्दाः पुल्कसास्तथा । आभीरा यवनाः कङ्काः खसाद्याः पाप-
योनयः ॥ १३ ॥
दम्भाहंकारपरमाः पापपैशून्यतत्पराः । गोब्राह्मणनिहन्तारो महापातकसंयुताः ॥ १४ ॥

ज्ञानवैराग्यरहिताः श्रवणादिविवर्जिताः। ममाभिकाङ्क्षिणो ये तु ते तु सर्वेऽधिकारिणः॥ १५॥
यदि भक्तिर्भवेदेषां लीलयाऽऽराधिते मयि। वृन्दावनमहालीलापरमोत्सवदर्शने ॥१६॥
नान्यद्वारा भवेदेषा लीला परमपावनी। तस्माद्युगलमन्त्रेण सलीलं मामुपाश्रयेत् ॥
याज्ञिको दाननिरतः सर्वतीर्थोपसेवकः। सत्यवादी यतिर्वाऽपि वेदवेदाङ्गपारगः॥ १८॥
ब्रह्मनिष्ठः कुलीनो वा तपस्वी व्रततत्परः। द्वयाधिकारी न भवेत्कृष्णभक्तिविवर्जितः॥
अङ्गन्यासकरन्यासावचक्राद्यैः प्रकल्पयेत्। अथ वा दीर्घबीजेन न्यसेद्द्वयमथाऽऽचरेत्॥
ङमित्येव भवेद्बीजं नमः शक्तिरुदाहृता। गोपीजनप्रियः कृष्णो देवताऽत्र प्रकीर्तिता ॥
अन्तर्यामी त्वृषिरहं देवो नारायणः प्रिये। भविष्यन्ति तथा चान्ये शिवो ब्रह्मा च नारदः॥ २२॥
प्रवर्तनाय योऽयं तु सर्गादौ च प्रयोजयेत्। तत्र तस्य ऋषिः प्रोक्तः सर्वागमविशारदैः॥
सर्वेषां देवि मन्त्राणां बीजानां च विशेषतः। अहमेव ऋषिर्मुख्यो वेदा मच्छ्वाससंभवाः॥ २४॥
नारदादिऋषीणां च ह्यन्तर्यामितया ह्यहम्। तत्र तत्रास्मि दयिते वासुदेवः परात्परः॥
त्वं देवि नादरूपेण बीजरूपेण चास्म्यहम्। आवयोरेव योगेन सर्वे मन्त्राः प्रकीर्तिताः॥
सकृदुच्चारणादस्य कृतकृत्यो न संशयः। तथाऽपि दशधा नित्यं जप्यादर्थं विभावयन्॥
अथ ध्यानं प्रवक्ष्यामि मन्त्रस्यास्य प्रियात्प्रिये। पीताम्बरं घनश्यामं द्विभुजं वनमालिनम्॥ २८॥
बर्हिबर्हकृतापीडं शशिकोटिनिभाननम्। घूर्णायमाननयनं कर्णिकारावतंसिनम्॥२९॥
अभितश्चन्दनेनाथ मध्ये कुङ्कुमरेखया। रचितं तिलकं भाले बिभ्राणं कमलाकरे॥३०॥
तरुणादित्यसंकाशं कुण्डलाभ्यां विराजितम्। घर्माम्बुकर्णिकाराजद्दर्पणाभकपोलकम्॥
प्रियामुखविधुन्यस्तलोचनं चोत्तरभ्रुवम्। नासाग्रविस्फुरन्मुक्ताशुद्धांशुविलसन्मुखम् ॥
दशनज्योत्स्नया राजत्पक्वबिम्बफलाधरम्। केयूराङ्गदसद्रत्नमुद्रिकाविलसत्करम्॥ ३३॥
बिभ्रतं मुरलीवाद्यं पाणौ पद्मं तथाऽपरे। काञ्चीदामस्फुरन्मध्यं नूपुराभ्यां लसत्पदम्॥
इतिकेलिरसावेशचपलं चपलेक्षणम्। हसन्तं प्रियया सार्धं हासयन्तं च तां मुहुः॥३५॥
इत्थं कल्पतरोर्मूले रत्नसिंहासनोपरि। वृन्दारण्ये स्मरेत्कृष्णं संस्थितं प्रियया सह ॥
वामभागे स्थितां तस्य राधिकां तां विचिन्तयेत्। नवीननीलवसनां द्रुतहेमसमप्रभाम्॥
पटाञ्चलेनाऽऽवृतार्धसुस्मेराननपङ्कजाम्। कान्तवक्त्रसुधाधामचकोरायितलोचनाम् ॥
अङ्गुष्ठतर्जनीभ्यां च निजप्रियमुखाम्बुजे। अर्पयन्तीं पूगफलं पूर्णचूर्णसमन्वितम्॥ ३९॥
मुक्ताहारोल्लसच्चारुपीनोन्नतपयोधराम्। क्षीणमध्यां पृथुश्रोणीं किङ्किणीजालशोभिताम्॥ ४०॥
रत्नहाटककेयूरमुद्रावलयधारिणीम्। रणत्कटकमञ्जीररत्नपादाङ्गुलीयकाम् ॥ ४१॥
लावण्यसारमुग्धाङ्गीं सर्वावयवसुन्दरीम्। आनन्दरसमग्नां च प्रसन्नां नवयौवनाम् ॥
सख्यश्च राधिकाया वै तत्समानवयोगुणाः। तत्सेवनपरा भाव्याश्चामरव्यजनादिभिः॥

---

१ ख. नील°।

जानासि हृदयावासे तथाऽपि कथयामि ते । अन्येषां च प्रबोधार्थं मन्त्रार्थममलं प्रिये॥
अष्टाक्षरेण संयुक्ता यथा पञ्चदशाक्षरी । दशाक्षरेण संयुक्ता तथेयं षोडशाक्षरी ॥ ४५ ॥
श्रीराधाकृष्णयोर्विद्या वृन्दारण्योपसेवने ॥ ४६ ॥
रसिकानां सदा जप्या जन्मव्ययविनाशिनी । महारसमयी लीला दिव्या नित्याऽनपायिनी ॥ ४७ ॥
आकल्पान्तिकरूपेयं शुद्धसत्त्वमयी प्रिया । अनया प्राप्यते भद्रे सत्यं सत्यं निशामय ॥
बहिरङ्गैर्भयं तस्य स्वीयैर्मायादिशक्तिभिः । अन्तरङ्गैस्तथा नित्यविभूतैस्तैश्चिदादिभिः ॥
गोपनादुच्यते गोपी श्रीलीला राधिकाभिधा । देवी कृष्णमयी ज्ञेया राधिका परदेवता ॥ ५० ॥
सर्वलक्ष्मीस्वरूपा च श्रीकृष्णानन्ददायिनी । अतः साऽऽह्लादिनी शक्तिर्नानाकेलिविशारदा ॥ ५१ ॥
तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः । यथा लक्ष्मीस्त्वमेवाऽऽसीस्तथा लीला च गोपिका ॥ ५२ ॥
अहं नारायणः कृष्णो ब्रह्माण्डायुतनायकः । सर्वस्य कारणं लीला सा मय्येव कृताश्रया
यथाऽहं व्यापको देवि तथेयं मम वल्लभा । यथा यथा स्वरूपोऽहं ज्ञेया लीला तथा तथा॥
चिदचिल्लक्षणं सर्वमावाभ्यां पूरितं जगत् । सैषा हि राधिका गोपीजनस्तस्याः सखीगणः
वल्लभौ तत्समूहस्य संप्रोक्तौ प्राणनायकौ । राधाकृष्णौ तयोः पादौ शरणं स्यादिहाऽऽश्रयः
प्रपद्य गतवानस्मि जीवोऽहं भावदूषितः । सोऽहं तच्छरणं प्राप्तो हित्वाऽन्यत्साधनं महत् ॥
प्रयोजनान्तरं हित्वा संबन्धान्तरमेव च । भोगं मे युगलानन्दो नित्यः सर्वावधिस्तु यः ॥
अनन्यसाधनं त्वाह नमःशब्दो दशाक्षरे । चतुर्थी त्वाह कल्याणि तथाऽनन्यप्रयोजनम् ॥
ममत्वमाह मःशब्दो नशब्दस्तन्निषेधनम् । ममत्वं सर्वतस्त्यक्त्वा तदर्थं शरणागतः ॥
मन्त्रार्थः कथितस्त्वेष संक्षेपेण वरानने । युगलार्थस्तथा न्यासः प्रपत्तिः शरणागतिः॥६१॥
आत्मार्पणमिमे पञ्च पर्यायास्ते मयोदिताः । रासलीला मया सार्कं श्रीमद्वृन्दावने तु या
भविष्यति महाभागे तत्रेच्छा तव यास्यति । द्वारकायां तदा भद्रे रुक्मिणीरूपिणी स्वयम् ॥ ३३ ॥
प्रजप्यैतां महाविद्यां यास्यसि त्वरिता सुखम् । श्रुत्वा भवोऽपि मल्लीलामदृश्यां भुवि मानवैः ॥ ६४ ॥
तपसा मां समाराध्य मत्तो विद्यामवाप्स्यति । शंकरान्नारदो योगी चाम्बरीषस्ततो नृपः
अवाप्स्यति वरारोहे मन्त्रं दीक्षापुरःसरम् । एवं परम्परामार्गैर्विद्या भुवि भविष्यति॥६६॥
जीवाः पापं तरिष्यन्ति नाहं दूरेऽनयाऽनघे । गृहीत्वा परमां विद्यां वैष्णवं धर्ममाचरन्॥
आजीवमुपतिष्ठेत मम क्षेत्रं वरानने ॥ ६८ ॥

श्रीरुवाच—

संक्षेपादेव देवेश भवतीति विनाशनम् । धर्मं भागवतं ब्रूहि येन कृष्णः प्रसीदति ॥६९॥

---

१ ख. 'मत्वा दर्पं च शा° ।

श्रीभगवानुवाच—

कल्याणि श्रूयतां धर्मो लोकानां हितकाम्यया । शङ्खचक्राङ्कनं कृत्वा प्रपन्नोऽयं समाचरेत् ॥ ७० ॥
श्रीगुरुं परया भक्त्या सेवमानो निरन्तरम् । तत्कृपां भावयेद्विद्वानात्मनो विनिवृत्तये ॥
स्वेष्टदेवधिया नित्यं वैष्णवान्परितोषयेत् । ताडनं भर्त्सनं कामी भोगत्वेन यथा स्त्रियाः॥
गृह्णाति वैष्णवानां च तद्वद्ब्राह्म्यं सदा बुधैः । ऐहिकामुष्मिकीं चिन्तां नैव कुर्यात्कदाचन
ऐहिकं तु सदा भव्यं पूर्वाचरितकर्मणा । आमुष्मिकं तथा कृष्णः स्वयमेव करिष्यति ॥
अतो हि तत्कृते त्याज्यः प्रयत्नः सर्वथा नरैः । सर्वोपायपरित्यागः कृष्णोपायत्वयाचनम् ॥ ७५ ॥
सुचिरं प्रोषिते कान्ते यथा पतिपरायणा । प्रियानुरागिणी दीना तस्य सङ्गैककाङ्क्षिणी
तद्गुणान्भावयेन्नित्यं गायत्यपि शृणोति च । तथा श्रीकृष्णलीलादेः स्मरणादि तथाऽऽचरेत् ॥ ७७ ॥
न पुनः साधनत्वेन कार्यं तत्तु कदाचन । चिरं प्रोष्याऽऽगतं कान्तं यथा प्रोषितभर्तृका ॥
चुम्बन्तीवाङ्गमालिङ्गेन्नेत्राभ्यां पिबतीव च । ब्रह्मानन्दं गता चामुं सेवते परया मुदा ॥
श्रीमदर्चावतारेषु तथा परिचरेद्धरिम् । अनन्यशरणो नित्यं तथैवानन्यसाधनः ॥ ८० ॥
भवेदनन्यसंबन्धस्तथाऽनन्यप्रयोजनः । नान्यं च पूजयेद्देवं न नमेन्न स्मरेन्न च ॥ ८१ ॥
न च पश्येन्न गायेच्च न च निन्देत्कदाचन । नान्योच्छिष्टं तु भुञ्जीयान्नान्यशेषं च धारयेत् ॥ ८२ ॥
अवैष्णवानां संलापवन्दनादान्विवर्जयेत् । विष्णोर्वा वैष्णवानां वा निन्दां न शृणुयान्मनाक् ॥ ८३ ॥
कर्णौ पिधाय गन्तव्यं शक्तो दण्डं समाचरेत् । आश्रित्य चातकीं वृत्तिं देहपातावधि प्रिये ॥ ८४ ॥
द्वयार्थं भावयन्नेव स्थेयमित्येव मे मतिः । सरःसमुद्रनद्यादीन्संत्यक्त्वा चातको यथा ॥
तृषितो म्रियते वाऽपि याचते वै पयोधरम् । एवमेव प्रयत्नेन साधनानि परित्यजेत्॥८६॥
स्वेष्टदेवौ सदा याच्यौ गतिस्तौ मे भवेदिति । स्वेष्टदेवतदीयानां गुरोरपि विशेषतः॥८७॥
आनुकूल्ये सदा स्थेयं प्रातिकूल्यं विसर्जयेत् । सकृत्प्रपन्नरक्षादिकल्याणगुणतां तयोः ॥
विचिन्त्य विश्वसेद्देवौ मम वश्यं भविष्यतः । संसारसागरान्नाथौ पुत्रमित्रग्रहाकुलात् ॥
गोप्तारौ मे दयासिन्धू प्रपन्नभयभञ्जनौ । योऽहं ममास्ति यत्किंचिदिह लोके परत्र च ॥
तत्सर्वं भवतोरद्य चरणेषु मयाऽर्पितम् । अहमस्म्यपराधानामालयस्त्यक्तसाधनः ॥ ९१ ॥
अगतिश्च गतोऽहं वां शरणं भजतां गती । तवास्मि राधिकाकान्त कर्मणा मनसा गिरा॥
कृष्णकान्ते तवैवास्मि युवामेव गतिर्मम । शरणं वां प्रपन्नोऽस्मि करुणानिकराकरौ ॥
प्रसादं कुरुतं दास्यं मयि दुष्टेऽपराधिनि । इत्येवं जपता नित्यं स्थातव्यं पदपङ्कजे॥९४॥
अचिरादेव दास्यामि वाञ्छितं कमलालये । बहिरेवमथो मध्ये सखीभावेन भावयेत् ॥
श्रीराधाकृष्णयोर्नित्यं लीला योग्या प्रजायते । पीठे समर्चयेद्विद्वान्नित्यमावरणैः सह ॥

मावयेत्केलिसंदोहममलं प्रकृतेः परम् । नित्यं स्मरामि तां लीलां त्वया संलालितोऽ-
प्यहम् ॥ ९७ ॥
अपूर्वरूपसंदोहां कः स्मरेन्न विलोक्य ताम् । कैशोरं रूपमनघे वेणुवाद्यविभूषितम् ॥
कस्य स्यात्स्मृतये भद्रे कोटिकामकलोदयम् ॥ ९९ ॥

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे भूर्लोकवर्णने श्रीवृन्दावनचरिते युगलाराधनकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्टयङ्काः ॥ १९१६ ॥

---

अथ षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीदेव्युवाच—
किं पीठं किं च तद्रूपं येन मुह्यन्ति सूरयः। किमावरणमाख्याहि का लीला रसरूपिणी॥
श्रीभगवानुवाच—
पीठं तयोः प्रवक्ष्यामि समस्तावरणैः सह । रूपं च लीलया युक्तं शक्तो नैवास्मि भाषि-
तुम् ॥ २ ॥
गोलोके पश्य पद्माक्षि सलीलं कथनेन किम् । इतः कोटिगुणं रूपं भूमिवृन्दावनं कृतम्
द्वापरान्ते कलेरादौ यदुवंशे महेश्वरि। आविर्भूय करिष्यामि त्रिविधां केलिमुज्ज्वलाम्॥
नित्यैकां दृश्यरूपेण दृश्यैकां कमलालये । गोपकन्याहितार्थाय पञ्चयोजनमण्डले ॥५॥
त्वदर्थं तु तृतीयां च द्वारकायां विशेषतः। करिष्ये तत्र दृष्टाऽसि राधिकासहितं च माम्
तत्रत्या मृत्तिकाऽद्यापि गोपीचन्दनसंज्ञिता । पुनाति सकलाँल्लोकानूर्ध्वपुण्ड्रेण धारिता
षट्कोणाष्टदलं बाह्ये चतुःषष्टिदलं पुनः । चतुरस्रं तदुपरि चतुर्द्वारसमन्वितम् ॥ ८ ॥
मध्ये तु कामबीजं स्यात्षट्कोणे कामकीलकम् । कोणाग्रेषु विचिन्त्यानि श्रियो बीजानि
मानिनि ॥ ९ ॥
द्वयं तु चिन्तयेन्मध्ये कर्णिकायां समन्ततः । दलाष्टके सखीस्थाने सखीनामष्टकं जपेत्॥
अष्टावष्टौ प्रतिदले चतुःषष्टिदलेषु वा । सुगन्धद्रव्यभूषाभिर्भक्ष्यैर्भोज्यैश्च पूजयेत् ॥११॥
त्रिकोटि सुन्दरीवृन्दपरीतं परिभावयेत् । तासां द्वयोर्द्वयोर्मध्ये मामेकमनुचिन्तयेत्॥१२॥
कर्णिकायामबालेन्दुमण्डले जलदाकृतिम् । सुवर्णवर्णया देव्या राधया परिवेष्टितम् ॥
कोटिकंदर्पमुग्धाङ्गमरविन्दनिभेक्षणम् । मयूरपिच्छाभरणं स्फुरन्मकरकुण्डलम् ॥ १४ ॥
बन्धूकदलविभ्राजत्पाणिपादतलाधरम् । त्रिभङ्गसुन्दरग्रीवं वेणुवादनतत्परम् ॥ १५ ॥
कुटिलालकमापीनभुजदण्डविभूषितम् । वलयाङ्गदमाणिक्यमयूखविलसत्तनुम् ॥ १६ ॥
स्फुरन्मुक्ताफलोदारद्युतिद्योतितवक्षसम् । श्रीवत्सकौस्तुभोरस्कं रणत्काञ्चीकलापकम् ॥
मञ्जुमञ्जीरनिर्घोषघुष्टपादसरोरुहम् । वधूकदम्बमध्यस्थमुदारगुणमण्डितम् ॥ १८ ॥
वीणावादनतत्त्वज्ञं गानमोहितमन्मथम् । पार्श्वे विचिन्तयेद्देवीं राधिकां परदेवताम् ॥
कामकेलिकलाभिज्ञामुन्निद्रजलजेक्षणाम् । क्षीणमध्यामनिन्द्याङ्गीं मुग्धहासां महाच्छ-
विम् ॥ २० ॥

गीतकाव्यकथालापविदग्धां सुन्दरोदरीम् । किशोरीं शैशवक्रीडापरमाव्यञ्जितस्तनीम्॥
नीलशाटीपरीधानां पङ्काश्मीरपङ्किलाम् । पङ्कजान्दोलितकरां कालिन्दीकेलिलम्पटाम् ॥ २२ ॥
श्रीकृष्णांससमासक्तपाणिमाहूतषट्पदाम् । कौमुदीवल्लभां कान्तां वृन्दावनविलासिनीम्
नित्यानपायिनीं विष्णोर्भावयेद्रसदीर्घिकाम् । कर्णिकाबाह्यवलये राधाविद्यां लिखेत्सुधीः ॥ २४ ॥
प्रणवं कामबीजं च दीर्घवर्हिं च राधिकाम् । संमोहिनीं कामदातृभूसमेतां च विन्यसेत्
कामकेलि च लीले च तथा लावण्यरूपिणि । नमो नमस्ते च पदं राधाविद्येति कीर्तिता ॥ २६ ॥
श्रीराधायै नमो वेति मन्त्रोऽन्योऽयं षडक्षरः । संपूज्याः परितो देवीं ललिताद्याश्च शक्तयः ॥ २७ ॥
व्याख्यास्वरूपवर्णानि ह्युपरिष्टाद्वरानने । स्तोत्रेणानेन विधिवत्संस्तुवीत विचक्षणः ॥
पूजान्ते रसिकानन्दपूजितां परदेवताम् । जयति श्रीपरानन्दकृष्णपादपवल्लरी ॥ २९ ॥
श्रीकृष्णवदनाम्भोजमधुपानमधुव्रती । श्रीकृष्णनयनानन्दरसकर्पूरवर्तिका ॥ ३० ॥
श्रीकृष्णाननपूर्णेन्दो राधिका चारुचन्द्रिका । श्रीकृष्णरूपपाथोधिलहरी हेमवैभवा ॥
श्रीकृष्णमालतीहारसुगन्धवरभूषणा । श्रीकृष्णपरमानन्दसरःपङ्कजकुण्डला ॥ ३२ ॥
श्रीकृष्णयामिनी रम्यचन्द्रोदयमुखोदया । श्रीकृष्णहृल्लतामूलविकासामलदोहदा ॥
श्रीकृष्णबाल्यकौमारकेलिरूपा यशस्विनी । श्रीकृष्णभवकैशोररसकेलिकलाप्रिया॥ ३४॥
श्रीकृष्णलोलनयनविलोलामलतारिका । कृष्णप्राणः कृष्णहृच्च कृष्णचैतन्यरूपिणी ॥
कृष्णानन्दा कृष्णमुखी कष्टाद्भवभयापहा । कृष्णहासा कृष्णरसा कृष्णलीला कृशोदरी ॥ ३६ ॥
कृष्णप्रिया कृष्णभरा कृष्णा कृष्णविलासिनी । कृष्णकान्ता कृष्णदेवा कृष्णाङ्गी कृष्णजीवना ॥ ३७ ॥
कृष्णतृट् कृष्णभोग्या च कृष्णक्षुत्कृष्णसाधना । कृष्णाश्रया कृष्णपरा कृष्णाभा कज्जलप्रिया ॥ ३८ ॥
कृष्णशेषा कृष्णसाध्या कृष्णजीमूतचातकी । कृष्णकेलिकलाभिज्ञा कृष्णपादपमञ्जरी ॥
कृष्णकासारमकरी कृष्णमातङ्गसङ्गिनी । कृष्णतुष्टा कृष्णपुष्टा कृष्णतोषविधायिनी ॥
कृष्णनेत्रा कृष्णकेशी कृष्णकुन्तलमण्डिता । कृष्णगीता कृष्णरासा कृष्णनृत्या रसेश्वरी ॥ ४१ ॥
कृष्णपूज्या कृष्णभक्ता कृष्णलीला कलावती । कृष्णविद्या कृष्णबुद्धिः कृष्णसंकल्पसिद्धिदा ॥ ४२ ॥
कृष्णमानसकल्लोला कृष्णमानसपङ्कजा । कृष्णमान्या कृष्णवन्द्या कृष्णसंतापचन्द्रिका
कृष्णसंगीतगमना कृष्णस्तोमविधायिनी । कृष्णाननाब्जमार्तण्डा कृष्णनेत्राञ्जनप्रभा ॥
कृष्णलावण्यनिलया कृष्णसौभाग्यशेवधिः । श्रीकृष्णाकर्षिणी कृष्णकथारसनिषेविका ॥

कृष्णतल्पा कृष्णकल्पा कृष्णकुल्या कलस्वना । कृष्णकेलिप्रिया कृष्णकेलिसंतानदोहदा
कृष्णशुद्धा कृष्णबुद्धा कृष्णमग्धा कलङ्किनी । कृष्णभामा कृष्णवामा कृष्णकामा मनो-
हरा ॥ ४७ ॥

कृष्णैश्वर्या कृष्णवित्ता कृष्णस्मितविघूर्णिता कृष्णाधररसाभिज्ञा कृष्णकौतुकसाधना ॥
कृष्णक्रीडासुधासिन्धुः कृष्णनामपरायणा । कृष्णश्रीः कृष्णभूतिश्च कृष्णर्द्धिः कृष्णम-
ङ्गला ॥ ४९ ॥

कृष्णवेणी कृष्णगतिः कृष्णकामदुघा हिता । कृष्णमाला कृष्णशाला कृष्णहृत्पद्मक-
र्णिका ॥ ५० ॥

कृष्णजीवातुका राधा वृषभानुतनूद्भवा । इति श्रीराधिकानामस्तवराजमनुत्तमम् ॥
पठनात्प्रेमदं दिव्यं कामदं पुण्यवर्धनम् । पूजावसाने संजाप्यं युगलध्यानसंयुतम् ॥ ५२ ॥
प्रणवाद्यमिदं देवि देवानामपि दुर्लभम् । कृषिभूर्वाचकः शब्दो नश्चाऽऽनन्दविधायकः ॥
सदानन्दसमावेशः कृष्ण इत्यभिधीयते । सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ॥
नमो वेदान्तवेद्याय ब्रह्मणे परमात्मने । अनयाऽऽराध्यते कृष्णो भगवान्हरिरीश्वरः ॥
लीलया रसवाहिन्या तेन राधा प्रकीर्तिता । राधिकाऽपि परा शक्तिः कृष्णे चाऽऽनन्द-
रूपिणी ॥ ५६ ॥

नित्या च नित्यवत्यस्मिन्स्वाधारे पुरुषोत्तमे । राधागानप्रियो राधासंगीताहृतमानसः ॥
राधालावण्यनिलयो राधाप्रेमसरोरुहः । राधाशृङ्गारपुलको राधाशृङ्गारकारकः ॥ ५८ ॥
राधामुखाब्जमधुपो राधास्मितनिरीक्षकः । राधाधरसुधामोदी राधाकण्ठविभूषणः ॥
राधामनःसरोहंसो राधामानविमोचकः । राधाविलासगर्विष्ठो राधारूपासवोन्मदः ॥
राधारूपलताभृङ्गो राधाचन्द्रचकोरकः । राधारससरोमन्थी राधासर्वाङ्गसंश्रयः ॥ ६१ ॥
राधारत्नावलीकण्ठो राधासौभाग्यमन्दिरः । राधागम्भीरतत्त्वज्ञो राधाजीमूतचातकः ॥
राधाविद्योतितोरस्को राधितो राधिकाप्रियः । नित्याक्षरो नरो राता निर्गुणो नीरद-
च्छविः ॥ ६३ ॥

निराकारो हरो हारी विहारी विपिनप्रियः । वेणुविस्फूर्जितमुखो विशुद्धस्मितभूषितः ॥
गुञ्जावलीविभूषाढ्यो बर्हिपिच्छविभूषणः । गोवर्धनधरो गोपीमण्डलीमध्यगो हरिः ॥
गोपालो गोकुलस्वामी गोविन्दो गोकुलेश्वरः । त्रिभङ्गसुन्दरग्रीवो मदाघूर्णितलोचनः
रक्तोष्ठो रक्तचरणो रक्तनेत्रो रसायनः । रासप्रियो रसाविष्टो राकाचन्द्रविनोदकृत् ॥ ६७ ॥
त्र्यन्तबोधितो वेदवेद्यो विद्या विनोदकृत् । विवेकगम्यो धौरेयो धरणीभृद्धनाधिपः ॥
क्षामोदरः क्षमासारोऽदीनो दामोदरो दमी । दयार्द्रचित्तः श्रीवक्षाः श्रीधरः श्रीकरो हरिः
दिव्यलोकगतो दिव्यो दिव्यायुधधरोऽच्युतः । नित्यमुक्तजनाराध्यो जगदानन्दकारकः ॥
कल्याणनिलयः कल्पः कल्पपादपसंश्रयः । कालिन्दीकेलिकृत्कंसबलविध्वंसकृत्कृती ॥
कलङ्करहितः कामी कामिनीकेलिदक्षिणः । वृन्दावनस्थो गोवृन्दपालको बालकेलिकृत्
बलभद्रप्रियः श्रीमान्वारणोद्धूननो बलः । ताण्डवी पाण्डवश्रेष्ठो यादवो नन्दनन्दनः ॥
जनार्दनो जनावासो बासुदेवो जनेश्वरः । वंशी वटी नटो नादी दानाकृष्टजगत्त्रयः ॥

नादातीतो नदीकूलकेलिकृद्धूलिधूसुरः। नारदोदितसंगीतः सामगानप्रियः कलः॥७५॥
इति नामशतं नित्यं जपतां किं नु दुर्लभम्। स्वापकाले प्रबोधे च पुण्याहे पुण्यकर्मणि॥
पुण्यक्षेत्रे प्रजपतः स्याद्भक्तिरनपायिनी। एतन्नामामृतस्तोत्रं श्रीराधाकृष्णयोः प्रिये॥
पठेद्वि चिन्तयन्नर्थमचिराद्विन्दते हि माम् ॥ ७८ ॥

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे भूर्लोकवर्णने श्रीवृन्दावनचरिते मन्त्रद्वयाराधननिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ १९९४ ॥

---

अथ सप्तमोऽध्यायः।

---

श्रीनारायण उवाच—
एवं चतुर्विधा देवि मम पुर्यो भवन्ति हि। माथुरे मथुरा पुण्या तत्र वृन्दावनं वनम्॥
अयोध्या कोशले देशे सरयूपुलिने स्थिता। यत्र राजीवपत्राक्षो रामो दशरथात्मजः॥२॥
परमात्मा समभवं जानकीरूपया त्वया। तयोर्लीलानुसंधानान्मुक्तिर्भवति सन्नतिः॥३॥
श्रीराममन्त्रराजस्य माहात्म्यं गिरिजापतिः। जानाति भगवाञ्शंभुर्ज्वलत्पावकलोचनः॥
रामो ङेन्तो वह्निपूर्वो नमोन्तः स्यात्षडक्षरः। तारको मन्त्रराजोऽयं संसारविनिवर्तकः॥
रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्रह्माभिधीयते॥६॥
रामकृष्णेति शब्दाभ्यां ब्रह्मेति प्रतिपाद्यते। कारणं सर्वभूतानामवधिः परिकथ्यते॥७॥
बृहद्गुणानामाधारो रहितः प्राकृतैर्गुणैः। एष सर्वस्य विधृतिः सेतुः श्रुत्या प्रकीर्तितः॥८॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भूतले। अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजत्यसौ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय जातोऽहं रामसंज्ञया
रामे नीलोत्पलश्यामे रामे कोदण्डभूषिते। भक्त्याऽभ्येति परं स्थानं वैकुण्ठाख्यं सुदुर्लभम् ॥ ११ ॥
चतुर्थी चात्र निर्दिष्टा तादर्थ्ये कमलोद्भव। अभ्येति तेन रामं हि संत्यज्यान्यप्रयोजनम्
साधानानां तु संत्यागं नमःशब्दो हि शंसति। अनेन शरणापत्तिः परमैकान्तिनां मता॥
सर्वधर्मान्परित्यज्य मामेकं शरणागतान्। मोचयिष्यामि सर्वेभ्यः पापेभ्यो नात्र संशयः
दासोऽस्मीति च संधाय चाऽऽत्मानं परमेश्वरि। अभयं तस्य दास्यामि यो मामेति निरन्तरम् ॥ १५ ॥
गच्छंस्तिष्ठन्स्वपन्भक्त्या नमन्यो गुरुदेवयोः। दासोऽस्मीति निजं रूपं स्मरन्मुच्येत बन्धनात् ॥ १६ ॥
नारायणस्य ये भक्ताः शान्तास्तद्गतमानसाः। तेषां दासस्य दासोऽहमिति संचिन्तयेद्धिया ॥ १७ ॥
शङ्खचक्रोर्ध्वपुण्ड्राद्यैर्दासवेषं विधाय च। शश्वत्तु देवदेवेशं भक्त्या परिचरेद्धरिम्॥१८॥

---

१ ख. रामेति किल वर्णाभ्यां।

स सर्वसिद्धिमासाद्य ह्यन्ते रामपदं व्रजेत् । चिन्तयेच्चेतसा नित्यं श्रीरामः शरणं मम ॥
चिद्रूपस्याऽऽत्मनो रूपं पारतन्त्र्यं विचिन्त्य च । चिन्तयेच्चेतसा नित्यं श्रीरामः शरणं मम ॥ २० ॥
*अचिन्त्योऽपि शरीरादेः स्वातन्त्र्यं नैव विद्यते । चिन्तयेच्चेतसा नित्यं श्रीरामः शरणं मम ॥ २१ ॥
आत्माधारं स्वतन्त्रं च सर्वशक्तिं विचिन्त्य च । चिन्तयेच्चेतसा नित्यं श्रीरामः शरणं मम ॥ २२ ॥
नित्यात्मगुणसंयुक्तो नित्यात्मतनुमण्डितः । नित्यात्मकेलिनिलयः श्रीरामः शरणं मम॥
गुणलीलास्वरूपेषु मितिर्यस्य न विद्यते । अतो वाङ्मनसा वेद्यः श्रीरामः शरणं मम ॥
कर्ता सर्वस्य जगतो भर्ता सर्वस्य सर्वगः । संहर्ता कार्यजातस्य श्रीरामः शरणं मम ॥
वासुदेवादिमूर्तीनां चतुर्णां कारणं परम् । चतुर्विंशतिमूर्तीनामाश्रयः शरणं मम ॥ २६॥
नित्यमुक्तजनैः पुष्टो निविष्टः परमे पदे । परं परमभक्तानां श्रीरामः शरणं मम ॥ २७॥
महदादिस्वरूपेण संस्थितः प्राकृते पदे । ब्रह्मादिदेवरूपैश्च श्रीरामः शरणं मम ॥२८॥
मन्वादिनृपरूपेण श्रुतिमार्गं बिभर्ति यः । प्रजापतिस्वरूपेण श्रीरामः शरणं मम ॥२९॥
ऋषिरूपेण यो देवो वनवृत्तिमपालयत् । योऽन्तरात्मा च सर्वेषां श्रीरामः शरणं मम ॥
योऽसौ सर्वतनुः सर्वः सर्वनामा सनातनः । अलिप्तः सर्वभावेषु श्रीरामः शरणं मम ॥
बर्हिमत्स्यादिरूपेण सद्धर्ममनुपालयन् । परिपाति जनान्दीनाङ्श्रीरामः शरणं मम॥३२॥
यश्चाऽऽत्मानं पृथक्कृत्य भक्तप्रेमवशं गतः । अर्चायामास्थितो देवः श्रीरामः शरणं मम
सर्वावताररूपाणां दर्शनस्पर्शनादिभिः । दीनानुद्धरते योऽसौ श्रीरामः शरणं मम ॥
कौसल्याशुक्तिसंजातो जानकीकण्ठभूषणः । मुक्ताफलसमो योऽसौ श्रीरामः शरणं मम
विश्वामित्रमखत्राता ताटकागतिदायकः । अहल्याशापशमनः श्रीरामः शरणं मम ॥
पिनाकभञ्जनः श्रीमाञ्जानकीप्रेमपालकः । जामदग्न्यप्रतापघ्नः श्रीरामः शरणं मम ॥
राज्याभिषेकसंहृष्टः कैकेयीवचनात्पुनः । पित्रा दत्तवनक्रीडः श्रीरामः शरणं मम ॥
जटाचीरधरो धन्वी जानकीलक्ष्मणान्वितः । चित्रकूटकृतावासः श्रीरामः शरणं मम ॥
महापञ्चवटीलीलासंजातपरमोत्सवः । दण्डकारण्यसंचारी श्रीरामः शरणं मम ॥४०॥
खरदूषणसंभेदी दुष्टराक्षसभञ्जनः । हृतशूर्पणखाशोभः श्रीरामः शरणं मम ॥ ४१ ॥
मायामृगविभेत्ता च हृतसीतानुतापकृत् । जानकीविरहाक्रोशी श्रीरामः शरणं मम ॥
लक्ष्मणानुचरो धन्वी लोकयात्राविडम्बकः । पम्पातीरकृतान्वेषः श्रीरामः शरणं मम ॥
जटायुत्राणकर्ता च कबन्धगतिदायकः । हनुमत्कृतसाहित्यः श्रीरामः शरणं मम ॥४४॥
सुग्रीवराज्यदः श्रीशो वालिनिग्रहकारकः । अङ्गदाश्वासनकरः श्रीरामः शरणं मम ॥
सीतान्वेषणनिर्मुक्तहनुमत्प्रमुखव्रजः । मुद्रानिवेशितबलः श्रीरामः शरणं मम ॥ ४६ ॥
हेलोत्तारितपाथोधिर्दूतनिर्धूतराक्षसः । लङ्कादाहकरो धीरः श्रीरामः शरणं मम ॥ ४७॥

---

* इदमर्धं ख. पुस्तके नास्ति ।

---

१ ख. यः प्राप्यते स्व° ।

सेतुसंबद्धपाथोधिर्लङ्काप्रासादरोधकः । रावणादिप्रभेत्ता च श्रीरामः शरणं मम ॥४८॥
जानकीजीवनत्राता विभीषणसमृद्धिदः । पुष्पकारोहणासक्तः श्रीरामः शरणं मम ॥
राजसिंहासनारूढः कौसल्यानन्दवर्धनः । नामनिर्धूतनिरयः श्रीरामः शरणं मम॥ ५० ॥
यज्ञकर्ता यज्ञभोक्ता यज्ञभर्ता महेश्वरः । अयोध्यामुक्तिदः शास्ता श्रीरामः शरणं मम॥
प्रपन्नः सर्वधर्मेभ्यो मामेकं शरणं गतः । पठन्निदं मम स्तोत्रं मुच्यते भवबन्धनात् ॥
मन्त्रश्चाष्टाक्षरो देवि श्रीरामः शरणं मम । सिद्धोपायोऽक्षरविदां भावनापरिकल्पितः ॥
रामेति द्व्यक्षरं मन्त्रं मरणे यदि संस्मरेत् । नरो न लिप्यते पापैः पद्मपत्रमिवाम्भसा ॥
रामभद्रो रामचन्द्रो मन्त्रोऽयं चतुरक्षरः। शुद्धो ङेन्तो नमः पश्चात्सप्तवर्णोऽपि मुक्तिदः
अष्टाक्षरो बीजपूर्वो बीजं तु प्रणवो भवेत्। नानाकामवशाद्देवि बीजान्यन्यानि सन्ति हि
षडक्षरो वह्निपूर्वस्तारकस्त्वभिधीयते । महापातकिनां पापदहने दहनोपमः ॥ ५७ ॥
हुं जानकीवल्लभेति ङेन्तो वह्निप्रिया ततः । दशाक्षरो महामन्त्रो जपतां कल्पपादपः ॥

श्यामं वारिजपत्रनेत्रममलं प्रज्ञानमूर्तिं हरिं
विद्युद्दीप्तपिशङ्गरम्यवसनं भास्वत्किरीटोज्ज्वलम् ।
कर्णालम्बितहेमकुण्डललसद्भ्रूवल्लिमत्यद्भुतं
श्रीमन्तं भगवन्तमिन्दुसहितं श्रीजानकीशं स्मरेत् ॥ ५९ ॥

श्रीरङ्गाख्यं परं धाम मम मानिनि भूतले । वैकुण्ठवैभवं सर्वं मया तत्र नियोजितम् ॥
कावेरी विरजा यत्र प्रभुपादाम्बुजाश्रया । श्रीमुक्तिमण्डपं नाम मन्दिरं मे वरानने ॥
त्वया सह सदा देवि निवसामि महीतले। श्रीरङ्गशायी भगवान्यत्राऽऽस्ते गरुडध्वजः॥
द्राविडेषु महापुण्यं श्रीरङ्गाख्यं निकेतनम् । शिलारूपेण तिष्ठामि यत्राहं कमलप्रिये ॥
कावेरीतोयरूपेण मामवेहि निरन्तरम् । यत्तोयपानादनघे निष्पापो जायते नरः ॥ ६४ ॥
न ह्यपुण्यवतां देवि मन्निकेतोपलम्भनम् । साधनान्तरनिष्ठानां भवतीत्यवधारय॥ ६५ ॥
यत्र मे लोककल्याणकारिणी परमा कला । द्विजरूपेण भविता या तु संकर्षणाभिधा ॥
द्वापरान्ते कलेरादौ पाखण्डप्रचुरे जने । रामानुजेति भविता विष्णुधर्मप्रवर्तकः ॥ ६७ ॥
श्रीरङ्गेशदयापात्रं विद्धि रामानुजं मुनिम् । येन संदर्शितः पन्था वैकुण्ठाख्यस्य सद्मनः॥
पारमैकान्तिको धर्मो भवपाशविमोचकः । यत्रानन्यतया प्रोक्तमावयोः पादसेवनम् ॥
कालेनाऽऽच्छादितो धर्मो मदीयोऽयं वरानने। तदा मया प्रवृत्तोऽयं तत्कालोचितमूर्तिना
विष्वक्सेनादिभिर्भक्तैः शठारिप्रमुखैर्द्विजैः । रामानुजेन मुनिना कलौ संस्थामुपेष्यति ॥
श्रीशैलो व्यङ्कटाद्रिश्च रङ्गाख्यं धाम मामकम् । यैर्नदृष्टं सुदृष्टं तैर्वैवस्वतगृहाजिरम् ॥
चतुर्थं द्वारकाख्यं हि मद्धाम सुरवन्दितम् । सेवतां परया भक्त्या नाहं दूरे कदाचन ॥
यत्राहं हेतिना साध्वि तापयामि तनुं नृणाम् । येन पूता भविष्यन्ति कलौ मन्दाधिकारिणः ॥ ७४ ॥
गोमत्याः संगमो यत्र सागरेण महात्मना । मृतास्तत्र भविष्यन्ति पापिनोऽपि चतुर्भुजाः ॥ ७५ ॥

---

१ ख. रोपसं०।

कलिकाले महाघोरे नोपायो विद्यतेऽपरः । विना द्वारवतीयात्रां गोमत्यां चाभिषेचनम्
द्वारकामृत्तिकालेपान्निर्लेपः पापकर्दमात् । जायते पुरुषो लोके कलिकाले विशेषतः ॥
तुलसीमालया युक्तो द्वारकामृत्तिकाङ्कितः । मम ध्यानरतो जन्तुरहमेव न चेतरः ॥
एवं पुण्यतराः पुर्यः क्षेत्राण्यायतनानि च । मदैकान्तिकभक्तानां मत्पदप्रापकाणि हि ॥
धर्मस्थानमयोध्याख्यं रङ्गं मुक्तिपदं स्मृतम् । द्वारका भक्तिकृत्स्थानं रसस्थानं तु माथुरम्
एवं प्रकाशितं देवि भक्तानां हितकारणात् । प्राकृतेऽपि पदं मुक्तेर्मा गाः शोकमनागपि
इति श्रुत्वा महादेवी विष्णुपत्नी मुदान्विता । स्वतन्त्रे कथयामास भक्तिं षोडशधा हरेः ॥ ८२ ॥
स्थानानि मत्प्रयुक्तानि ब्रह्मन्नुपदिदेश या । निवासार्थं वैष्णवानामप्राकृतपदं यथा॥८३॥
इति ते कथितं ब्रह्मन्प्रसङ्गान्निजवैभवम् । प्राकृते प्राकृतं स्थानं चतुर्धा त्ववतारितम् ॥
पद्मोपदिष्टं ते सर्वमाख्यानं पावनं महत् । स्थानं वृन्दावनं नाम पद्मा ध्यायति नित्यशः॥
कथं निवसतां मुक्तिरित्युक्तं यत्त्वयाऽनघ । तदिदं सर्वमाख्यातं विमुक्तिपदकारणम् ॥

ब्रह्मोवाच—

मुनयो भगवानेवं प्राकृते क्षितिमण्डले । मामुवाच निजं स्थानं दिव्यं मोक्षैकसाधनम् ॥

मुनय ऊचुः—

भुवर्लोकादिकं सर्वं श्रुतं विष्णुमुखाद्यथा । तथा नो वद विश्वात्मन्प्रपन्नाञ्शरणागतान् ॥ ८८ ॥

श्रीब्रह्मोवाच—

श्रूयतां मुनयः पुण्यं भगवद्वचनामृतम् । कृपया करुणासिन्धुर्यथा मामवदत्पुरा ॥ ८९ ॥
श्रुत्वाऽहं भूमिलोकं च सरहस्यं जनार्दनात् । भुवः प्रभृतिलोकानामपृच्छं रूपमद्भुतम्॥

श्रीनारायण उवाच—

यावत्प्रमाणा पृथिवी विस्तीर्णपरिमण्डला । तावद्भुवः स्थलं ब्रह्मन्विस्तीर्णपरिमण्डलम् ॥ ९१ ॥
उपरिष्टात्क्षितेर्व्योम्नि लक्षयोजनसंमिते । रविस्तिष्ठति तिग्मैः स्वैरंशुभिर्भासयञ्जगत् ॥
रथमास्थाय भगवान्बहुयोजनविस्तृतम् । वामपार्श्वे स्थितं त्वेकचक्रं दिव्यं प्रतिष्ठितम्॥
वहन्ति सप्तयः सप्त च्छन्दांसि स्यन्दनं महत् । सारथिश्चारुणः सर्वानश्वान्वाहयति स्वयम् ॥ ९४ ॥
मानसोत्तरशैलस्य मूर्ध्नि स्यन्दनपद्धतिः । विभागहेतुरुषसामह्नामपि गतिक्रमात् ॥९५॥
योगिनां परमः पन्थाः स्मृतः क्लेशपरिक्षये । मोक्ष्यमाणाः पथा येन यान्ति विष्णोः परं पदम् ॥ ९६ ॥
उदयास्तमयौ नैव भानुः सर्वत्र संमुखः । दर्शनादर्शने भानोरुदयास्तमयौ मतौ॥९७॥
यैर्यत्र दृश्यते भानुः स तेषा मुदयः स्मृतः । यदा यत्र तिरोभावस्तदास्तमयधीर्नृणाम् ॥
दूरी भवन्ति पूर्वाह्णे रश्मयो ह्यस्य संतताः । ह्रस्वी भवन्ति पश्चात्तु यावत्तेषामदर्शनम्॥

---

१ क. °पदास्तये ।

वर्जयित्वा पुरीं धातुः सर्वतो मेरुभूतले । पतन्ति भानवो भानोस्तिर्यगूर्ध्वमधस्तता: ॥
सभां तु ब्रह्मणो गत्वा प्रत्यागच्छन्ति ते पुनः । ब्रह्मणस्तेजसा तेन नान्यत्राऽऽवर्तनं भवेत् ॥ १०१ ॥
भूसूर्ययोरन्तरालं भुवस्तलमुदाहृतम् । विद्याधराश्च गन्धर्वाः सिद्धाश्च सहदानवाः ॥
वसन्ति मुदिताः स्वेषु प्रदेशेषु पृथक्पृथक् । लक्षे दिवाकरस्थानाच्छशिनः स्थानमीरितम् ॥ १०३ ॥
तस्योपरिष्टात्तिष्ठन्ति नक्षत्राणि यथा तथा । लक्षत्रयमतीत्योर्ध्वं बुधस्य स्थितिरुच्यते ॥
उशना तु ततो लक्षद्वयमुत्तीर्य तिष्ठति । तद्योजनान्यतिक्रम्य भौमस्तिष्ठति सर्वदा॥१०५॥
तावत्प्रमाणेऽवस्थानं गुरोस्तस्योपरि स्थितः । शनैश्चरस्तत्प्रमाणमतीत्योर्ध्वं रवेः सुतः॥
सप्तर्षिमण्डलं तस्माल्लक्षमेकं सुरेश्वर । सप्तर्षिभ्यः सहस्राणां शतादूर्ध्वं व्यवस्थितः ॥
ततो ध्रुवः स्थितः स्थाने दुरारोहे महर्षिभिः । मेधीभूतः समस्तस्य ज्योतिश्चक्रस्य पद्मज ॥ १०८ ॥

द्वादशारं महच्चक्रं नेमी द्वे तस्य नाभयः । तिस्रः सन्ति वसन्ताद्या ऋतवो ये ह्यरेषु ते॥
मेषादयोऽप्यरेष्वेव मीनान्ता द्वादश स्मृताः । मासा द्वादश चैत्राद्या वसन्तप्रमुखास्तथा
ऋतवः षट्क्रमाश्चैव विषुवायनयोर्द्वयम् । सितासितौ च पक्षौ द्वौ युगभेदाश्च वत्सराः॥
त्रुट्यादयः कालभेदाश्चक्रधारासु निष्ठिताः। ध्रुवः स्थितो नाभिमध्ये प्रवरा ये तु राशयः
प्रसव्येन ग्रहाः सर्वे चरन्ति गतिरीदृशी। कुलालचक्रमध्यस्थमृत्पिण्डसदृशो ध्रुवः॥११३॥
भ्रमन्ति परितः सर्वे ध्रुवं ज्योतिर्गणाः सदा। आदित्यध्रुवयोर्मध्ये देशः स्वर्गसमाह्वयः ॥
वसन्ति तस्मिन्गीर्वाणा विमानेषु पृथक् पृथक् । असंख्याता नित्यतृप्ता ज्योतिर्मयवपुर्धराः ॥ ११५ ॥

तेषां गङ्गाजलं सेव्यं पुष्पाणि सुरभूरुहाम् । वनानि चिन्तामणयः स्त्रियश्चाप्सरसः स्मृताः ॥ ११६ ॥
लोकोऽय क्रतुभिः साध्यो यत्र राजा शतक्रतुः । उपेन्द्रमूर्तिर्भगवानासीनस्तत्र सर्वदा ॥
रक्षति स्वर्गनिलयान्देवादीन्स्वेन तेजसा। भूर्भुवःस्वस्त्रयो लोका लक्षाः पञ्चदश स्मृताः
तत्र भागवता वासं नेच्छन्ति मनसाऽपि हि । येषां वैकुण्ठपादाब्जरतिरस्त्यनपायिनी ॥
न ते स्वर्गसुखं भौमं ब्राह्म्यं वाञ्छन्ति कर्हिचित् । ततः परं महर्लोकः कोटियोजनमायतः ॥ १२० ॥

सनन्दनाद्या मुनयो निवसन्ति च कोटिशः । ततः परो जनो लोकः पुरस्ताद्द्विगुणायतः
ततः परं ह्यष्टकोटियोजनं तु तपः स्मृतः । कोटित्रयायतं तस्मादूर्ध्वं धातुः पुरं स्थितम्॥
तद्ब्रह्मलोकं मुनयो गृणन्ति कमलासन । लक्षयोजनविस्तीर्णं शालाप्रासादसंकुलम् ॥
उत्तरेण ब्रह्मलोकं लक्षाः पञ्चदश स्मृताः । तत्र सत्यमिति ख्यातो विष्णुलोको निरामयः ॥ १२४ ॥

पञ्चचत्वारिंशत्कोटियोजनः परिकीर्तितः । सर्वात्मा भगवानूर्ध्वं पञ्चपञ्चदशास्थितः ॥
परमेष्ठी स भगवान्प्रपञ्चे विष्णुतुष्टये । अध्यास्ते भगवांन्नित्यं शङ्खचक्रगदाधरः ॥१२६॥

पञ्चशक्तिमयो विष्णुः कोटियोजनसंमिते । आस्ते श्रीभूमिसहितो वैनतेयेन सेवितः ॥
अण्डभित्तिरुपर्यस्य स्थिता कोट्यर्धयोजने । एष ते ह्यूर्ध्वलोकानां निवासः कथितो मया ॥ १२८ ॥
एतदावरणीभूतमण्डं विद्धि हिरण्मयम् । एतेनाण्डकटाहेन लोकाः सर्वे समावृताः॥१२९॥
उपर्युपर्यमी लोकाः कपित्थफलवत्स्थिताः । तद्दशात्तरसंख्येन वारिणा परिवेष्टितम् ॥
आवृत्याण्डं यथा वारि स्थितं तद्वत्तदग्निना । स वायुना तद्वदेव वायुश्च नभसाऽऽवृतः॥
सर्वं दशोत्तरं विद्यात्तद्व्योम महताऽऽवृतम् । महांश्चाऽऽद्यप्रधानेन प्रधानं तमसाऽऽवृतम् ॥
तदनन्तं तमस्तस्य संख्यानं नैव विद्यते । हेतुभूतमशेषस्य तमसः प्रकृतिः परा ॥ १३३॥
अण्डानामीदृशानां च सहस्राण्ययुतानि च । बहुना वा किमुक्तेन संख्या वक्तुं न शक्यते ॥ १३४ ॥
अण्डानि तानि सर्वाणि व्याप्य नारायणः स्थितः । अतश्च तेषां भगवान्सर्वाधारः पुरः पुमान् ॥ १३५ ॥
बहिश्च साक्षिवत्सर्वमीक्षमाणोऽवतिष्ठते । महतस्तमसो ब्रह्मन्द्युलोका बहुयोजनाः ॥
चत्वारः क्रमशः सन्ति चतुर्भिः समधिष्ठिताः । व्यूहैः क्रमेण लक्ष्यान्तेष्वनिरुद्धोऽवरो मतः
प्रद्युम्नोऽनन्तरं तस्य संकर्षणसमाह्वयः । वासुदेवस्ततः पश्चाद्व्यूहाख्यः कमलासन ॥
विभवाख्यो वासुदेवस्तदनन्तरमीरितः । अनादिर्वासुदेवश्च स्वस्वलोके प्रतिष्ठितः ॥
ततो नारायणस्यापि लोकस्तन्निकटे स्थितः । एकैकस्यान्तरं कोटियोजनानामुदीरितम्॥
तावानेव च विस्तारस्तेषामतिमनोहरः । तेभ्यो बहिः स्थितो लोको यत्राऽऽस्ते भगवानजः ॥ १४१ ॥
आधारभूतः सर्वेषामनादिः पुरुषोत्तमः । शेषभोगासने दिव्ये श्रीभूम्यां सहितः स्थितः
यो व्याप्ताभिस्तथाऽष्टाभिः शक्तिभिः परिवारितः । वालव्यजनहस्ताभिः सेव्यमानाभिरन्तिके ॥ १४३ ॥
सेनेशाद्यैः पारिषदैश्चण्डाद्यैरायुधैरपि । प्रणमद्भिः सेव्यमानः सामीप्ये परितः स्थितैः॥
मुक्तैश्च पञ्चकालज्ञैः सिद्धैः किंकरतां गतैः । उपास्यमानः सततं द्वादशाक्षरचिन्तकैः ॥
अष्टाङ्गयोगसंसिद्धैर्बहुभिर्भगवन्मयैः । मन्त्रद्वयानुसंधानपरैर्भागवतोत्तमैः ॥ १४६ ॥
तापादिकृतसंस्कारैर्यैः पूर्वं पर्युपासितः । सर्वलोकावधिः शेषी भगवान्सद्गुणालयः ॥
वैकुण्ठाख्यो हि मे लोको नित्योऽयं कमलासन । कथितः कृपया तुभ्यं त्रिगुणात्परतः परः
एष सर्वावधिः शेषी भगवान्सद्गुणालयः । सच्चिदानन्दरूपोऽसौ सर्वकारणकारणम् ॥
भक्त्या परमया ग्राह्यो दीनानां परिपालकः ॥ १४९ ॥
यद्गत्वा न निवर्तन्ते तद्ब्रह्म परमं पदम् । इति ते कथितं धातः स्थानं यद्द्विविधं मतम्॥
प्राकृताप्राकृतं नाम किं भूयः श्रोतुमिच्छसि ॥ १५१ ॥

इति श्रीबृहद्ब्रह्मसंहितायां द्वितीयपादे लोकनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ २१४४ ॥

समाप्तोऽयं द्वितीयः पादः ॥ २ ॥

अथ तृतीयपादे प्रथमोऽध्यायः।

---

श्रीब्रह्मोवाच—

उपासकानां यदिदं निरूपितं स्थानं त्वयाऽप्राकृतमेकमव्ययम्।
कथं तदेतत्पुरुषः प्रयाति सर्वं समाख्याहि रहस्यमेतत्॥ १॥
मध्ये कृतनिवासा ये स्थानानि च सरांसि च। वनानि पुरुषाः के वा नद्यस्तत्र भवन्ति च
व्यूहस्थानं च विभवस्थानमायतनानि च। भोगं च नित्यमुक्तानां देव विस्तरतो वद॥

श्रीनारायण उवाच—

लोकाश्चतुर्दश प्रोक्ता मया ते कमलोद्भव। अधः सप्त समाख्याता ऊर्ध्वं सप्त प्रकीर्तिताः॥ ४॥
उक्ताः सावरणाः सर्वे नाशशीला भवन्ति ते। ब्रह्मणो दिवसस्यान्ते नाशमीयुस्त्रयश्च ते॥ ५॥
ब्रह्मणोऽन्ते विलीयन्ते लोका ये च चतुर्दश। प्राकृतास्ते समाख्याता लीलारूपा रमापतेः॥ ६॥
कालेनैव विलीयन्ते कालेनैव भवन्ति हि ॥ ७॥
आद्यन्तयोस्त्वमेवैषां हेतुभूतः प्रजापते। त्वया सह भवन्तीह लयं यान्ति त्वया सह॥
लोकास्तु प्रकृतौ यान्ति त्वं तु मय्येव मत्परः ॥ ८॥
दृश्यमानमिदं सर्वमनित्यमिति चोच्यते। प्राकृतं कार्यभूतं हि मदनन्यतया स्थितम्॥९॥
अहमात्मा च सर्वेषामाधारः पुरुषः परः। क्रीडार्थं देवदेवेश मयैव प्रकटीकृतम् ॥१०॥
लोकैश्चतुर्भिर्दशभिः सागरैर्द्वीपसंयुतैः। भूतैश्चतुर्भिर्दशभिर्भूधरैश्च महोत्सवैः ॥ ११॥
परिपूर्णमिदं रम्यमण्डं प्रकृतिसंभवम्। दशोत्तरैरावरणैः पुष्टं वस्त्रपुटैरिव ॥ १२॥
योजनानां षष्टिकोटिमुन्नतं विस्तरेण तु। पञ्चाशत्कोटिगुणितं प्राकृतं त्वण्डमेव च ॥
एतदण्डकटाहेन तिर्यगूर्ध्वमधः क्रमात्। कृष्टे सस्यं यथा बीजं सर्वतो वै समावृतम् ॥
यथा कपित्थं बीजानि समाकृष्यावतिष्ठते। तथाऽण्डमेतदाधारं चेतनाचेतनानि हि ॥
कोटियोजनमानेन पृथिव्यावरणं स्मृतम्। दशकोटिप्रमाणेन जलावरणमुच्यते ॥ १६॥
शतकोटिप्रमाणेन वह्नेरावरणं मतम्। सहस्रकोटिमानेन वायोरावरणं विधे ॥ १७॥
सहस्राणां दशेनोक्तमाकाशावरणं महत्। लक्षेणाहंकृतेस्तात दशलक्षं महत्स्मृतम् ॥
प्रकृत्यावरणं यत्तदसंख्यातं तदुच्यते। प्रकृत्यन्तर्गता लोका दह्यन्ते कालवह्निना ॥१९॥
अण्डावरणभूतानि प्रकृतौ लयमाप्नुयुः। सा सर्वजगदाधारा प्रकृतिर्मत्समाश्रयात् ॥
तया जगत्सर्गलयौ करोमि कमलोद्भव। क्रीडार्थं त्रिगुणा देवी मयैवोद्भाविता पुरा
दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
इयं भागवती माया कारणे सत्स्वरूपिणी। गुणत्रयवती नित्या नित्यानन्तगुणाश्रया॥

---

१ ख. °कृत्यावरणान्तानि द°।

अव्यक्ता शाश्वती सर्वबीजभूता प्रतिष्ठिता । कार्यानुमेया प्रकृतिश्चिच्छरीरतया मता ॥
स्वाश्रयव्यतिरेकेण स्थातुं गन्तुमनीश्वरा । तच्छरीरतया सैव तदायत्तगुणाक्रिया ॥ २५ ॥
धत्तेऽङ्कुरवदात्मस्थमेतद्युक्तमलक्षिता । अवस्थान्तरमापन्ना सैव भाति न चापरा॥ २६ ॥
व्यक्ता माया कार्यरूपा नैकरूपा प्रजायते । सर्वदा नैकरूपेयं परिणामस्वभावतः ॥ २७ ॥
अनित्या ह्यसती मिथ्यावस्तुभूताऽपि दुर्ग्रहा । दुस्तरा दुष्प्रधर्षा च दुरूढा दुर्विचेष्टिता ॥
मद्भार्या मत्त(त्प्र)सूरेषा न मत्तोऽन्या मनागपि । भिन्नोऽहमेव देवेश निरपेक्षो निराश्रयः॥
मदनन्या महाभाग कार्यकारणयोरियम् । चेतनः पुरुषश्चान्यो मच्छरीरतया मतः॥३०॥
सच्चिदानन्दरूपोऽयं न मे भेदो मनागपि । भोक्ता निरञ्जनो मायागुणहीनोऽक्षरः परः॥
परिणामकृताकारनामरूपविवर्जितः । निर्विकारो गुणैर्व्याप्तो मद्दास्यो मन्निकेतनः ॥
अजोऽव्ययोऽच्युतः साक्षी प्रकृत्यात्मा सुखात्मकः । एकरूपो नित्यवस्तुपरमार्थसदात्मकः
मायापरतरो मायी मच्छेषो मद्गतिः स्मृतः । मद्भोक्ता मत्परो नित्यो मदनन्यस्थिति-
र्मतः ॥ ३४ ॥
मायाजवनिकाच्छन्नो यथाऽहंकारितो यदा । मायाभोक्ता शरैर्विद्धो मायागतिरनीश्वरः ॥
अब्रह्मभूतस्त्रिगुणो मलिनो दुःखभाजनः । जीवोऽयं मत्स्वरूपोऽपि संसारे ह्यवसीदति ॥
ब्रह्मात्मकमिदं सर्वं चिदचिन्मिश्रितं जगत् । विज्ञायाऽऽत्मनि मय्येव कृतभावस्तु यः
पुमान् ॥ ३७ ॥
अविद्यातिमिरं तीर्त्वा मद्भावमुपलभ्य च । मामुपैति महाभाग मदेकशरणागतः ॥३८॥
स एतां त्रिगुणां मायामर्चिरादिगतिं गतः । भित्त्वा सकार्यां मतिमान्याति सत्त्वगुणा-
स्पदम् ॥ ३९ ॥
नित्यमप्राकृतं धाम स्वप्रकाशमनामयम् । भक्त्यैकलभ्यममलं कालप्रलयवर्जितम् ॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥
मायिकं यन्मया प्रोक्तं निबिडध्वान्तसंकुलम् । तस्योर्ध्वभागे विरजा निःसीमा विद्यते
नदी ॥ ४२ ॥
सा चाऽऽवरणभूता हि विश्वस्य पुरतो विधे । प्रधानपरमव्योम्नोरन्तरे विरजा नदी ॥
वेदान्तस्वेदजनिततोयैः प्रस्राविता शुभा । तस्यास्तीरे परव्योम त्रिपाद्भूतं सनातनम् ॥
अमृत शाश्वतं नित्यमनन्तं परमं पदम् । शुद्धसत्त्वमयं दिव्यमनन्तं ब्रह्मणः पदम् ॥
अनेककोटिसूर्याग्नितुल्यवर्चस्कमव्ययम् । सर्ववेदमयं शुद्धं सर्वप्रलयवर्जितम् ॥ ४६ ॥
असंख्यमजरं नित्यं जाग्रत्स्वप्नविवर्जितम् । हिरण्मयं मोक्षपदं ब्रह्मानन्दसुखाह्वयम् ॥
समानाधिक्यरहितमाद्यन्तरहितं शुभम् । एवमादिगुणोपेतं तद्विष्णोः परमं पदम् ॥
व्यूहलोकात्परतरो विभवाख्यस्तु यः स्मृतः । वासुदेवो महाभाग तस्य लोकं वदामि ते ॥
अयोध्याख्या पुरी चैका द्वितीया मथुरा स्मृता । मत्स्यादीनां तथा पुर्यः परितः संप्र-
कीर्तिताः ॥ ५० ॥
तत्रायोध्या पुरी रम्या यत्र नारायणो हरिः । रामरूपेण रमते सीतया परया सह ॥
मणिकाञ्चनचित्राढ्या प्राकारैस्तोरणैर्वृता । चतुर्द्वारसमायुक्ता तुङ्गगोपुरसंयुता ॥ ५२ ॥

चण्डादिद्वारपालैस्तु कुमुदाद्यैः सुरक्षिता। नित्यमुक्तजनोपेता नित्योत्सवमनोहरा ॥
चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ। वारुण्यां जयविजयौ सौम्ये धातृविधातृकौ
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः। शङ्कुकर्णः सर्वभद्रः सुमुखः सुप्रतिष्ठितः ॥
एते दिक्पतयः प्रोक्ताः पुर्या अस्याश्चतुर्मुख। कोटिवैश्वानरप्रख्यैर्गृहपङ्क्तिभिरावृताम् ॥
आरूढयौवनैर्नित्यैर्दिव्यनारीनरैर्युतम्। अन्तःपुरं तु देवस्य मध्ये पुर्या मनोहरम् ॥ ५७॥
मणिप्राकारसंयुक्तं वरतोरणशोभितम्। विमानैर्गृहमुख्यैश्च प्रासादैर्बहुभिर्वृतम् ॥ ५८ ॥
दिव्याप्सरोगणैः स्त्रीभिः सर्वतः समलंकृतम्। मध्ये तु मण्डपं दिव्यं राजस्थानं महोत्सवम् ॥ ५९ ॥
माणिक्यस्तम्भसाहस्रजुष्टं रत्नमयं शुभम्। धर्मादिदैवतैर्नित्यैर्वृतं वेदमयात्मकैः ॥ ६० ॥
अधर्माज्ञानावैराग्यानैश्वर्यैः पादविग्रहैः[1]। ऋग्यजुःसामाथर्वाख्यरूपैर्नित्यैर्वृतं क्रमात् ॥
शक्तिराधारशक्तिश्च चिच्छक्तिश्च सदाशिवा। धर्मादिदेवतानां च शक्तयः परिकीर्तिताः ॥ ६२ ॥
वसन्ति मध्यगास्तत्र वह्निसूर्यसुधांशवः। कूर्मश्च नागराजश्च वैनतेयस्त्रयीश्वरः ॥ ६३ ॥
छन्दांसि सर्वमन्त्राश्च पीठरूपत्वमास्थिताः। सर्वाक्षरमयं दिव्यं योगपीठमिति स्मृतम् ॥
तन्मध्येऽष्टदलं पद्ममुद्यदार्कसमप्रभम्। तन्मध्ये कर्णिकायां तु सावित्र्यां शुभदर्शनः ॥
ईश्वर्या सह देवेशस्तत्राऽऽसीनः परः पुमान्। इन्दीवरदलश्यामः कोटिसूर्यप्रकाशकः ॥
युवा कुमारः स्निग्धाङ्गकोमलावयवैर्वृतः। फुल्लरक्ताम्बुजनिभकोमलाङ्घ्रिसरोजवान् ॥
प्रबुद्धपुण्डरीकाक्षः सुभ्रूवल्लियुगाङ्कितः। सुनासः सुकपोलाढ्यः सुशोभमुखपङ्कजः ॥
मुक्ताफलाभदन्ताढ्यः सुस्मिताधरविद्रुमः। परिपूर्णेन्दुसंकाशसुस्मिताननपङ्कजः ॥ ६९॥
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विराजितः। सुस्निग्धनीलकुटिलकुन्तलैरुपशोभितः ॥
मन्दारपारिजातादिकबरीकृतकेशवान्। प्रातरुद्यत्सहस्रांशुनिभकौस्तुभशोभितः ॥७१॥
हारस्वर्णस्रगासक्तकम्बुग्रीवाविराजितः। सिंहस्कन्धनिभैः प्रोच्चैः पीनैरंसैर्विराजितः ॥
पीनवृत्तायतभुजैश्चतुर्भिरुपशोभितः। अङ्गुलीयैश्च कटकैः केयूरैरुपशोभितः ॥ ७३ ॥
बालार्ककोटिसंकाशैः कौस्तुभाद्यैः सुभूषणैः। विराजितमहावक्षा वनमालाविभूषितः ॥
विधातुर्जननस्थाननाभिपङ्कजशोभितः। बालातपनिभश्लक्ष्णपीतवस्त्रसमन्वितः ॥७५ ॥
नानारत्नविचित्राभ्यां कटकाभ्यां विराजितः। सज्योत्स्नचन्द्रप्रतिमनखपङ्क्तिभिरावृतः ॥
कोटिकंदर्पलावण्यसौन्दर्यनिधिरच्युतः। दिव्यचन्दनलिप्ताङ्गो दिव्यमालाविभूषितः ॥
गृहीतशङ्खचक्राभ्यामुद्बाहुभ्यां विराजितः। कोदण्डबाणहस्ताभ्यामितराभ्यां तथैव च ॥
वामाङ्के जानकी देवी किशोरी कनकोज्ज्वला। कैवल्यरूपिणी नित्या नित्यानन्दैकविग्रहा ॥ ७९ ॥
सर्वलक्षणसंपन्ना यौवनारम्भविग्रहा। रत्नकुण्डलसंसक्तनीलकुञ्चितशीर्षजा ॥ ८० ॥
ज्ञप्तिमात्रात्मिकाऽऽनन्दा सर्वैश्वर्यरसोत्सवा। अर्धमात्रात्मिका नित्या चोंकाराक्षरसंभवा ॥ ८१ ॥

---

१ क. धर्मज्ञानतथैश्वर्यवैराग्यैः पा०।

सर्वशक्तिमयी रम्या शक्तीनां शक्तिदायिनी । जननी सर्वभूतानां योगिनामपि मोहिनी॥
सेयं सीता भगवती ज्ञानानन्दस्वरूपिणी । योगिनां रमणे रामे रमते रामवल्लभा ॥८३॥
रामाविर्भावसमये ह्याविर्भवति सर्वदा । निष्प्रपञ्चे निष्प्रपञ्चा निरीहात्मगुणक्रिया ॥
आदिभूता महालक्ष्मीः सीता तु विभवे मता । आविर्भावे क्षितौ जाता जानकी दिव्यरूपिणी ॥ ८५ ॥
यातुधानक्षयकरी पतिव्रतपरायणा । पालिनी सर्वसत्त्वानां धर्मस्थापनकारिणी ॥ ८६ ॥
संहारे समनुप्राप्ते तामसी शक्तिरुत्तमा । महाकाली करालास्या कल्पान्तक्षयकारिणी ॥
पूर्णरूपेण साकेते नित्यलीलारसोत्सुका । मया रामेण रमते क्षणविच्छेदकातरा ॥ ८८ ॥
साकेतकपुरद्वारसरयूकेलिकारिणी । कोटिगन्धर्वकन्याभिरालीभिर्भाति भामिनी ॥८९॥
इयमेव नदी विष्णोः परमप्रीतिदायिनी । भूमौ भाति सुषुम्नेति वैकुण्ठपददायिनी ॥
कृतावतारः श्रीरामो ह्यनया केलिभूतया । नेष्यत्ययोध्यामखिलामनायासेन मत्पदम् ॥
तत्र संतानकं नाम वनं दिव्यं मम प्रियम् । यत्र सीताभिधा लक्ष्मीर्वितनोति सदोत्सवम्
अन्तःपुरे तु देवस्य रामलीलानुसेविनः । दिव्याः पारिषदाः सन्ति सुग्रीवाद्या महाबलाः ॥ ९३ ॥
दिव्याम्बरधराः सौम्या दिव्याभरणभूषिताः । दिव्यगन्धानुलिप्ताङ्गा दिव्यमाल्यविभूषिताः ॥ ९४ ॥
यज्ञसूत्रगणोपेता लसन्मौलिकिरीटिनः । सिंहासने समासाना ललनायुतसेविताः ॥९५॥
गदेषुचापशैलाग्रतरुहस्ता व्यवस्थिताः । सुग्रीवराक्षसाधीशाङ्गदमारुतनन्दनाः ॥९६॥
पूर्वद्वारे तु सुग्रीवो दक्षिणे पवनात्मजः । पश्चिमे राक्षसाधीशो वालिपुत्रस्तथोत्तरे ॥
हनुमान्गरुडश्चोभौ निशामय वदामि तौ । गरुडो विनतायां च ह्याविर्भवति भूतले ॥
निशामय महाभाग गरुडं तत्त्वमुत्तमम् । अप्राकृतोऽयं पुरुषो नित्योऽप्राकृतदेहधृत् ॥९९॥
गरुडः पक्षिणामिन्द्रो वाहको बलिनां वरः । वासुदेवादिमूर्तिभ्यश्छन्दोमूर्तिरजायत ॥
चतुर्णामंशभूतोऽयं विहङ्गेशः सदातनुः । अंशेन विनतायां वै संभवोऽस्य युगे युगे ॥
तथा किंपुरुषोऽयं वै हनुमान्नामतो बली । महाशंभुरिति ख्यातो रामरूपमुपाश्रितः ॥
संकर्षणसमुद्भूतो महाशंभुश्च शाश्वतः । अंशो भगवतः साक्षाच्छुद्धसत्त्ववपुर्धरः ॥
श्रीराममन्त्रतत्त्वज्ञः श्रीरामानुचरो बली । नित्यो महाविभूतिस्थ ईशान्यां दिशि संस्थितः
मामनन्यतया ब्रह्मन्नुपास्ते प्रेमलम्पटः । महानन्दैकभुक्श्रीमान्महाशक्तिसमाश्रयः ॥
स एव शिवरूपेण शं तनोति चतुर्मुख । अनन्योपासनं लोके सात्त्विकं प्रतिपादयन् ॥
श्रीविष्णुपार्षदवरो विष्णुवेषधरोऽव्ययः । चतुर्भुजो महोत्साहो महादेवो महेश्वरः ॥
सचाऽऽत्मानं द्विधा कृत्वा प्राकृतेऽप्राकृते स्थितः । रुद्ररूपेण संजातो ब्रह्मणो भ्रुकुटीतटात् ॥ १०८ ॥
स चैकादशधाऽऽत्मानं व्यतनोद्भीमदर्शनः । रुद्रः कल्पान्तकर्ताऽय तामसस्तामसप्रियः॥
आज्ञया वासुदेवस्य महाशंभुर्हरिप्रियः । रौद्रं रूपं समास्थाय विश्वहा समपद्यत ॥

---

१ क. °काक्षमा°।

रुद्र एव पुनः प्रोक्तो विष्णुना प्रभविष्णुना। पाखण्डशास्त्रं व्यतनोन्मद्यमांसप्रशंसकम्॥
शैवं शाक्तं पाशुपतं डामरोड्डीनशाबरम्। नानादेवप्रधानं च मत्तो वै मुख्यकारणम्॥
भूयः शंभुर्हरेः प्रीत्यै वानरं रूपमुद्वहन्। रामलोके दक्षिणस्यां दिशि वीरो विराजते॥
काकुत्स्थो राघवो जातो रामो राजीवलोचनः। अञ्जनीगर्भसंभूत आञ्जनेयो बभूव सः॥
महाभागवतो वीरो हेलोल्लङ्घितवारिधिः। आजन्म ब्रह्मचारी च जानकीप्रीतिभाजनः॥
सीतादत्तमहाहारशोभितोरुमहाभुजः। श्रीरामवाहनः श्रीमान्प्रपन्नाकाङ्क्षितप्रदः॥
सत्यसंधो महासत्त्वो लङ्काप्रासादभञ्जनः। जानकीजीवनो जेता मौञ्जीयज्ञोपवीतवान्
वीराधिवीरदोर्दण्डखण्डितारातिमण्डलः। चीत्कारगर्भसंहारी हारी कौपीनधृच्छिखी॥
एवं स्वपार्षदैर्युक्तो नित्यमुक्तैर्विराजते। लक्ष्मीनारायणः साक्षाद्भक्तानुग्रहकाम्यया॥
साकेतपश्चिमे पार्श्वे गोलोकाख्ये मनोरमे। महाकल्पतरूद्याना मथुरेति पुरी मता॥
कोटियोजनविस्तीर्णा नित्योत्सवसमाकुला। वृन्दावनं गोकुलं च तत्पार्श्वे चतुरानन॥
ऊर्ध्वं तु सर्वलोकेभ्यो गोलोके प्रकृतेः परे। वाङ्मनोगोचरातीतं ज्योतीरूपं सनातनम्॥
नित्यं गुणमहोत्साहं नित्योत्सवगुणान्वितम्। सौभाग्यनिलयं कान्तमानन्दकरमन्दिरम्॥
नित्यानन्दमयं रम्यं गुणोत्पत्तिमहोदयम्। सर्वर्तुगुणसंयुक्तं प्रमदागणसेवितम्॥ १२४॥
पुण्यद्विजसमाघुष्टं जुष्टं च परमर्षिभिः। सरितां जलकल्लोलविलोलनलिनीकुलम्॥
तुलसीकुलसौभाग्यं नित्यान्तवनमोदितम्। वासन्तीचम्पकाशोकपारिजातमहोदयम्॥
मालतीयूथिकाम्भोजकुन्दमन्दारसेवितम्। केतकीमल्लिकाहासं कदम्बघनमण्डितम्॥
दिव्यरत्नसमाकीर्णं हरिवंशसुरक्षकम्। विमानावलिभिर्व्याप्तं नित्यक्रीडारसाश्रयम्॥
तत्र वृन्दावनं नाम युतं कामदुघैर्द्रुमैः। द्वात्रिंशद्वनराजीभिः परीतं रसनिर्झरम्॥१२९॥
तत्र रत्नमयी भूमिर्दिव्यकाञ्चनवेदिका। कर्पूरवालुकोपेतं पुलिनाच्छनदीवहम्॥ १३०॥
साकेतात्पश्चिमे तत्र पुरं माथुरसंज्ञितम्। योषिद्रत्नमणिस्तम्भप्रासादायुतसंयुतम्॥१३१
दिव्यचामरसंयुक्तं मुक्तादामविलम्बितम्। चन्द्रातपघनच्छायं हेमकुम्भपुरस्कृतम्॥
आबद्धबालद्युमणिद्युतिरश्मिवितानकम्। पताकातोरणैर्दिव्यैः सुधासारघनाचलम्॥
गोवर्धनगिरिज्योतिर्विद्योतितनभस्थलम्। शृङ्गोद्यतविमानाग्रमृदङ्गमधुरस्वरम्॥ १३४॥
यत्र गोवर्धनो नाम शैलः परमपावनः। निर्मितो गोपरूपेण केलये कलयाऽऽत्मनः॥
नीलवैदूर्यखचितोल्लसत्काञ्चनवेदिकः। तुङ्गशृङ्गाग्रविलसत्स्वच्छस्फटिककुट्टिमः॥ १३६॥
सर्वतोनिपतद्दिव्यसुधासीकरनिर्झरः। रत्नसंबद्धकासारफुल्लाम्भोजवनस्थलः॥ १३७॥
पारिजातततिव्याप्तः सुगन्धानिलसेवितः। दिव्यदेवाङ्गनागीतमुखरीकृतकन्दरः॥ १३८॥
गलत्कुसुममध्यस्थमधुसंताननिर्झरः। मिलिन्दललितोद्गीततिरोहितविपश्चिकः॥१३९॥
हंसकोकिलदात्यूहनिह्लादाह्लादकारकः। स्वच्छाङ्गणमणिव्रातबद्धशृङ्गाटकेषु च॥१४०॥
दिव्यचन्द्रकराक्षिप्तकोटिनक्षत्रवैभवः। लीलानिकेतसौधाग्रचन्द्रकोटिमरीचिभिः॥१४१॥
सुधाम्बुनिर्झरोद्भूतकासारविपुलोदरः। मन्दारकुञ्जकुहरविनिर्मितनिकेतनः॥ १४२॥
तुलसीकाननामोदविमोहितवधूजनः। श्रीकृष्णवदनाम्भोजस्मेरचन्द्रकशीतलः॥१४३॥

---

१ ख. °माजुष्टं°।

गोपिकाचरणाम्भोजनखचन्द्रचमत्कृतः । उत्पत्तिकाञ्चनीरम्यनृत्यमण्डलमण्डितः ॥
कोटिदिव्याङ्गनापूर्वकलकण्ठस्वरोद्गमः । केलिसत्ताङ्गणाबद्धमणिगर्तेषु सर्वतः ॥१४५॥
जलयन्त्रोच्छलद्वारिनिपातपरमोत्सवः । केलिनिर्मितनीलाभ्रवितानस्फुटचञ्चलः ॥
सुधाशीकरसंसिक्तचन्द्रकच्छोदभूतलः । शिलातलसमाविष्टमृगनाभिसुवासितः ॥१४७॥
सुन्दरीचरणारक्तकातुकोद्रेकसंयुतः । अधित्यकासु गोवृन्दसमपाङ्क्तिविराजितः ॥ १४८॥
हरिन्मणिमयूखाभदूर्वाकाण्डप्ररोहितः । कैवल्यवाहिनी यत्र कालिन्दी विमलोदका ॥
सुवर्णपङ्कजोद्भूतपरागपटपिञ्जरा । तटरत्नमयूखैश्च स्पृशन्ती गिरिकेतनम् ॥ १५० ॥
दीपैर्नीराजयन्तीव वीजयन्तीव चामरैः । तीरसारसनिह्रादैर्बोधयन्तीव गोपतिम्॥१५१॥
गोवर्धनशिखासन्नसंसुप्तवनमालिनम् । निर्गम्यगीतममलं समुत्थितजलोच्चया ॥ १५२ ॥
आदर्शमिव चाऽऽत्मानं दर्शयन्ती रमापतिम् । वेणुनादामृतोन्मत्तमयूरनटनोदया॥१५३॥
दर्शयन्तीव चाऽऽत्मानं प्रेमसंवर्तितोत्सवम् । तत्र रासस्थलं रम्यं कोटिचन्द्रसुशीतलम् ॥
यत्र वृन्दाभिधा शक्तिरास्ते श्रीकृष्णवल्लभा । प्रेमभक्तिसमाख्याता वृन्दा तल्लोकपालिका ॥ १५५ ॥
भक्तिमन्तोऽभिगच्छन्ति काननं कामितप्रदम् । एवं गोलोकसौभाग्यं वर्णितुं कः क्षमो जनः । यत्राहं प्रियया सार्कं रमे रसमयः सदा ॥ १५६ ॥

श्रीब्रह्मोवाच—

भगवन्नरविन्दाक्ष वैकुण्ठपुरमण्डन । गोलोकाख्यमिदं नाम नित्यलीलालयं स्मृतम् ॥
कस्माद्रूपं पृथक्कृत्य स्थितिमत्र जनार्दन । केन रूपेण भवता का लीलाऽत्र वदस्व मे ॥

श्रीभगवानुवाच—

वैकुण्ठाख्यं पर स्थानमुक्त यत्प्रकृतेः परम् । पञ्चोपनिषदालाढमवाङ्मनसगोचरम्॥१५९॥
कालक्रियातिरिक्तं तत्सर्वमानन्दमन्दिरम् । नित्यमुक्तजनैर्जुष्टं मत्कृपापाङ्गवीक्षितैः ॥
मल्लीलानुकृतं तत्र तारतम्यं तथाऽपि हि । लीलायास्तारतम्येन प्रीत्याऽतिशयितो मया ॥
गोलोकोऽयं मया क्लिष्टो रसलीलाबुभुत्सया । तत्तेऽहं संप्रवक्ष्यामि शृणु चैकमना विधे
सर्वावधितया स्थानमपारममलप्रभम् । महावैकुण्ठनिलयं यत्र श्रीरङ्गमन्दिरम् ॥ १६३ ॥
यतो नाऽऽवर्तते भूयो गन्तव्यं नास्ति तत्परम् । अन्येषां तत्र गन्तव्यमाश्रितानां ततो जगुः
ब्रह्मन्वैकुण्ठमध्ये च बाह्याभ्यन्तरभूतयः । विभवव्यूहलोकाश्च शुद्धसत्त्वैकरूपिताः ॥
एवं चाऽऽप्रकृतेर्लोकादा वकुण्ठनिकतनात् । अवान्तरविभागैश्च वैकुण्ठ इति चोच्यते ॥
विगतज्ञानवैकुण्ठशुद्धसत्त्वनिकेतनात् । आहुर्वैकुण्ठनिलयं साक्षाद्ब्रह्मैव पद्मज॥१६७॥
गोलोकाख्यस्य देशस्य प्रवृत्तिं प्रवदाम्यहम् । यतोऽस्य संस्थितिर्भिन्ना परव्योम्नि महामते
ज्ञानानन्दस्वरूपेयं शक्तिर्या परमा रमा । सा सूते द्वे महाशक्ती नित्ये मे[1] सुखदित्सया ॥
यद्यप्येते ममवाऽऽस्तां तथाऽप्येते[2] रमासुखे । रमालीलाविनोदार्थं तदधीनतया स्थिते ॥
तत्रैकाऽऽधारशक्तिर्हि लीलाख्या द्वितीया मता । प्राकृताप्राकृतं सर्वमुभाभ्यामेव रक्षितम् ॥ १७१ ॥

---

१ क. मे विशदाशया २ क. °ते परा: सुखे । परालीं° ।

प्रकृतिर्महदादीनां धारणात्सा धरा स्मृता। आकूर्मादखिलं विश्वं धत्ते साष्टद्वयरूपिणी
एवं मद्रोमकूपेषु यावन्त्यण्डानि पद्मज। तावन्त्येका ततो देवी शक्तिराधारलक्षणा ॥
धत्ते तेनैव रूपेण यथाऽहं पुरुषोत्तमः। कूर्ममण्डूकशेषादीनभिव्याप्य विराजते ॥
तस्योपरि पुनः सैव पद्मिनीपत्रवज्जले। आभाति धरणी देवी सशैलवनकानना॥१७५॥
सा मया क्रोडरूपेण विधृता दशनान्तरे। सा द्वितीयावतारेण धत्ते विश्वं रमाज्ञया ॥
गोरूपा साऽभवद्देवी यथा वृत्तिर्नृणामभूत्। देहादिधारणं पुंसां जायते येन सुव्रत ॥
एवं प्रज्ञां च मेधां च यजनं सत्त्वसंस्थितम्। क्षीरेण या वितनुते वृष्टिं पुष्टिं प्रजामृतम्॥
महोक्षरूपैः संतानैः प्रजानां कर्षणेन च। कृषिं प्रयच्छति ब्रह्मन्ययाऽन्नानि भवन्ति हि
अन्नं हि प्राणिनां प्राणो ह्यन्नाद्वीर्यं प्रजायते। वीर्यं प्रजननं तस्मादन्नं पृथ्वीं श्रुतिर्जगौ॥
एवं वृत्तिप्रदानेन प्रकृतिर्गुणयोगतः। प्रयच्छति त्वधः स्थानं संसाराख्यं सुदुस्तरम् ॥
एवं तया महादेव्या प्राकृतं सकलं जगत्। धृतं सर्वप्रकारेण जीवानां कर्मभुक्तये ॥१८२॥
तथैव कर्महीनानां नित्यमुक्तात्मनां मम। मच्छुद्धसत्त्वसंविष्टा धत्ते चाप्राकृतं जगत् ॥
आत्मनः पदमारभ्य ह्यनन्तं धाम मामकम्[१]। मितिहीनं ज्ञानरूपं सदाऽऽनन्दमहोत्सवम्॥
निरावरणकं शश्वत्कालातीतमगोचरम्। लक्ष्मीलीलास्पदं सर्वं मयैव विधृतं सदा ॥
लीलाविष्टहृदा देवी कदाचिज्जलजेक्षणा। धरया विधृतं दृष्ट्वा धरां दृष्ट्वा च पार्श्वगाम् ॥ १८६ ॥
सोल्लासवदनं दृष्ट्वा कान्तस्य मम कामिनी। मन्दं जहास रुचिरापाङ्गेन परमेश्वरी॥
नित्यमाक्रीडितं नृत्यगानमानरसोदयैः। आचकाङ्क्षे रमा देवी रमणेन यदृच्छया ॥
वैकुण्ठलीलाविच्छेदो दासानां यत्र संगमः। न भवेच्च पुनः स्वैरलीलाभङ्गो न जायते॥
कथं द्वयं भवेत्तत्र स्थलान्तरमभीप्सती। तदा विज्ञातसंकल्पो देव्या विश्वकृदीश्वरः॥
द्विधाऽकरवमात्मानं धरया च श्रिया सह। धरा गोलोकरूपेण गोपीरूपेण सा प्रिया॥
गोपरूपधरोऽहं वै गोविन्द इति विश्रुतः। गोवर्धनाभिधं रूपं द्वितीयं मे प्रकाशितम् ॥
धराऽपि द्विविधा जाता गोरूपा भूमिरूपिणी। गावस्त्वनन्ता अभवन्कामदोहा मनोरमाः ॥ १९४ ॥
दिशन्ति[२] मणिरत्नानि यद्यदिष्टतमं विधे। भक्ष्यभोज्यान्नपानादि क्षीरमत्यद्भुतं वसु ॥
यासां दुग्धादनेनैव कायक्लेशो न विद्यते। जरामृत्युभयोद्वेगतृष्णाद्या न भवन्ति हि॥
गोरूपेण धरा देवी गोवर्धनमुपाश्रिता। प्रवर्तयन्ती पयसा नदीमानन्दरूपिणीम्॥१९७॥
आस्वादयन्ति गोविन्दमुरलीनाद[३]सद्रसम्। क्षरन्ति[४] गाव आनन्दसंदोहं क्षीररूपतः ॥
श्रीकृष्णवदनाम्भोजदत्तलोचनपङ्कयः। गोवर्धनाद्रिकुञ्जेषु विचरन्ति सहस्रशः ॥१९९॥
तत्र नीलाम्बुदश्यामो बल्लवीवृन्दवेष्टितः। शिखिपिच्छकृतापीडो नटवेषधरो हरिः ॥
वन्यपुष्पधरो धेनुपालको नीलकुन्तलः। किशोरः केलिकलितः कदम्बतरुसंश्रयः ॥
चलच्चामीकराक्रान्तपीताम्बरविभूषितः। स्थूलमुक्ताफलोदारहारभूषितकंधरः॥ २०२ ॥

---

१ क. °म्। मति°। २ क. स्खलन्ति। ३ क. °दशाद्रसम्। ४ क. °न्ति तस्यैवाऽऽन°।

स्फुरत्कुण्डलरम्यास्यो हास्यमोहितमन्मथः । धम्मिल्लमल्लिकामोदविभ्रान्तकनकालयः ॥
अप्राकृतनिशानाथज्योत्स्नाधौतनिशामुखे । मन्दारमण्डले दिव्यरासभूवलये मुदा ॥
गीयमानो गुणावासो गोपिकापरिरम्भितः । संगीतनिरतो नित्यं लास्यभेदविशारदः ॥
तत्रैका परमा शक्तिर्गोपीरूपधरा रमा । आत्मानमष्टधा कृत्वा रेमे गोपतिना सह ॥
ललिताद्याश्च ताः सख्यः श्रीराधानुगता मताः । योगपीठे महास्थाने संस्थिताः स्वानुरूपतः ॥ २०७ ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे गोलोकवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३५१

---

अथ द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीब्रह्मोवाच—

देवदेवेश लक्ष्मीश गोलोकनिलये हरेः । गोविन्दाख्यस्य देवस्य योगपीठं वदस्व मे ॥
आत्मलीलाविनोदार्थं पृथक्कृत्य प्रकाशितम् । गोपरूपं च ते देव श्रुतं गोपिकया सह॥

श्रीभगवानुवाच—

ब्रह्मन्नलौकिकं ह्येतत्त्वया पृष्टं मम प्रियम् । योगिनामपि दुर्लक्ष्यं शान्तं मे परमं पदम् ॥
वृन्दावनविधानेन सोऽहमेव न चेतरत् । यमुनातीरसंशोभिकल्पमन्दारपादपैः ॥ ४ ॥
सहस्रपत्रकमलाकारं माथुरमण्डलम् । मयैवाऽऽविष्कृतं ब्रह्मन्धरया कलया मम ॥ ५ ॥
ममैवाऽऽकाङ्क्षितं स्थानं श्रुतिमृग्यं निरन्तरम् । योगिभिर्मुनिवृन्दैश्च सदा ध्यातं च मत्परैः ॥ ६ ॥
दिव्याप्सरोभिर्गन्धर्वैर्नृत्यगीतविभूषितम् । श्रीमद्वृन्दावनं रम्यं पूर्णानन्दरसाश्रयम् ॥
भूमिश्चिन्तामणिस्तोयममृतं रसपूरितम् । वृक्षाः सुरद्रुमास्तत्र सुरभीवृन्दमण्डितम्॥८॥
सदा किशोररूपैश्च तरुणीतरुणैर्युतम् । ममांशैर्नित्यपुरुषैर्लक्ष्म्यंशैः स्त्रीजनैर्वृतम् ॥ ९ ॥
मन्दानिलविनिर्धूतपद्मवेणुतमोमयम् । वसन्तर्तुकृतोद्रेकविहङ्गकलनिस्वनम् ॥ १० ॥
अशोकं दुःखरहितं जरामरणवर्जितम् । अक्रोधनममात्सर्यमभिन्नं निरहंकृतम् ॥ ११ ॥
गुणातीतं महद्धाम प्रेमभक्तिस्वरूपकम् । वृन्दया चावनं यस्मात्तस्माद्वृन्दावनं स्मृतम्
गुह्याद्गुह्यतमं गूढं गोलोके तत्प्रतिष्ठितम् । बाह्याभ्यन्तरभेदेन भूमावपि पितामह॥१३॥
सहस्रदलपद्मस्य ज्ञेयमेतद्वराटकम् । अक्षरं नित्यमानन्दस्वरूपं स्थानमुत्तमम् ॥ १४ ॥
शुद्धसत्त्वेन हरिणा प्रविश्योत्तम्भितं विधे । तत्र गोविन्दरूपेण स्वयं क्रीडति राधया ॥
एवं वृन्दावनं विद्धि गोवर्धनसमन्वितम् । तस्मिन्वृन्दावनारण्ये मध्ये मत्पीठमुत्तमम् ॥
सप्तावरणकं स्थानं श्रुतिमृग्यं निरन्तरम् । माणिक्यमण्डपं तत्र वितानध्वजमण्डितम् ॥
तन्मध्ये योगपीठे तु नानारत्नैर्विराजितम् । तदष्टकोणनिर्माणं दर्पणाभमनूपमम् ॥
सहस्रस्तम्भसंबद्धमणिकान्तप्ररोहकम् । मुक्ताच्छगुच्छविलसत्तोरणान्तातिसुन्दरम् ॥
तस्योपरिस्थमाणिक्यमुग्धसिंहासनं महत् । दलाष्टकं तु तत्रैव कर्णिकाकेशरोज्ज्वलम् ॥

गोविन्दस्य प्रियं स्थानं किमस्य महिमोच्यते। श्रीकृष्णचरणाम्भोजसुखसंस्पर्शनक्षमम्॥
तस्मिन्वीरासने ब्रह्मन्ध्येयं तेजोऽद्वयं परम्। गौरश्यामात्मकं नित्यं वेणुपङ्कजहस्तकम्॥
शिखिपिच्छकृतापीडं नीलपीतपटावृतम्। मन्दस्मेरोज्ज्वलमुखं लोलताटङ्ककुण्डलम्॥
कुञ्चितालकवक्त्राब्जं कस्तूरीकुङ्कुमान्वितम्। नासाग्रविलसन्मुक्तं केशपाशकृतोत्सवम्॥
संगोपितचतुर्बाहुं विकाशितचतुष्टयम्। अङ्गदाश्लिष्टवलयोद्दीप्तमम्लानमालकम्॥
दाडिमीबीजदशनं पक्वबिम्बफलाधरम्। काश्मीररञ्जितोरस्कं किङ्किणीनिनदोत्सुकम्॥
अंसार्पितभुजं चारुचरणालक्तकप्रभम्। अभिन्नरूपमद्वैततत्त्वमम्भोजलोचनम्॥ २७॥
ज्ञानानन्दैकनिलयमवाङ्मनसवैभवम्। प्रेमसंसक्तहृदयं प्रेमार्णवविनोदकम्॥ २८॥
प्रेमकल्पलताबीजं प्रेमपादपसत्फलम्। गौरं तु राधिकारूपं राध्यते पुरुषोऽनया॥ २९॥
सर्वावस्थासु देवेश श्रियो रूपान्तरं हि तत्। यथा च चन्द्रिका चन्द्रे प्रभा भानौ हुताशने॥ ३०॥
यथा मधुरिमा नीरे स्पर्शनं मारुते यथा। गन्धः पृथिव्यामनघो राधिकेयं तथा हरौ॥
आश्रयः पुरुषः पूर्णो गोविन्दो नित्ययौवनः। कर्णिकायां स्मरेदेतद्गोपिकाकृष्णयोर्द्वयम्॥ ३२॥
दलेषु ललिताद्याश्च शक्तयोऽष्टौ प्रकीर्तिताः। संमुखे ललिता देवी श्यामला पीतवाससा॥ ३३॥
उत्तरे श्रीमती ज्ञेया ईशाने श्रीहरिप्रिया। विशाखा च तथा पूर्वे शैब्या चाऽऽग्नेयके मता॥ ३४॥
पद्मा च दक्षिणे भद्रा नैर्ऋते परिकीर्तिता। तत्पार्श्वदलभूभागे पुनरष्टौ प्रकीर्तिताः॥
चन्द्रावली चन्द्ररेखा वृन्दा वदनसुन्दरी। श्रीप्रिया श्रीमधुमती शशिलेखा च कुञ्जरी॥
सुमुखा च क्रमाद्दिक्षु विदिक्षु च यथा तथा। षोडश प्रकृतिश्रेष्ठाः प्रधानाः कृष्णवल्लभाः
वृन्दावनेश्वरी राधा तथा चन्द्रावली प्रिया। अष्टौ तथा चतुःषष्टिगणो नित्यः प्रकीर्तितः॥ ३८॥
मुक्तानां ये गणाः प्रोक्तास्त्रिकोट्यः कमलोद्भव। आराधितः परानन्दो भगवान्गोकुलेश्वरः॥ ३९॥
श्रुतयः श्रीशपादाब्जरसपानपिपासया। सखीरूपत्वमापन्नाः साधनाभ्यासयोगतः॥
विहरन्ति सदा विष्णो रासलीलामहोत्सवे। एवं च देवकन्यानां गणोऽपि हि पितामह॥ ४१॥
तथैव मुनिकन्याश्च कोटिकोटिप्रमाणतः। सेवन्ते परमे लोके नित्यं निर्गुणसंज्ञके॥
कामिनीनां त्रिकोट्यस्तु नानाकर्मपरायणाः। गोविन्दरसनिर्भिन्ना गायन्त्यः प्रेमविह्वलाः॥ ४३॥
नानावैदग्ध्यनिपुणा दिव्यवेषाम्बरान्विताः। सौन्दर्याश्चर्यलावण्यकटाक्षातिमनोहराः॥
एकान्ताश्रितगोविन्दास्तदङ्गस्पर्शनोत्सुकाः। तदन्तरे च ह्यात्मानं कृत्वा नवनवाकृतिम्॥ ४५॥

वेणुना मोहयन्विश्वं हरिर्नृत्यति मण्डले । मन्दिरस्य ततो बाह्ये प्रियपारिषदावृते ॥
तत्समानवयोवेषाः समानबलपौरुषाः । समानरूपाभरणाः समानगुणकर्मिणः ॥ ४७ ॥
समानगुणसंगीतवेणुवादनतत्पराः । श्रीदामा च सुदामा च वसुदामाऽथ किङ्किणी ॥
विज्ञेयाः पूर्वतो ह्येते क्रमाद्द्वारचतुष्टये । स्तोककृष्णसुभद्राद्या गोपालाश्च तथाऽपरे॥४९॥
शृङ्गवेत्रविषाणाढ्याः सर्वे चारुचतुर्भुजाः । तत्पश्चात्सुरभीवृन्दं परमानन्दसंकुलम् ॥
क्षरत्पयोभिर्गोविन्दमनुसंसृत्य तिष्ठति । तद्बाह्ये फुल्लमन्दारो वेदिकाभिर्विराजते ॥
गोलोके रमते दिव्ये नित्यमेव हरिः स्वयम् । गोलोकं पट्टवस्त्रे वा मण्डले वा सुधामये॥
विलिख्य पूजयन्तो ये ते यान्ति परमं पदम् । वृक्षैर्वृन्दावनं कृत्वा शारद्यां निशि पद्मज ॥ ५३ ॥
अनुकुर्वन्ति ये लीलां ते यान्ति परमं पदम् । राधाकृष्णाभिधाङ्कं तु कारयेत्प्रतिमासु च
दम्पत्योर्वा परं भक्त्या सखीनां तु विशेषतः । रासलीलोत्सवं पश्येद्ध्यायेद्वा प्रेमसंप्लुतः
अन्ते गोलोकमायाति संत्यज्य प्राकृतां तनुम् । इत्येतद्विभवस्थानं व्यूहात्परतरं मतम् ॥
तस्मात्परं तु वैकुण्ठस्थानं नारायणस्य हि । अनन्तपारं तत्स्थानं यत्र श्रीरङ्गमन्दिरम् ॥
वेङ्कटाद्रिरिति ख्यातो यत्र नारायणात्मकः । गोविन्दात्तु ह्यधः स्थानं वासुदेवस्य पद्मज ॥ ५८ ॥
स्वर्णरत्नमयी भूमिर्दिव्यमाणिक्यवेदिका । रत्नसिंहासनं तत्र पादाष्टकविनिर्मितम् ॥
संस्थितो रमया साकं वासुदेवश्चतुर्भुजः । इन्द्रनीलमणिश्यामो नीलकुञ्चितकुन्तलः ॥
पद्मपत्रविशालाक्षः स्फुरन्मकरकुण्डलः । शङ्खचक्रगदापद्मवनमालाविराजितः ॥ ६१ ॥
श्रीवत्सकौस्तुभज्योतिर्विद्योतितभुजान्तरः । पीताम्बरधरः स्रग्वी तुलसीमालया वृतः ॥
वात्सल्यादिगुणोपेतः सच्चिदानन्दविग्रहः । रुक्मिणी सत्यभामा च शैब्या चैव सलक्षमणा ॥ ६३ ॥
मित्रविन्दा सुनन्दा च तथा जाम्बवती मता । सुशीला चाष्टमी ह्येता वासुदेवस्य शक्तयः ॥ ६४ ॥
वासुदेवादधो धातः संकर्षण उदाहृतः । शुद्धस्फटिकसंकाशो रक्ताम्बुजदलेक्षणः॥६५॥
नीलाम्बरधरः श्रीमानेककुण्डलमण्डितः । दिव्यगन्धविलिप्ताङ्गो मधुपानविघूर्णितः ॥
सहस्रफणमाणिक्यज्योत्स्नानीराजिताम्बरः । रेवतीसेवितपदो हलहस्तश्चतुर्भुजः॥ ६७ ॥
यमरुद्रमहाकालरूपधृग्हृदि संस्थितः । शेषोऽयं वासुदेवस्य ह्यनन्तोऽनन्तविक्रमः ॥
संहर्ता सर्वलोकानां स्वयं सर्वं करोति हि । संकर्षणो महाविष्णुर्विद्याबलसमन्वितः ॥
कालस्य सर्वभूतानां रुद्रस्य च यमस्य च । अन्तर्यामित्वमास्थाय जगत्संहरते प्रभुः ॥
स्वयं तु साक्षाद्देवस्य शय्याभूतोऽहिरूपधृक् । संकर्षणादधः साक्षात्प्राद्युम्नं मण्डलं मतम्
रत्या स्वर्णमये पीठे संस्थितो भगवन्मनाः । जगन्मोहनसौन्दर्यः किशोरोऽरुणलोचनः॥
दिव्यालंकारसंयुक्तो वशीकृतजगत्त्रयः । तव प्रजापतीनां च कालस्य च यमस्य च ॥
अन्तर्यामित्वमास्थाय प्रद्युम्नश्च करोति हि । अनिरुद्धस्ततोऽप्यर्वाग्दिव्यसिंहासने स्थितः

१ क. °याः सर्वे° । २ ख. °य्यारूपोऽहि° ।

ईश्वरः सर्व लोकानां शान्त्या देव्या समास्थितः। मनूनां पार्थिवानां च कालस्य च यमस्य च ॥ ७५ ॥
अन्तर्यामित्वमास्थाय स्थितिमातनुतेऽनुजः। एवं ब्रह्मन्हरेर्लीला शुद्धसत्त्वमयी स्थिता ॥
अप्राकृते परे व्योम्नि लोकाः सन्ति च भूयशः। वासुदेवादिमूर्तीनां व्यूहस्थानं प्रकीर्तितम् ॥ ७७ ।
मत्स्यादीनां तु मूर्तीनां विभवस्थानमुत्तमम्। भूमावपि चतुर्व्यूहाः सन्ति पङ्कजसंभव ॥
वैकुण्ठं परमो लोको विष्णुलोकस्त्वनुत्तमः। श्वेतद्वीपं सुरम्यं तु क्षीरसागर उत्तमः ॥
एवं चतुर्धा व्यूहस्तु मयैव प्रकटीकृतः। जलावरणमध्ये तु वैकुण्ठं प्रथमं स्मृतम् ॥ ८० ॥
कोटिवैश्वानरप्रख्यं परमं धाम चाव्ययम्। तस्मिन्देवमती नाम पुरं रम्यमनुत्तमम् ॥८१॥
चतुर्द्वारसमायुक्तं चण्डाद्यैरभिरक्षितम्। सहस्रयोजनोत्तुङ्गैः प्राकारैरुपशोभितम् ॥ ८२ ॥
समानरूपाः श्रीविष्णोर्यत्र सन्ति स्त्रियो जनाः। मन्त्राष्टाक्षरसंसिद्धा भक्त्या षोडशरूपया ॥ ८३ ॥
यान्ति तत्प्रथमं व्यूहं यद्गत्वा न निवर्तते। मोदन्ते विष्णुना साकं भक्तास्ते शाश्वतीः समाः ॥ ८४ ॥
पुनस्तेनैव यास्यन्ति तत्पदं प्रकृतेः परम्। ये याता वैष्णवे लोके भक्त्या ते न पतन्ति हि
ऊर्ध्वादूर्ध्वं प्रगच्छन्ति कर्मिणोऽधः प्रयान्ति हि। विष्णोरनुचरत्वं हि मुक्तिर्मे सद्गतिर्मता ॥ ८६ ॥
न कर्मबन्धनं जन्म वैष्णवानां च विद्यते। न दास्यं परमेशस्य बन्धनं परिकीर्तितम् ॥
सर्वबन्धविनिर्मुक्ता हरिदासा निरामयाः। यत्राहं रमया सार्धं सर्वलक्षणलक्षितः॥८८॥
वैष्णवोऽष्टाक्षरं जप्त्वा तत्र चैति न संशयः। तस्मिन्मणिमयस्तम्भे सहस्रार्कविवर्चसि ॥
विमाने शुशुभे दिव्ये संस्थितो भगवान्हरिः। तत्र चाऽऽधारशक्त्यादिधृते पीठे हिरण्मये ॥ ९० ॥
अष्टपत्राम्बुजे लक्ष्मीबीजाढ्ये कर्णिकालये। तत्र नारायणो देवो दक्षपार्श्वे रमापतेः॥९१॥
स्वर्णवर्णा द्रव्यपात्रमातुलुङ्गकराम्बुजा। वामतः पृथिवी देवी नीलोत्पलदलप्रभा ॥
नानालंकारसंयुक्ता विचित्राम्बरभूषिता। रक्तोत्पलं करद्वंद्वे धान्यपात्रं शुभं तथा ॥
दधानाऽधः कराब्जाभ्यां धरित्री विश्वसुन्दरी। दक्षाग्रे च समासीना सचामरकराम्बुजा
विमलाद्याः शक्तयश्च सर्वलक्षणशोभिताः। श्रीमदष्टाक्षरे मन्त्रे सिद्धानां वै मनीषिणाम्[1] ॥ ९५ ॥
गम्यः स वैष्णवो लोको नेतरेषां कथंचन। वैकुण्ठं प्रथमं व्यूहमिति ते प्रतिपादितम् ॥
द्वितीयं वैष्णवं व्यूहं शृणु वक्ष्यामि सुव्रत। योऽयं नित्य इति ख्यातो लोको वै वैष्णवः स्मृतः ॥ ९७ ॥
स लोको विमलः पुण्यः शुद्धसत्त्वमयः शुभः। मध्याह्नसूर्यसाहस्रयुगपद्भासितः सदा ॥
कल्पान्तेऽपि न लीयेत सत्यलोको महत्तरः। मणिबद्धमहास्वर्णप्राकारपरिशोभितः ॥

---

१ क, °म्। रम्यं तद्वैष्णवं लोकं ने°।

कल्पद्रुमलतामध्यसुधाकासारशोभितः । स्वर्णपङ्कजविप्लुष्टसरिद्भिः परिवेष्टितः॥१००॥
मुग्धसुन्दरीगीतविनादितदिगन्तरः । तन्मध्ये नगरी रम्या मणिप्राकारशोभिता ॥
टियोजनविस्तीर्णा द्वारका नाम नामतः । तन्मध्येऽन्तःपुरं रम्यं वासुदेवस्य शोभितम् ॥ १०२ ॥
च समायुक्तं हेमप्राकारशोभितम् । तन्मध्ये कल्पवृक्षस्य च्छायायां परमासने ॥
विचित्रश्रेष्ठपर्यङ्के शुभास्तरणसंवृते । तस्मिन्मनोरमे दिव्ये समासीनः श्रिया सह ॥
ईश्वर्या सह देवेशो वासुदेवः सनातनः । पाञ्चजन्यरथाङ्गाभ्यां बाहुयुग्मविराजितः ॥
इतराभ्यां श्रियो गात्रमाश्लिष्यातिविराजते । अत्राष्ट शक्तयो मुख्यास्तनवः परितः स्थिताः १०६ ॥
रमा च रुक्मिणी सत्यभामा पद्मालया शिवा । सुलक्षणा सुशीला च रतिकामप्रदा तथा
आयुधैः परितो रक्ष्यं द्वितीयं व्यूहमब्जज । द्वादशाक्षरमन्त्रं हि ये जपन्ति निरन्तरम् ॥
ते प्राप्नुवन्ति सततं शाश्वतं पदमव्ययम् । न वेदयज्ञाध्ययनैर्न व्रतैश्चोपवासकैः॥ १०९ ॥
प्राप्यते वैष्णवो लोको विना दास्येन कुत्रचित् । अथ तृतीयं व्यूहं च श्वेतद्वीपमितीर्यते
सनकानां तु महतां दर्शनायाऽऽत्मवैभवम् । सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
सनत्कुमारो जानुश्च वोढुः पञ्चशिखस्तथा । सप्तैते ब्रह्मणः पुत्रा योगिनः सुमहौजसः ॥
विरक्ताः सर्वभोगेषु शुद्धसत्त्वगुणाः सदा । भगवद्दर्शनोद्भूतसुखैकरससेविनः ॥ ११३ ॥
महाभागवता विष्णोर्दास्यवर्त्मनि संस्थिताः । नरनारायणाद्याश्च श्वेतद्वीपे वसन्ति ते ॥
तेषां संदर्शनार्थाय तत्र संनिहितो हरिः । सुधांशुकोटिसंकाशे नानावर्णमहोज्ज्वले ॥
श्वेतद्वीपे महायोगिसेविते हेयवर्जिते । तन्मध्ये नगरी रम्या नाम्ना चैरावती शुभा ॥
नानारत्नमयैर्दिव्यैर्विमानैरुपशोभिता । दिव्यस्त्रीपुंभिराक्रान्ता बहुप्रासादसंकुला ॥
उद्यानानि विचित्राणि यत्र सन्ति सुरद्रुमैः । तन्मध्येऽन्तःपुरं रम्यं तन्मध्ये मणिमण्डपम् ॥ ११८ ॥
सिंहासनं च तन्मध्ये सूर्यवैश्वानरप्रभम् । तन्मध्येऽष्टदलं पद्मं चन्द्रबिम्बमिवापरम् ॥
तन्मध्ये कर्णिकायां तु समासीनो जनार्दनः । शुद्धजाम्बूनदप्रख्यो मुक्ताहारविभूषितः ॥
शङ्खचक्रगदापद्मशक्तिहस्तचतुष्टयः । हारकेयूरकटकैरङ्गुलीयैश्च भूषितः ॥ १२१ ॥
सुवर्णपङ्कजप्रख्यपद्मयुग्मविराजितः । षोडशाब्दवयोरूपयौवनेन विराजितः ॥ १२२ ॥
विशालभालदेशे तु कुङ्कुमेन सुगन्धिना । रचितेनोर्ध्वपुण्ड्रेण सीमन्तेनापि शोभितः ॥
मथितामृतफेनाभशुक्लवस्त्रेण वेष्टितः । मुक्तामयाभ्यां शुक्लाभ्यां कुण्डलाभ्यां विराजितः
पद्मासनसमासीनो जगन्मोहनविग्रहः । वामाङ्कसंस्था भूर्देवी तस्य देवस्वरूपिणी ॥
दक्षिणे श्रीश्च तस्यैव सदृशी गुणभूषिता । वसुपात्रं मातुलिङ्गं दर्पणं हेमपङ्कजम् ॥
दोर्भिश्चतुर्भिर्बिभ्राणा तथाऽत्मा(न्या)भिः समावृता । ईशा वाच्या महादेवी जाह्नवी कमलालया ॥ १२७ ॥
सावित्री सर्वगा पद्मा शक्तयः परिकीर्तिताः । श्रद्धा मेधा धृतिः प्रज्ञा धारणा शान्तिरेव च ॥ १२८ ॥

१ ख. महतां सनकादीनामात्मवैभवदृष्टये । सन° । २ ख. °ल्फाल° । ३ ख. °तुलुङ्गं° ।

श्रुतिः स्मृतिर्मतिर्धन्या वृद्धिर्वृष्टिर्मनीषिणी। दास्यस्त्वेताः श्रियः प्रोक्ताः सर्वकैङ्कर्यकारिकाः॥ १२९॥
अनन्तवैनतेयादिदेवता नित्यकिंकराः। साध्या मरुद्गणाश्चात्र वसन्ते नित्यदेवताः॥
ये विष्णुमन्त्रजप्तारः सततं श्रद्धयाऽन्विताः। ये द्वादशीव्रते युक्तास्तत्पदं यान्ति तेऽव्ययम्॥ १३१॥
विष्णोः षडक्षरं मन्त्रं प्रणवाद्यं तु ये जनाः। जपन्ति कृतसंस्कारा हेतिभिर्गुरुणा तनौ॥
तेषां मदेकचित्तानां मामकं पदमुत्तमम्। विष्णुलोकेति विख्यातं नान्यसाधनकोटिभिः॥
न वेदैर्नच दानैश्च न यज्ञैर्न व्रतैस्तथा। प्राप्तुं न शक्यते लोके विना विष्णुप्रसादतः॥
भक्त्या चानन्यया प्राप्तुं शक्यं विष्णुपदं नृणाम्। तस्मात्संपूजयेन्नित्यं भक्त्या देवं जनार्दनम्॥ १३५॥
चतुर्थं त्वपरं व्यूहमवधारय पद्मज। दिवौकसां च रक्षार्थं दुग्धाब्धौ परमेश्वरः॥१३६॥
सुधांशुकोटिसंकाशे सहस्राक्षेण शोभितः। पुरंदरैः सयूथैस्तु च्छादिते दुग्धवारिधौ॥
तस्मिन्ननन्तपर्यङ्के शेते[ऽसौ] विस्तृतोच्छ्रिते। दिव्यासनसमासीनः पद्मनाभोऽच्युतो हरिः॥ १३८॥
नीलजीमूतसंकाशः पद्मपत्रायतेक्षणः। विवस्वत्कोटिसंकाशकिरीटेन विराजितः॥
नानावर्णोज्ज्वलद्दिव्यकुण्डलाभ्यां विराजितः। बालार्कसदृशज्योत्स्ना(तिः) पीतवस्त्रेण वेष्टितः॥ १४०॥
शङ्खचक्रगदाशार्ङ्गखड्गहस्तैर्विभूषितः। दिव्यभूषायुधाक्रीडयानपारिषदैर्वृतः॥ १४१॥
सदृशी तस्य देवी तु रूपशीलगुणादिभिः। तप्तकाञ्चनसंकाशा तप्तकाञ्चनभूषणा॥
शुक्लाम्बरधरा शुभ्रकुसुमाञ्चितशीर्षजा। कस्तुरीतिलकोपेता रत्नसीमन्तशोभिता॥
बिभ्रती चोर्ध्वबाहुभ्यां हेमपद्मयुगं शुभम्। इतराभ्यां समाश्लिष्य भर्तारं निबिडं सदा॥ १४४॥
आलोकयन्ती सततं त्रिदशान्स्वकटाक्षकैः। संगीतानन्दनपरैः सिद्धचारणकिंनरैः॥
दैतेयैर्बाध्यमानैस्तु ब्रह्मरुद्रादिदैवतैः। संस्तूयमानस्तत्रेशो देवानामभयं ददौ॥ १४६॥
देवानामभयं दत्त्वा सर्वदेवेश्वरो हरिः। निहन्ति राक्षसान्दुष्टान्क्षीराब्धिकृतकेतनः॥
अधऊर्ध्वं विभागेन व्यूहाष्टकमुदीरितम्। नवमं तत्र गोलोको यत्र पुर्योऽप्यनेकशः॥
महद्भूतं ततश्चोर्ध्वमनन्तमविकल्पितम्। निःसीमममलं धाम वाङ्मनोगोचरं परम्॥
मुक्तिस्थानं ब्रह्मपदं स्थानातीतं च निर्मलम्। मूलं संसारवृक्षस्य कारणं मन्निकेतनम्॥
मामेकं शरणं प्राप्ता मदनुध्यानमास्थिताः। मामेव प्राप्नुवन्तीति नाऽऽवर्तन्ते पुनश्च ते॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपाद ऊर्ध्वलोकवर्णनं नाम
द्वितीयोऽध्यायः॥ २॥

आदितः श्लोकानां समष्टयङ्काः—॥ २५०२॥

---

१ ख. भूषिणी°।

अथ तृतीयोऽध्यायः ।

श्रीनारायण उवाच—

ब्रह्मन्नूर्ध्वं निवासस्य सन्ति स्थानानि भूयशः । तान्यहं तेऽभिधास्यामि यदि ते श्रवणे स्पृहा ॥ १ ॥
शुभाशुभलतोद्भूतसुखदुःखफलानि वै । भुञ्जानो यदा याति ह्यवशः स्वरधस्तथा ॥
श्रीमन्नारायणस्यैव प्रसादो जायते यदा । निर्हेतुकदयालभ्य आचार्यं संश्रयेत्तदा ॥ ३ ॥
आचार्याल्लब्धसंस्कारो दासत्वमवलम्ब्य च । कैंकर्यतत्परो ब्रह्मन्दैहिकैर्नोपलिप्यते ॥४॥
राजभृत्यो यथा लोके राजार्थेऽप्यशुभं वहन् । नैदोपालभ्यते तद्वदेकान्ती मत्परो मुनिः
मयि चाऽऽधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ६ ॥
ज्ञात्वाऽऽत्मलोकममलं नित्यमक्षरमव्ययम् । निर्विकारमनौपम्यमानन्दज्ञानसंश्रयम्॥ ७ ॥
आत्मानन्दरसास्वादनिवृत्ताशेषलालसः । त्यजेज्ज्वलनवत्सर्वमात्मेतरमिदं जगत् ॥ ८ ॥
देहादहंकृतिं हित्वा ममत्वमितरेषु च । केवलं ब्रह्मभावत्वमात्मनो ह्यनुभावयन् ॥ ९ ॥
ब्रह्माहमिति यो ब्रूयाद्ब्रह्माभ्येति विचक्षणः । देहोऽहमिति भावेन यथा मायामुपैति हि
इयमण्डात्मिका माया सप्तावरणसंयुता । कार्यरूपा समभ्येति देहेऽहंकारिणं नरम् ॥
देहाहंकारनिर्मुक्तं ब्रह्मशेषत्वभाविनम् । ब्रह्माभ्येति परं साक्षाद्धेयवस्तुविवर्जितम्॥१२॥
प्रधानात्परतः साक्षाद्ब्रह्मैवानेकरूपतः । तदाऽभ्येति नरो ब्रूते तवाहमिति यो मयि ॥
प्राप्यं भोग्यं परं ब्रह्म येषामात्मा च पद्मज । ब्रह्मविद्ब्रह्म भवति ब्रह्मभुग्ब्रह्मणोऽच्युतः॥
अतो देहात्परः स्वात्मा देहभूतः परात्मनः ।तमात्मानमनुध्याय विमुक्तो जायतेऽब्जज॥
विजित्य प्राणमक्षाणि प्राणायामेन साधकः । आत्मस्थमात्मपुरुषमादेहान्तमनुस्मरन् ॥
अन्ते विष्णुमनुव्रज्य सुषुम्नावर्त्मना यतिः । शिरःकपालं संभित्त्वा(द्य) मामेति परमं पदम् ॥ १७॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा ह्युत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ १८ ॥
ब्रह्मन्मद्भक्तियुक्तो यद्यन्तकालेऽर्चिषा व्रजेत् । उत्सवो जायते भूयानूर्ध्वलोकनिवासिनाम् ॥ १९ ॥
आयास्यति हरेर्दास इह मार्गवशादिति । मन्दिराजिरसौधाग्रसंस्कारो जायते भृशम् ॥
सौधाग्रेषु वितन्यन्ते पताका भानुभास्वराः । विस्तार्यन्ते वितानानि हैमानि परितो दिशः
आस्तीर्यन्ते विता(मा)नेषु सभासु भवनेषु च । कोमलानेकवर्णाढ्यमहार्हास्तरणानि च
निर्याति जालरन्ध्रेषु मुक्तादामविलम्बिषु । कृष्णागरुमहामेदधूमधारा सरिद्वरा ॥ २३ ॥
उत्तुङ्गरत्नखचितवेदिकामणिमण्डपे । सिंहासनोज्ज्वलच्चारुचामराणि लसन्ति हि॥२४॥
चन्दनागरुकस्तूरीजलैरानन्दवर्धिभिः । सिच्यन्ते राजसद्मानि हरिदासानुतुष्टये ॥ २५॥

---

१ ख. °जवर्त्मानि° ।

मृदङ्गवीणापणवभेर्यानकवरूथशः । वाद्यन्ते कुसुमासारा निपात्यन्ते महीतले ॥ २६ ॥
ना( रा )गनृत्यस्तवोद्गारकरणाय सहस्रशः । तिष्ठन्ति सो( चो )त्सुका ब्रह्मन्गन्धर्वाप्स-रसोऽनुगाः ॥२७॥
एवमूर्ध्वप्रदेशेषु सर्वतो राजवर्त्मसु । ऊर्ध्वं गच्छत्सु भक्तेषु चोत्सवः संप्रवर्तते ॥ २८ ॥
वैकुण्ठनाथसदने नित्यमुक्तजनार्चिते । पुत्रोत्सव इव ब्रह्मन्निःसीमः संप्रवर्तते ॥ २९ ॥
सुदर्शनः शङ्खवर्णस्तथा ज्ञाननिकेतनः । प्रियंकर इति ख्याताश्चत्वारो विष्णुपार्षदाः ॥
आयान्ति प्रभुणाऽऽज्ञप्ता नेतुमेकान्तिनं जनम् । शिथिलावयवैर्युक्तो यत्र भागवतः स्थितः ॥ ३१ ॥
सुहृद्वद्दर्शनं दत्त्वा प्रतोष्यामृतजल्पनैः । वियोज्य बाह्यकरणैरन्तः संयोज्य वृत्तिभिः ॥
कृत्वाऽन्तःप्राणसंयुक्तं प्राणांक्षिति नियोज्य च । चैतन्यं भूतसूक्ष्मस्थं नयन्त्यूर्ध्वं हरिप्रियाः ॥ ३३ ॥
हृत्पद्मासनतो नीत्वा सुषुम्नायां निवेश्य तैः । गन्तव्यदेशान्संस्मृत्य नीतो जीवो हरि-प्रियैः ॥ ३४ ॥
वासुदेवतरुच्छायां विश्रमाय विचिन्त्य च । पाथेयं भगवन्नाम पुण्डरीकाक्षसंज्ञितम् ॥
मन्त्रद्वयं च पाथेयं श्रीरङ्गं च सहायकम् । विश्रामदेशं विरजं तिलवृक्षं तथैव हि ॥
लक्ष्मीपद्मसरश्चैव ह्याकाशं रत्नमण्डलम् । विचिन्त्य चेतसा धीरो देवयानाय चोद्यतः ॥
विद्याभ्यासबलेनैवं भित्त्वा ब्रह्माण्डमण्डपम् । तत्संबन्ध्यर्करश्मीनां सह योगमुपेत्य च ॥
प्रणवं रथमारुह्य बुद्धिसारथिना धृतम् । मनःप्रग्रहवान्धीरो याति विष्णोः परं पदम् ॥
नाड्यां सूर्यमतीत्याथ चन्द्रं भित्त्वाऽमृतात्मकम् । तेनैव सत्कृतो भूत्वा स्थूलदेहं विहाय च ॥ ४० ॥
सूक्ष्मं शरीरमालम्ब्य गमनाय समुद्यतम् । नयन्ति स्वस्वसीमान्तमर्चिरादिमुखाः सुराः ॥
अर्चिर्दिनं शुक्लपक्षः षण्मासाश्चोत्तरायणम् । संवत्सरोऽथ वायुश्च भास्करश्चन्द्रविद्युतौ ॥
वरुणेन्द्रप्रजाधीशा एते मार्गाधिदेवताः । नयन्ति स्वस्वसीमान्तं सत्कृत्य भगवत्प्रियम् ॥
नानोत्सवाननुभवन्सुकृतिप्रत्युपस्थितम् । स्वस्य चाव्याहतैश्वर्यमाकलय्य प्रसादजम् ॥
धन्योऽयं दासभावोऽस्ति येन दासीकृता इमे । मदाज्ञामनुवर्तन्ते ब्रह्मेन्द्रादिपुरःसराः ॥
एवं भोगान्क्रमप्राप्तान्भुञ्जानोऽयं यदृच्छया । भगवच्चरणाम्भोजरसाचिन्तनतत्परः ॥४६॥
ब्रह्माण्डभित्तिमभ्येति पृथ्वीतत्त्वं कृतावृतिम् । पृथिव्यादिमहातत्त्वान्याविध्य पुरुषैर्युतः
निर्याति तेन मार्गेण ब्रह्मन्मार्गान्तरं विना । मुक्तिद्वारमिदं ह्येकं विद्धि पद्मसमुद्भव ॥
तदूर्ध्वगमने काले त्रयः सन्ति पयोधयः । तानुल्लङ्घ्य प्रयातस्य पुण्यतीर्थेति नामतः ॥
नद्यः समुपतिष्ठन्ति तदूर्ध्वगमने पुनः । एको मोक्षपदं नाम मार्गस्तिष्ठति पद्मज ॥
पुण्यवृक्षसमाकीर्णो ह्याश्रमो मुक्तिसंनिभः । भोग्यं मनोहरं यत्र देवानामपि दुर्लभम् ॥
अयं तु पूर्वमार्गेभ्यः स्थितः शतगुणाधिकः । तमुल्लङ्घ्य स्थितश्चान्यः कोटियोजन-वान्परः ॥ ५२ ॥

---

१ ख. चेतनं भू॰। २ ख. संस्मार्य नी॰। ३ ख. ॰तो याति स्थू॰।

तं भुक्त्वा पुनरभ्येति भगवत्कीर्तनध्वनिः । निःसीमानन्दमासाद्य तस्मिन्नाश्रममण्डले ॥
तं पिबन्नेव संयाति योजनानि ह्यनेकशः । ततस्तु विष्णुलोकोऽस्ति पूर्वोक्तात्सर्वलोकतः ॥ ५४ ॥
सहस्रगुणितो भूत्वा स्थितोऽयं परमाद्भुतः । अत्युन्नतो महोत्साहो महाश्चर्योऽतिशोभितः ॥ ५५ ॥
यत्र रत्नोज्ज्वला भूमिर्माणिक्यस्तम्भसंचिता । हेमप्रासादविभवो निःसीमसुखसंगतः ॥
वनैरुपवनैश्चैव कासारैः स्वर्णपङ्कजैः । भ्रमद्भ्रमरझंकारमधुरैर्नित्यरूपधृत् ॥ ५७ ॥
चतुर्द्वारसमायुक्तो द्वारनामानि वै शृणु । आत्मप्रकृतिकैवल्यधर्मनामानि पद्मज ॥ ५८ ॥
समष्ट्यन्तानि जानीहि तत्र तानि हरिप्रियः । स्थितिं प्राप्नोति सुचिरं प्रकृत्यावरणं त्विदम् ॥ ५९ ॥
प्रकृतेर्विजयं कृत्वा स्थितिस्त्वत्र पितामह । मत्प्रसादाद्बहिश्चाण्डादलिप्तः प्रकृतावपि ॥
अयं तु विष्णुलोको हि प्रधानाधिपतेर्मम । प्रधानमत्र विज्ञेयं मूलसंज्ञं महामते ॥ ६१ ॥
उल्लङ्घ्य मूलप्रकृतिमर्चिरादिमहापथि । कोटित्रये योजनानां गते सति चतुर्मुख ॥
विरजातीरमभ्येति विश्वदुःखमनुस्मरन् । अगत्वा शरणं विष्णुं कोटिजन्मन्युपार्जितम् ॥
यमयातनयोद्भूतमद्भूतं विषमुच्यते । प्रशमाय महाभाग विरजातीरमाश्रितः ॥ ६४ ॥
प्रधानपरमव्योम्नोरन्तरे विरजा नदी । उन्मुच्य वासनारेणूनूर्ध्वं गच्छति मत्परः ॥ ६५ ॥
तत्र सूक्ष्मतनुं त्यक्त्वा वासनारेणुगुम्फिताम् । यो वै भवति देवेश मत्पदारोहणाय हि ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे ऊर्ध्वलोकवर्णनेऽर्चिरादिकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ २५६८ ॥

---

अथ तृतीयपादे चतुर्थोऽध्यायः ।

---

श्रीभगवानुवाच—

उत्तीर्य विरजां ब्रह्मन्रजो निर्धूय वैष्णवः । स्नानेन वै सुमतिमानश्वत्थमुपयाति हि ॥
तत्राश्वत्थतरुच्छायामाश्रिता ये ह्यमानवाः । तेषां पाणितलैः स्पृष्टः क्षालिताशेषवासनः ॥ २ ॥
सूक्ष्मदेहं परित्यज्य सूर्यकोटिसमप्रभम् । शरीरं दिव्यमासाद्य भाति चारुचतुर्भुजम् ॥३॥
शङ्खचक्रगदापद्मदिव्यायुधविराजितम् । पीताम्बरं घनश्यामं स्फुरन्मकरकुण्डलम् ॥ ४ ॥
गर्भजन्मजरानाशवर्जितं देहमुद्वहन् । अतीव मानरोषादिक्षुत्पिपासादिविग्रहः ॥ ५ ॥
रागद्वेषादिकं चैवमहंताममते तथा । अनादिविषयास्वादवासनाभिरुचिं तथा ॥ ६ ॥
भयं च सकलं हित्वा लावण्यादिगुणान्वितः । दिव्ययौवनमाधुर्यकल्याणादिगुणान्वितः॥
शुद्धसत्त्वात्मको भूत्वा भगवत्पार्षदोत्तमः । अमानवान्नमस्कृत्य तथा कृत्वा प्रदक्षिणम् ॥ ८ ॥
तेषामनुज्ञया ब्रह्मंस्ततो याति समाहितः । गत्वा योजनलक्षं तदूर्ध्वमायाति पादपः॥९॥

महार्जुनेति विख्यातो विद्धि षष्टिशतानि च । विस्तारोऽस्य महाभाग ह्युन्नतो लक्षयोजनम् ॥ १० ॥
तन्मूले पुरुषो नीलमेघशोभश्चतुर्भुजः । तं दृष्ट्वा पुण्डरीकाक्षं प्रणिपत्य शुभावहम् ॥
दिव्यान्वै पुरुषानन्यान्भक्त्या दृष्ट्वा स्वमानवान् । तेषामाज्ञामुपादाय पञ्चाशद्योजनानि तु ॥ १२ ॥
याति तत्र नदीमेकां शतयोजनविस्तृताम् । अप्राकृतजलां दिव्यां स्नानमात्रेण चेतसि ॥
ज्ञानमुत्पद्यते ब्रह्मन्नैक्यात्मकमधोक्षजे । तत्तीरे मूर्तिमानेकः पुरुषो निजतेजसा ॥ १४ ॥
ज्ञानमुद्बोधयन्नास्ते तं दृष्ट्वा शतयोजनम् । याति मार्गं ततस्त्वेकलक्षविंशति वा पुनः ॥
योजनानां च विस्तारे लक्ष्मीपद्मसरःस्थितः । तत्तीरे तिलवृक्षोऽस्ति लक्षयोजनमुन्नतः ॥
पञ्चाशद्योजनायामो मद्विभूतितया स्थितः । तत्संबन्धात्प्रसिद्धेयं तिलपुष्करिणी पुनः ॥
तस्यास्तीरं समासाद्य स्नात्वा तत्र विशेषतः । सुखरूपो हि भवति निरविद्यतया स्थितः ॥ १८ ॥
तच्छायामाश्रितस्याऽऽशु वैकुण्ठपरिचारिकाः । नेतुमायान्ति बहुशो दिव्याभरणभूषिताः ॥ १९ ॥
दिव्याः स्त्रियो रत्नदण्डचामरोज्ज्वलपाणयः । शतशो रत्नदण्डोद्यदातपत्रलसत्कराः ॥
नर्तक्यः शतशस्तत्र गायका वादकास्तथा । दीपकालंकृतारामा माल्यगन्धानुलेपनाः ॥
शतं मालाकरा नार्यो वासोहस्ताः शतं तथा । चूर्णाञ्जनादर्शकरा युवत्यः शतशोऽन्वगुः[1]
स्तुवत्योऽग्रे प्रनृत्यन्त्यो नमन्त्यः शतशोऽबलाः । गृहीत्वा सर्वसंभारान्हेमकुम्भपुरस्कृतान् ॥ २३ ॥
श्रीचूर्णलाजपुष्पाणि दिव्यवाद्यान्यनेकशः । घण्टादुंदुभिनिर्ह्रादैः पूरयन्तो दिशो दश ॥
ध्वजैः पताकापटलैश्छादयन्त्यो दिवाकरम् । त्रयोदश सहस्राणि रूपयौवनमण्डिताः ॥
विकिरन्ति कराम्भोजैः सुमनांसि मुदान्विताः । सहस्रसामनिनदं कुर्वत्यो दिव्ययोषितः ॥
प्रबन्धान्निर्जगुः स्वामिकीर्तिकर्पूरशालिनः । आगतास्तत्र पुरुषा दिव्यरूपधराः सुराः ॥
रम्या दशसहस्राणि विमानमुपनीय च । मुक्तादामलसद्द्वारं किङ्किणीरावरञ्जितम् ॥
स्फुरत्पताकमूर्धन्यं माणिक्यस्तम्भमण्डितम् । दिव्यास्तरणसंपन्नं संगीतध्वनिमोदितम् ॥
छत्रचामरसंचारचारुसिंहासनोज्ज्वलम् । आगतो हरिणा दृष्टो गरुडो भगवत्प्रियः ॥
संवेष्टितो विमानानां सहस्रैर्भानुभास्वरैः । प्रेषिताः परमप्रीत्या मूलाचरणशक्तयः ॥
महादेव्या महालक्ष्म्या श्रियश्चोत्पलगन्धयः । तिलपुष्करिणीतीरे स्थितं वृक्षसमाश्रयम् ॥
मुक्तात्मानं महात्मानं प्रवासादागतं पुनः । तापत्रयमहाज्वालासंतप्तं कोटिजन्मभिः ॥
जनन्य इव तास्त्वेनमारोग्यस्नानमादधुः । तमभ्यषिञ्चन्वस्त्राणि दिव्यानि प्रददुः पुनः ॥
लिम्पन्त्यङ्गं सुरभिणा गन्धेन प्रमदोत्तमाः । विभूष्यालंक्रियाभिस्तं माल्यैराकीर्य सर्वतः ॥
दासपट्टाभिषेकं ताः संचक्रुः कृतमङ्गलाः । नीराजयन्त्यः कर्पूरवर्तिभिर्जयनिस्वनैः ॥

---

१ ख. °न्वयुः स्तु° ।

पुष्करो(ष्पको)परि संस्थाप्य कृत्वा वाद्यध्वनिं मुहुः । कृतानि चोज्जगुश्चास्य प्रबन्धैः शृणु तानि हि ॥ ३७ ॥
धन्योऽयमत्यजत्स्नेहमनात्मनि विगर्हिते । ममत्वं वनितापुत्रधनोपकरणेषु च ॥ ३८ ॥
मायामात्रमिदं ज्ञात्वा गन्धर्वनगरोपमम् । अतिदुस्त्यजमेतस्मिँल्लोके विषयसेवनम् ॥३९॥
तृणीकृत्य हरौ स्नेहमपूर्वं संप्रवर्तयन् । सुलभो वायुसंरोधः सुलभं वह्निवर्तनम् ॥ ४० ॥
समुद्रतरणं स्वल्पं नेन्द्रियाणां विनिर्जयः । आत्मानं भगवच्छेषं दासं मत्वा गतैषणः ॥
कैंकर्यवृत्तिं संसाध्य समायाति हरेः पदम् । न कामणां गतिश्चैषा योगिनां न्यासिनां तथा ॥ ४२ ॥
किंकराणां गतिश्चैषा परमैकान्तिनां मता । भित्त्वा चाण्डमतीत्यासा प्रधानं मूलकारणम्
शूरोऽयमकरोदाशु चाऽऽत्मानमतिथिं हरेः । एवं स्तुतिं समाकर्ण्य भगवत्पार्षदैः कृताम्
वैकुण्ठद्वारसामीप्यं गतवान्प्रेमसंप्लुतः । अपश्यद्धेमसंबद्धगोपुराणि च पङ्क्तिशः ॥ ४५ ॥
विलसद्रत्नसोपानपङ्क्तिप्राकारवैभवान् । स्फूर्जत्सौधाग्रसंबद्धपताकाचैलनर्तकान् ॥४६॥
रणद्घण्टारवाकीर्णसुधाद्योतिगृहोल्लसत् । आगच्छाऽऽगच्छ भद्रं ते ब्रुवतः करसंज्ञया ॥
अपश्यद्यष्टिकासूच्चैः पञ्जरस्थविहंगमान् । प्रविश्य तत्पुरद्वारं मणिवेद्युल्लसत्प्रभम् ॥४८॥
वैकुण्ठनगरायेति नमस्कृत्य स्थितोऽभवत् । मुडिमुण्डादिविख्याताङ्भीदिव्यपुरुषान्पुरः
विलोक्य प्रणतिं कृत्वा विशन्मध्यमवैक्षत । अनेकलक्षप्राकारानुद्यानानि वनानि च ॥
मुक्तागुच्छलसच्छायामण्डपानि सहस्रशः । तोरणानि विचित्राणि हेमसिंहासनानि च ॥
कलिसद्मप्रतोलीषु विचचार ततो भ्रमन् । कोटियोजनमागत्य महाप्राकारमैक्षत ॥ ५२ ॥
रूप्यप्राकारमप्येकं प्रवालाख्यं ततः परम् । नवरत्नाख्यमप्यन्यं माणिक्याख्यमनन्तरम् ॥
अनन्ता इति चाऽऽख्याताः सहस्रभवनान्तरः । गोपुरद्वारदेशेषु प्राकाराः सन्ति भूयशः
तद्द्वारेषु स्थिता ब्रह्मन्पुरुषाश्चन्द्रवर्चसः । शुद्धसत्त्वमयाः सर्वे त्रिकालज्ञा हरिप्रियाः॥
विश्वसृष्ट्यादिकां लीलां जानन्तः परमात्मनः । सर्वं कर्तुं समर्थास्ते प्रसादात्सर्वगाश्च ते॥
तान्नमस्कृत्य वीथीषु प्रविष्टः कोटियोजनम् । गतस्तदा पुनश्चान्ये पार्षदाः समुपस्थिताः॥
महार्हवस्त्रालङ्कारालङ्कृताः कुम्भपाणयः । हेमपात्रगतानेकसंभारपरिपूरिताः ॥ ५८ ॥
मङ्गलार्तिक्यधूपादीन्कुर्वन्तो जयनिस्वनैः । आशीर्भिर्वर्धयन्तोऽन्ये स्तुवन्तः स्तुतिभिः परे ॥ ५९ ॥
गायन्तश्च प्रनृत्यन्तः प्रणमन्तः सहस्रशः । तदा विष्वक्सेनमुखाः पार्षदप्रवरा हरेः॥६०॥
सिंहासने समारोप्य पात्रे हेममये शुभे । संसाधितोदकैर्गन्धैः पादप्रक्षालनं ततः ॥ ६१ ॥
कुर्वन्ति वनिताभिश्च वयं धन्या इति ध्वनिम् । दिव्यानुलेपनाद्यैश्च धूपदीपान्नभोजनैः॥
सत्कृत्य पादतीर्थेन ह्यात्मानमभिषिच्य च । निन्युः सपुष्पकं भक्तं सत्कृतं साधुचर्यया ॥
पादसंवाहनं चक्रुर्भार्यया गतमत्सराः । पुनः सपुष्पकं भक्तं सत्कृतं साधुचर्यया ॥ ६४ ॥
मणिमण्डपसामीप्यं प्रापयामासुरुत्सुकाः । स तस्मादवतीर्याऽऽशु साष्टाङ्गं धरणीं स्पृशन्

---

१ ख. °सद्युक्त° । २ ख. °ला रात्रिधू° । ३ ख. °न्युः स्वाश्रमभूभागपर्यङ्के संनिवेश्य तम् ॥६३॥

आनन्दमयदिव्याय रत्नमण्डपकाय च । नम इत्यनुवाकेन स्थितस्तदवलोकयन् ॥ ६६ ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे मणिमण्डपसमीपप्राप्तिकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ २६३४ ॥

---

अथ तृतीयपादे पञ्चमोऽध्यायः ।

---

श्रीभगवानुवाच—

देदीप्यमानमणिनिर्मितवेदिकायां स्तम्भा लसन्ति नवकाममयाः समन्तात् ।
येषामसीमरजनीशमयूखजालैर्जीवन्ति सज्जनविलोचनसच्चकोराः ॥ १ ॥
संकल्पकल्पितविचित्रमणिप्रवेकसोपानपङ्क्तिविगलद्द्युमणिप्रकाशाः ।
कुर्वन्ति वज्रघटिताजिरदर्पणान्तः संसृज्य दिव्यवसनास्तरणोपमानम् ॥ २ ॥
आराममण्डपशिखाश्रितवारिपातविच्छिन्ननीरकणवृन्दमनूत्सृजन्तः ।
पुष्पैः किरन्त इव मण्डपपादमूलं विष्वग्विमुग्धजलयन्त्रचया लसन्ति ॥ ३ ॥
मन्दारपादपपरागविषक्तमत्तभृङ्गावलीविरुतजातरतिप्रभेदैः ।
संसेवितं चलति चाप्सु मरालमालामञ्जीरनिस्वनचयैः परितो विगीतम् ॥ ४ ॥
नृत्यन्ति दिव्यवनिताः परितो निबद्धरत्नावलीललितभास्वरवेदिकासु ।
तन्मुग्धहासपरिपेशलवक्त्रचन्द्रपीयूषगानपरिहूतकुरङ्गशावाः ॥ ५ ॥
यत्रामलस्फटिकबद्धतरोपक्लृप्तकासारफुल्लकमलोत्थितरेणुजालैः ।
आबद्धवर्तिकमहाजिरकेलिसद्ममद्धक्तिरन्तरतुलं विवशी करोति ॥ ६ ॥
यत्रेन्दुकान्तिमणिनिर्गतनिर्झराणामारावपूरितसुधासितसौधमूर्ध्नि ।
संबद्धहृष्टिततयः शिखिनां कलापा निर्धूतपुच्छनिवहाः परितः स्वनन्ति ॥ ७ ॥
यत्रेन्दिरालिनिवहा ललितं लतासु भृङ्गाङ्गनाभिरभिचुम्बितवक्त्रबिम्बाः ।
चिन्वन्ति पुष्पसुफलानि हरेः प्रियायै मुग्धाधरद्युतिनिवेशिताबिम्बबुध्या ॥ ८ ॥
यत्रेन्दिरारुचिरकेलिगृहोपविष्टसत्प्रेमसंकुलविकस्वरसारिकाणाम् ।
मुग्धप्रलापहृतमानसमुन्मुखीनां स्वर्योषितामतुलहासकला भवन्ति ॥ ९ ॥
यत्र प्रवृत्तरसकेलिविमुक्तमुष्टिकर्पूरपांशुपरिमग्नपदोरुभीत्या ।
संमार्जयन्ति खलु केलिगृहाणि मुग्धाः सत्पाणिपङ्कजदलैरसकृत्प्रयान्त्यः ॥१०॥
सत्पद्मरागघटितायुतकेलिसद्मदेदीप्यमानफलकानि मलीमसानि ।
विज्ञाय बाष्पपवनैः परिमार्जयन्ति चैलाञ्चलैः प्रतिदिनं वनिता न रेणून् ॥ ११ ॥
स्वर्णालवालघनसाररजःप्ररूढमुक्तालतास्तबकराजविभूतयश्च ।
नीलाश्मबद्धधरणीप्रतिबिम्बजालैर्व्योमाङ्गणं विरमयन्ति वधूमुखानि ॥ १२ ॥
नृत्यन्ति यत्र वलभीषु गवाक्षधूमधारामवेक्ष्य शिखिनोऽम्बुदलब्धसौख्याः ।
तत्र प्रविष्टवनिताक्षिकटाक्षपातपीयूषवृष्टिमुषिताः स्वरसंपदाभिः ॥ १३ ॥

---

१ ख. °ष्टिसुखिता° ।

आकारयन्ति पथिकान्नलिनीनिबद्धचित्तानलीनतुलगन्धबहुप्रचारैः ।
रथ्यासु घुष्टनवचन्द्रकचन्दनानां सेकाश्च काननपदानि विभावयन्तः ॥ १४ ॥
मुग्धाङ्गनाभिररविन्दविलोचनाभिर्धम्मिल्लमल्लकुसुमोत्सवसंकुलाभिः ।
मन्दस्मितोज्ज्वलसुधामधुराधराभिर्गायन्ति दिव्यपुरुषाश्चरितानि विष्णोः ॥१५॥
सद्रत्ननिर्मितवरोच्चनिकेततुङ्गशृङ्गाटकेषु दिनकृद्द्युतिभाक्षु रेजुः ।
आन्दोलनानि कुसुमानिलदोलितानि संसेवितानि जलयन्त्रकणाम्बुसेकैः ॥१६॥
पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकमञ्जुलवाग्विलासैः ।
घुष्टानि हेममृगलोचनमालिकाभिः पुष्टानि चन्द्रमृगनाभिसुवासितानि ॥ १७ ॥
वासन्तिकाबकुलनीपकदम्बनागमन्दारचम्पकरसालतमालपुष्पैः ।
आस्तीर्णकुञ्जभवनोदरवेदिकासु चाऽऽन्दोलनानि मधुमाधवसंश्रितानि ॥ १८ ॥
रम्भाजिरे जलजपल्लवतल्परम्ये मन्दानिलोऽस्य घनसारवितानभाजि ।
बम्भ्रम्यमाणमधुपाटलिकिंनरीणामारावमुष्टहृदया वनिताः स्वनन्ति ॥ १९ ॥
उत्फुल्लपङ्कजवने विमलाम्बुराशावुन्निद्रपद्मपुलिने कमलासखीनाम् ।
स्नानावगाहनसमुद्भवकिङ्किणीनां नादा विहङ्गमरवैर्द्विगुणी भवन्ति ॥ २० ॥
आमोदमन्थरमरुत्परिचारिकेव कान्तालकान्तभृतपर्युषिताब्जरेणून् ।
निर्धूय संगमयति प्रसभं प्रभाते नव्यामलामरमहीरुहचूर्णपूगम् ॥ २१ ॥
आबद्धमौक्तिकमनोहरलोलमालासंशोभिजालवदनेषु वराङ्गनानाम् ।
वारामिवान्तरितकञ्जकुलानि भान्ति कल्लोलराजिषु मुखानि सकुङ्कुमानि ॥२२॥
अत्युच्चसौधशिखरोद्गतवल्लरीणां वातावधूतकुसुमानि पतन्ति भूयः ।
विस्तीर्णरेणुपटवासपटावृतानामुत्कीर्णलाजनिकरा इव सुन्दरीणाम् ॥ २३ ॥
वैकुण्ठनाथवदनामृतसेकरूढप्रेमारुणामलपलाशमनोङ्घ्रिपाना(णा)म् ।
सद्ध्यानरम्यफलभालगतेङ्गितानां[2] बद्धासनानि विलसन्ति मुनीश्वराणाम् ॥२४॥
पत्युः प्रसादसमवाप्तसमानभावा भास्वत्किशोरवयसो मदनं क्षिपन्तः ।
नृत्यत्कपोलतटकुण्डलकान्तिभाजो भक्ता भजन्ति भगवच्चरणारविन्दे ॥ २५ ॥
कोटीन्दुसुन्दरमधुस्मितवीक्षणेषु विक्षेपकक्षणरसाक्षमचित्तवृत्त्या ।
नान्यन्मनागपि समानसुखं भजन्ति वैकुण्ठवैभवकृतं पुरुषोत्तमस्य ॥ २६ ॥
यद्यप्यशेषविनिवृत्तभवप्रवाहा वेदान्तनीरविरजाहृतवासनाश्च ।
संप्राप्तनित्यनिरपायनिजात्मलाभा लाभाय नैव गणयन्ति विनाऽऽत्मदास्यम् ॥
अप्राकृतामलशरीरगृहाङ्गणादिभोगानकुण्ठविभवानपि तत्प्रसादात् ।
एकान्तिनो न गणयन्ति हरेः प्रपन्नाः प्राप्तानपि प्रभुपदाब्जमृते कदाऽपि ॥२८॥
संकल्पतः सपदि यस्य सुराः प्रयान्ति कामा भवन्ति सफलाः सकलाः क्षणेन ।
जानाति सर्वहृदयानि विमुक्तमायो नाऽऽलम्बते तदपि सौख्यमखण्डभक्तिः॥२९॥
भक्त्यैव चैनमुपतिष्ठति चाऽऽत्मभावो भक्त्यैव चैनमुपतिष्ठति दिव्यलोकः ।
भक्त्यैव चास्य भगवद्वदनामृताप्तिर्यस्याः परं किमपि गम्यतया न चास्ति ॥३०॥

१ ख. म्यकलफालग° । २ ख. °नां पद्मास°।

सर्वावधिः सकलसाधनसिद्धिहेतुः स्वात्माश्रयः परमसाध्यतमश्चिदात्मा ।
तस्याङ्घ्रिपङ्कजमपोह्य कमाश्रयाम इत्यात्मसौख्यमुत भूतिसुखं नयन्ति ॥ ३१ ॥
यच्छेषभूतमखिलं चिदचिच्छरीरं योऽन्तर्गतो यमयति स्वयमेव सर्वम् ।
नित्यं विमुक्तमथ बद्धमनुप्रविश्य जीवं स मे जयति सर्वगुणः स्वतन्त्रः ॥ ३२ ॥
कः स्वाश्रयं समपहाय तदाश्रितेषु तत्साम्यतामनुविधाय रतिं विदध्यात् ।
चान्द्रीं सुधामिव दिवाकररश्मितप्तः सौख्याय संश्रयति देव मरीचिकाम्भः ॥३३॥
तस्माद्धरेः प्रियतमाः कृपया गृहीता निश्चित्य चैवमिदमेकमनर्थहेतुम् ।
कैवल्यमैश्वरपदं च धिया तदङ्घ्रिराजीवमुष्टमनसो रसिका भवन्ति ॥ ३४ ॥
तत्रेन्दिराभवनभव्यसुगन्धलुब्धमत्तालिजुष्टतुलसीकुसुमप्रवालैः ।
सप्रेमनिर्गतविलोचनवारिधाराः पादावलम्बिवनदामगुणं सृजन्ति ॥ ३५ ॥
दोर्दण्डसंभृतदरारिगदारविन्ददिव्याम्बरस्रगनुलेपनलब्धशोभाः ।
नीराजनाय धृतचन्द्रकवर्तिहस्तान्यस्तान्यकृत्य निवहान्विलसन्ति तत्र ॥ ३६ ॥
चूडीकृतामरमहीरुहपुष्पसाराः सद्रत्नदण्डचलचामरमुद्वहन्तः ।
श्रीरङ्गविष्टरमहीमभिमण्डयन्त आषोडशाब्दवयसः परितश्चलन्ति ॥ ३७ ॥
मन्दस्मितोज्ज्वलमुखाब्जविलोलचारुस्निग्धालकापहृतसालिनवाम्बुजाभाः ।
भास्वत्किरीटवरदीप्तिविदीपिताशाः श्रीकान्तकान्तवदनं परिवीजयन्ति ॥ ३८ ॥
आलोलकुण्डलविभूषितगण्डमूलाः श्रीशानुरागपुलकीकृतदिव्यदेहाः ।
श्रीकान्तकान्तगुणकीर्तनजातमोदा उच्चस्वरेण जयशब्दमुदीरयन्ति ॥ ३९ ॥
वाचामगोचरमनन्तविभूतिपूर्णमानन्दधाम भगवत्पदमद्वितीयम् ।
तस्यैकदेशभुवि निर्मितकोटिकोटिब्रह्माण्डभाण्डनिवहं स गतो ददर्श ॥ ४० ॥
ध्यानात्परं सकलदेवमुनीश्वराणां विष्णोः परं पदमिदं सनकादयोऽपि ।
नाऽऽयान्ति यत्र मनसाऽपि भवादृशानां चेतांसि यावदधिकारमवस्थितानाम् ॥
यं प्राप्य नैव पुनरेति समश्नुते च कामाञ्जनार्दनपदाम्बुजदत्तचित्तः ।
अन्ते त्वमप्यतिनिदेशकरोऽभ्युपैषि ब्रह्मन्नशेषनिजलोकगतैर्मुनीन्द्रैः ॥ ४२ ॥
एवं विलोक्य भगवत्पदमद्वितीयं भक्त्याऽर्चितोऽपि ननु नित्यविमुक्तवर्गैः ।
नो शान्तिमेति वदनेन्दुविमुग्धहाससंवीक्षणामृतमृते परमप्रपन्नः ॥ ४३ ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे मुक्तिमण्डपदर्शनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ २६७७ ॥

---

अथ तृतीयपादे षष्ठोऽध्यायः ।

---

श्रीनारायण उवाच—

ब्रह्मन्नयं प्रियतमस्त्वत्तोऽपि मम संमतः । सद्यो मामेति कल्पान्ते त्वमभ्येषि जनैः सह ॥

---

१ ख. °मिह दि° । २ ख. °तः संत्यज्य सं° । ३ ख. °ति को हि म° । ४ ख. °दं जहतस्त° । ५ ख. °नदिव्यमु° ।

भक्तिमण्डपमासाद्य विलोक्याऽऽचार्यमापितम् । साक्षादानन्दपूर्णाक्षो धन्योऽहमिति मन्यते ॥ २ ॥
सर्वकारणयोगाख्यपीठपद्मनिन्दितम् । तत्त्वज्ञानबलैश्वर्यशक्तिभिः परिसेवितम् ॥ ३ ॥
चामरान्दोलितकरा विमलाद्या नव स्त्रियः । दलाष्टके कर्णिकायां लोकपद्मस्य संस्थिताः ॥ ४ ॥
अनुग्रहा रमाभिन्ना कर्णिकायां श्रिया सह । अनन्तासनसंविष्टा तत्रानन्तं विचिन्तयेत् ॥ ५ ॥
अनेकचन्द्रसंकाशशीतलाङ्गो वरद्युतिः । नीलाम्बरो गुणाम्भोधिः कौतुकी कौतुकप्रियः ॥ ६ ॥
सहस्रवदनो भूत्वा वैकुण्ठेशमुखच्छविम् । विलोकयति जिह्वाभिर्लेढ्यङ्गानि च सर्वतः ॥
वदनाम्भोजविगलच्छिशिरामोदवायुभिः । सुखयन्त्यधिकं प्रेम्णा भगवन्तं रमायुतम् ॥ ८ ॥
स्वस्य देहं त्रिवलयं कृत्वा सिंहासनं भवेत् । दीर्घमानेन कथितं द्वात्रिंशल्लक्षयोजनम् ॥ ९ ॥
उन्नतं दशलक्षेण विंशल्लक्षेण विस्तृतम् । सहस्रसूर्यसंकाशं फणामणिविराजितम् ॥ १० ॥
तस्योपरि महाश्चर्यः सर्वकारणकारणम् । भूत्वा समाप्तिकामोऽपि संस्थितो रमया सह ॥ ११ ॥
दक्षिणे च महालक्ष्मीस्तस्याः पार्श्वद्वयेऽपि च । भूलीले संस्थिते देवस्तत्र तत्र विराजितः ॥ १२ ॥
वात्सल्यजलधिः श्रीमान्कल्याणादिगुणान्वितः । नियोजयति चाऽऽनेतुं मुक्तात्मानं स्वपार्षदान् ॥ १३ ॥
सेनापतिं नित्यवर्गं सायुधावरणान्वितम् । तथा च परिवारं स्वं लक्ष्मीदेवी न्यवेदयत् ॥
वेदान्तबोधविज्ञाततत्त्वः सात्वतसंमतः । अनन्यसाधनो भूत्वा तथाऽनन्यप्रयोजनः ॥
तथैवानन्यसंबन्धो भक्तोऽयं ह्यावयोर्वरः । समानेयः समाराध्य धूपदीपाक्षतादिभिः ॥
एवं प्रबोधितास्ते तु नित्या वैकुण्ठपार्षदाः । दिव्याप्सरोभिः संयुक्ता मङ्गलद्रव्यपाणयः ॥
ध्वजैः पताकावलिभिर्वीणामुरजवादनैः । लाजादूर्वाक्षतधरैः सुगन्धद्रव्यमार्जनैः ॥
उपाजग्मुः स्थितं द्वारमण्डपस्य जयस्वनैः । आतिथ्यं प्रददुस्तस्मै मुक्तायामितवर्चसे ॥
स च भक्तान्कृतातिथ्यानाज्ञयाऽस्येतरानपि । प्रणनाम महानन्दसंकुलात्मा कृताञ्जलिः ॥
पुनस्तं योजयामासुर्दिव्यपीठे यदा तदा । भगवान्पुण्डरीकाक्षः समुद्र इव पर्वणि ॥
मुक्तचन्द्रमिवाऽऽलोक्य न ममौ स्वात्मनि प्रभुः । अङ्की चकार विश्वात्मा दीर्घदुःखापमुक्तये ॥ २२ ॥
स्वशेषभूतं सुमुखं दूरदेशादुपागतम् । आत्मार्थं मुक्तसर्वस्वं स्वास्मिन्सर्वस्वमानिनम् ॥
विज्ञातस्वात्मसंबोधप्रेमातिशयसंप्लुतम् । प्रियं धीरं महाशूरं सुपुत्रमिव सस्वजे ॥ २४ ॥
अङ्के निवेशितं भूयः प्रेमसंभिन्नलोचनम् । स्वसमानवयोवेषरूपलावण्यभूषितम् ॥ २५ ॥

---

१ ख. संबन्ध° ।

षभाषे भगवान्कोऽसि कस्यासि कमलेक्षण। एवं पृष्टस्तदा प्राह ब्रह्मास्मीति न संशयः॥
ब्रह्मत्वं ते कुतो यस्मात्त्वं शेषोऽसीति केशवः । अहं विशेषणीभूतो विशेष्यस्त्वमसि प्रभो ॥ २७ ॥
त्वया विना न मे नाथ संस्थितिर्हि मनागपि। त्वं मे संधारकः स्वामी प्रेरकः सर्वबुद्धिदः
अतो ब्रह्माहमस्मीति विज्ञातं गुरुवाक्यतः। तवैवास्मि तवैवास्मि तवैवास्मीति निश्चयम्
वत्स कस्मान्न संप्राप्तः किं कुर्वन्भुवि संस्थितः। नानाप्राकृतदेहेन संबद्धः केन हेतुना
त्वच्छेषतां परित्यज्य देहोऽहमिति मन्दधीः। अन्तर्गतमहं त्वां च नाविदं पुरुषोत्तमम् ॥
यमात्मानं मन्यमानस्तस्य चान्नेन संस्थितिः। अहमन्नमयो जातो ह्यन्नार्थं कृतवान्गतिम्॥
भोग्यमन्नं शरीरं च मत्वा त्वत्तः पराङ्मुखः। तच्चिन्तया गतः स्वार्थात्कीनाशवशगोऽभवम् ॥ ३३ ॥
स्त्रीभोगं कृतवान्नाथ त्वद्दास्यरसविच्युतः। तेनाहं दुःखजालेन संवृतः कमलापते ॥
कुतः श्रीमदपुष्टानां रोचते भगवत्कथा। यथाऽहिविषदुष्टस्य शर्करा कटुकायते ॥३५॥
काचकामलदोषेण शङ्खः पीतः प्रतीयते। अन्तर्गतस्तथा त्वां च प्राकृतैर्नावलोक्यसे ॥
मयाऽवमानितः स्वात्मा दुर्मानानीततन्द्रिणा। तेनाहं नरकारवातमभोज्यं यातनामयम्।
भ्रमन्ननेकजन्मानि न सौख्यं लब्धवान्क्वचित्। अधऊर्ध्वावरोहेन(ण) स्वेदजालमुपागतः
वत्स तस्मात्कथं मुक्तो घोरसंसारसागरात्। मायारशनया बद्धस्त्रिगुणया दुर्वितर्कया ॥
भगवंस्तव निर्हेतुदयया गतबन्धनः। उत्तीर्णोऽस्मि भवाम्भोधिं दुस्तरं त्वत्कृपां विना॥
करिष्ये चरणद्वंद्वकैंकर्यं देव केवलम्। दास(स्य)भावनया भूयो भावयन्दासतां निजाम्
दास्यमेव स्वरूपं मे तत्त्यक्त्वा बन्धनं गतः। दासभावनया भूयो भावयन्दासतां निजाम्
प्राकृतं योऽयमुत्सृज्य भवत्सेवानुरूपकम्। संप्राप्तोऽस्मि निजं रूपं निर्गुणं प्रकृतेः परम्॥
जनोऽयं निर्गुणत्वात्तु निर्गुणं समुपैति हि । अतोऽहं निर्गुणं दास्यं करिष्ये निर्गुणः प्रभो ॥ ४४ ॥
एवं विनिश्चयं श्रुत्वा त्यक्तैश्वर्यस्य सर्वतः। मुक्तकैवल्यभावस्य प्रपन्नस्य महामते ॥
आविश्चकार वदनोल्लासमन्तिमसत्फलम्। प्राप्येषु परमं प्राप्यं भोग्येषु परमं मतम् ॥
नातः परं कृपा विष्णोर्मुखोल्लासोऽवधिः स्मृतः। एतदन्तः समाम्नायो ब्रह्मंस्ते व्याहृतो मया ॥ ४७ ॥
ब्रह्मंस्ते सृष्टिव्यापारमन्ते न सफलं पुनः। मन्येऽहं परमैकान्ती भूत्वा मामुपयाति हि ॥
एकान्तिनामहं ह्यात्मा ममाऽऽत्मा स प्रकीर्तितः। तेनायं मम वेशोऽयं सनाथो जायते ध्रुवम् ॥ ४९ ॥
लक्ष्मीर्देवी ततस्त्वेनं कृपां कृत्वाऽवलोकयत्। पुत्रवत्तमुपगृह्य ममार्ज मुखपङ्कजम् ॥
वत्स खिन्नोऽसि बहुशः संसारायतयात्रया। धन्योऽसि शरणं गत्वा संप्राप्तोऽसि निजास्पदम् ॥ ५१ ॥
निवसस्व महाभाग यथेच्छं पितृवेश्मनि। उक्त्वैवमनुरागेण स्तन्येनैवाभिषिच्य तम् ॥

---

१ ख. लम्। दासभूतस्तवैवास्मि सर्वावस्थासु माधव। ४१॥ २ क. दास्यभा।

कुरु कल्याणकैंकर्यमावयोरनुरूपतः । स्वाधिकारं ददौ तस्मै मुक्ताय परमेश्वरी ॥५३ ॥
पुरः स्थातुमशक्यं तं रूपलावण्यधर्षितम् । लक्ष्मीर्न्यवेशयत्पश्चात्तत्रापि प्रभया पुनः ॥
सुष्टः सौन्दर्यमालोक्य जगाम शरणं तयोः । कृपया संस्थितः पार्श्वे नत्वा कृत्वा प्रद-
क्षिणम् ॥ ५५ ॥
स्वरूपानन्दनिर्भिन्नो धन्यो धन्योऽहमब्रवीत् । परब्रह्मपदं प्राप्तो यतो नाऽऽवर्तते पुनः॥
एष ते कथितो ब्रह्मन्मार्गः संवसतेर्हरेः । गच्छन्ति वैष्णवा नूनं तद्विष्णोः परमं पदम्॥
अर्चिरादिगतिश्चैषा वैष्णवानां महामते । कर्मिणो नैव गच्छन्ति योगिनो नैव पद्मज ॥
परमैकान्तिकानां ह्येष स्मृतः पन्था न संशयः । अनेनैव च मार्गेण द्विपरार्धायुषः क्षये
मामेवैष्यसि देवेश मद्धर्मनिरतो भव । तदाज्ञया धृतश्चैष दासवेषो मया द्विजाः ॥६०॥
अनुसंधानसंसिद्ध्यै द्वयमन्त्रधरोऽभवम् । भवतामपि श्रीविष्णोराकाङ्क्षा यदि दर्शने॥
तदा तापादिकं कृत्वा ब्रह्मास्मीति विचिन्त्यताम् । नारायणोपदिष्टं वो ज्ञानमुक्तं
द्विजोत्तमाः ॥ ६२ ॥
किं भूयः श्रोतुमुत्कण्ठा वर्तते भवतां हृदि । अन्तर्हितस्तदा देवः शङ्खचक्रगदाधरः ॥
सरहस्यं परं ज्ञानमुपदिश्य विशेषतः ॥ ६४ ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्टयङ्काः—२७४१

---

समाप्तोऽयं ब्रह्मनारायणसंवादः ।

---

अथ सप्तमोऽध्यायः ॥

मुनय ऊचुः—

वयं धन्या वयं धन्या वयं धन्याः पितामह । येषां नो भगवान्साक्षादुपदेष्टाऽऽत्मनः
पदम् ॥ १ ॥
किं रहस्यं परं ज्ञानमुपदिश्य विशेषतः । नारायणो गतो ब्रह्मंस्तन्नः शंसितुमर्हसि ॥ २॥

श्रीब्रह्मोवाच—

तत्त्वत्रयात्मकं ज्ञानं रहस्यं धर्म उच्यते । यमलब्ध्वा नरो नैति यत्पदं कालवर्जितम् ॥
श्रुतिस्मृत्युदितं धर्मं यो नाऽऽचरति मूढधीः । शुनः शेफेन नूनं स भवाब्धिं तर्तुमिच्छति॥
धर्ममूलमिदं सर्वं धर्ममूलं जनार्दनः । धर्मेण नीयते तस्मात्स्वं मूलं प्रति मानवः ॥ ५ ॥
अयमेव परो धर्मो येन गम्यो भवेद्धरिः । येन न प्राप्यते विष्णुः स धर्मो मूलविच्युतः॥
हरिः सर्वस्वरूपेण सर्वात्मकतया स्थितः । अलक्ष्यस्तिष्ठते विप्राः प्राप्यते तेन संयुतः ॥
न तदस्ति विना यत्स्यात्तेन भूतं चराचरम् । अतः प्राप्यतरं गम्यं भोग्यमस्ति हरिः
स्वयम् ॥ ८ ॥
ब्रह्मैव प्राप्यते विप्रास्तस्य तस्य स्वरूपतः । अनित्यत्वात्पदार्थानां सा प्राप्तिः साधने-
रिता ॥ ९ ॥

ससीमं सादिकं सर्वं मायाकार्यमशेषतः । प्रकृतेः परिणामोऽयं सगुणः कार्यनिर्मितः ॥
प्राकृतानां च जीवानामत्रैव सुखराशयः । मन्यन्ते ते नरास्तेन ह्यात्मनो मोक्षमेव हि ॥
प्राप्यं भोग्यमनन्तं च तेन जातं मुनीश्वराः । तदर्थमाचरन्तीह धर्मानेव विशेषतः॥१२॥
आदौ कलेवरं प्राप्यं जाया प्राप्यतया मता । पुत्रः पौत्रः प्रपौत्रश्च धनं विद्या यशः कुलम् ॥ १३ ॥
क्षेत्रं सद्म मही राज्यं विजयः कामकौतुकम् । प्रतापोऽव्याहतैश्वर्यं रूपयौवनभूतयः ॥
स्वर्गो देवाधिपत्यं हि पूज्यत्वं बलपौरुषम्[१] । परचित्तज्ञता सत्यसंकल्पः सर्वतो गतिः ॥
निर्द्वंद्वत्वमदीनत्वमित्याद्यामुष्मिकं च नः । प्राप्यं भोग्यं च गन्तव्यं मन्यन्ते कालविच्युतम् ॥ १६ ॥
प्रकृतेर्गुणाचित्रेषु[२] विभ्रान्तास्तथ्यभावतः । इदं ग्राह्यमिदं ग्राह्यमिति धावन्त्यवस्तुनि ॥
प्राप्तिमस्यापि धर्मेण प्रवदन्ति मनीषिणः । अप्राप्यप्राप्तिरेवेयं हित्वा निःसीममव्ययम् ॥
निवृत्तिमेव वेदोऽयमाहास्य क्षणविच्युतेः । तथाऽपि[३] नित्यवस्तूनामनुरागवतामिह ॥
संगोप्य ह्यात्मनो मार्गं प्रवृत्तिमनुशास्ति हि । बालानामिव संगोप्य मणिं काचमणिं नृणाम् ॥ २० ॥
धर्मः प्रवृत्तिमार्गाख्यो ह्येको राजसतामसः । निवृत्तिमार्गः सत्त्वाख्यो द्वितीयो भगवत्प्रियः ॥ २१ ॥
नारायणपरो धर्मः स च भागवतो मतः । ज्ञानपूर्वः स भवति जीवानां मोक्षसिद्धये ॥
प्राप्यभोगतया विष्णोर्ज्ञानं ज्ञानविदो विदुः । साध्यसाधनरूपं हि विष्णुरेवेति वा पुनः ॥ २३ ॥
अविच्छिन्नसुखं ब्रह्म दिव्यानन्तगुणास्पदम्[४] । सर्वशक्तिमदव्यक्तं सर्वज्ञं सर्वकामदम् ॥
तदर्थमेव कर्तव्यं सात्त्विकं प्रेमवृद्धये । प्रेम्णा यत्क्रियते पश्चात्परमैकान्तिकं हि तत् ॥
सात्त्विकं वैष्णवं नाम प्राहुः प्रेमसमृद्धये । धर्मसाधनभूतोऽयं[५] प्रतिबन्धकनाशनः ॥
प्रेमोत्तरं तु यत्कर्म साक्षात्तत्प्राप्तिकारणम् । वक्ष्येऽहं मुनयस्तावत्सात्त्विकं देहशोधनम्॥
तत्राऽऽदावाह्निकं कर्म वैष्णवोचितमुच्यते । आप्रबोधं महाभागाः प्रस्वापान्तमशेषतः ॥
प्रतिबुध्य निशाप्रान्ते हरिनामावलीं जपन् । श्रीगुरोश्चरणाम्भोजं चेतसा चिन्तयन्मुहुः ॥
स्वरूपं दिव्यलीलां च पार्षदान्सपरिच्छदान् । विमुक्तमण्डपं देवीं पद्मजां प्रणमेद्बुधः॥
स्वातन्त्र्यं स्वामिनः स्वस्य पारतन्त्र्यं विचिन्तयेत् । प्रपन्नमात्मनो रूपं प्राप्यं कैंकर्यमच्युतम् ॥ ३१ ॥
महाकारुणिकं देवमात्मानमपकारिणम् । स्वामिनं विद्यया युक्तमविद्यानिलयं तथा ॥
स्वकर्तृत्वं विनिर्धूय कर्तारमनघं हरिम् । दास्यं करिष्ये मनसा वचसा देहकर्मणा ॥३३॥
दासोऽहं मनसा चैव वचसा नैच्यभावनम् । कर्मणा मन्दिरालेपसेकालंकरणक्रिया ॥
नाहमन्यत्करिष्यामि श्रीशसंबन्धवर्जितम् । देहयात्रामपि हरेर्नैव संबन्धवर्जिताम् ॥३५॥

---

१ ख. बलपौरुषम् ॥ १६ ॥ २ क. चित्रेषु । ३ ख. °थाऽस्य नि° । ४ ख. °नन्दगु° । ५ ख. साध्यसा° ।

नाऽदासभावनं वाचा मनसाऽपि च संस्पृशे । नादासवेशं कृच्छ्रेऽपि करिष्ये दीन-
वत्सल ॥ ३६ ॥
संसारसर्पभीतोऽहमनन्यशरणोऽभवम् । इति संकल्प्य पूतात्मा प्रक्षाल्य चरणौ मुदा ॥
रात्रिवासः परित्यज्य शुचौ स्वासनमात्मनः । पातयेत्तत्र चाऽऽधारशक्तिं स्मृत्वा नमे-
द्बुधः ॥ ३८ ॥
आचम्य केशवाद्यैश्च महामूतं च संस्मरेत् । श्रीवैकुण्ठं पार्षदांश्च नित्यमुक्तान्विचि-
न्तयेत् ॥ ३९ ॥
परम्परां गुरोः स्मृत्वा न्यासध्यानं विधाय च। प्रजपेन्मन्त्रराजं च द्विमन्त्रं च विशेषतः॥
पठेच्च पौरुषं सूक्तं श्रीसूक्तं नामकीर्तनम् । महापुरुषविद्यां च दासोऽहमिति भावयेत् ॥
दासोऽहं स्वामिसेवार्थं देहयात्रां विधानतः । प्रवर्तयिष्ये सततं प्रीणातु पुरुषोत्तमः ॥
प्रागेव सूर्यसंदर्शाच्छिरः प्रावृत्य वाससा । नैर्ऋत्यां ग्रामतो दूरं गच्छेन्मलविमुक्तये ॥
अयज्ञीयैरनार्द्रैश्च तृणैः संछाद्य मेदिनीम् । निरुच्छ्वासो गतालापो मलमूत्रं परित्यजेत्॥
दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दाक्षिणामुखः ॥
पवित्रमुपवीतं च दक्षिणे श्रवणे द्विजाः । मलमूत्रपरित्यागे कुर्यान्नियतमानसः ॥४६॥
दर्भः स्थानविशेषेषु पवित्रत्वं प्रयाति हि । चक्रं प्रच्छन्नमन्यच्च बाहुमूलेऽवधारितम् ॥
छायायामन्धकारे च रात्रावहनि वा द्विजाः । यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥
गृहीत्वा जलपात्रं तु विण्मूत्रं कुरुते यदि । तज्जलं मूत्रसदृशं पीत्वा चान्द्रायणं चरेत् ॥
मलमूत्रं त्यजेद्विप्रोऽकृत्वा कर्णे च सूत्रकम् । मलवत्तत्परित्यज्य नवसूत्रधरो भवेत् ॥
उत्तार्य तुलसीकञ्जमाले वैष्णवसत्तमः । मलमूत्रपरित्यागं नैत्यिकं तु समाचरेत् ॥ ५१ ॥
सूतके प्रेतकार्ये च तैलाभ्यङ्गे च भोजने । शयने तुलसीमालामधृत्वैव समाचरेत् ॥ ५२ ॥
गृहीतलिङ्गमन्यत्र मृद्भिरभ्युद्धृतैर्जलैः। गन्धलेपक्षयकरं नित्यं शौचमथाऽऽचरेत् ॥ ५३ ॥
यस्मिन्देशे तु यत्तोयं या च यत्रैव मृत्तिका । सैव तत्र प्रशस्ता स्यात्तया शौचं विधी-
यते ॥ ५४ ॥
तीर्थे शौचं न कुर्वीत न तत्रोद्धृतवारिणा । रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनु-
द्धृतैः ॥ ५५ ॥
आपद्येतत्प्रकर्तव्यं पात्राभावे न वै सदा । पश्चात्तच्छोधयेत्तीर्थं मन्त्रैर्जलविलोडनैः ॥
बिभीतकमिता देया मृन्मूत्रोत्सर्गकर्मणि । आर्द्रामलकमात्रा वा मूत्रशौचे तु मृत्तिका ॥
एका लिङ्गे करे तिस्रः पादयोर्मृत्तिकाद्वयम् । मूत्रशौचं समाख्यातं शुक्रशौचं निबो-
धत ॥ ५८ ॥
मूत्रात्तु द्विगुणं शुक्रे मैथुने त्रिगुणं भवेत् । एवं शौचं भवेत्पुंसां मलमोक्षे निबोधत ॥
तिस्रोऽपानेऽथवा पञ्च सप्त वेति ध्वजे पुनः । एकं चाथ द्वयं वा स्यात्करयोर्दश
मृत्तिकाः ॥ ६० ॥
विंशतिर्वा भवेद्विप्राः पादयोः सप्त सप्त च । ततस्रस्तु मृदो देयाः कृत्वा तु नखशो-
धनम् ॥ ६१ ॥

१ ख. °श्च भूतशुद्धिं च ।

एतच्छौचं गृहस्थानां तथा गुरुनिवासिनाम् । द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं भवेत् ॥ ६२ ॥
स्त्रीशूद्रयोरर्धमानं शौचं निशि तथा स्मृतम् । पादशौचं पथि भवेत्सर्वेषामेष निश्चयः ॥
धारया च न कुर्वीत शौचं शुद्धिमभीप्सुना । चुलकेनैव कर्तव्या हस्तशुद्धिर्विधानतः ॥
मूत्रोत्सर्गं द्विजः कृत्वा न कुर्याच्छौचमात्मनः । मोहात्स तु त्रिरात्रेण जलं पीत्वा शुचिर्भवेत् ॥ ६५ ॥
भुञ्जानस्य गुदस्रावो यदि स्याद्वायुवेगतः । ततः कृत्वोपवासं तु पञ्चगव्येन शुध्यति ॥
शौचयत्नः सदा कार्यो वैष्णवेन विशेषतः । आराध्यते यतो विष्णुः साक्षात्कैवल्यभाजनः ॥ ६७ ॥
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः । कैंकर्यार्थं भगवतो देहशुद्धिं समाचरेत्
देहशुद्धिर्द्विधा ज्ञेया स्वभावाच्च निमित्ततः । स्नानादौ तु स्वभावेन स्पर्शादौ स्यान्निमित्तजा ॥ ६९ ॥
वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः । श्लेष्माश्रुदूषिकाः स्वेदा द्वादशैते नृणां मलाः ॥ ७० ॥
तेषां चाथ विशुद्ध्यर्थं स्नानं मृद्गोमयाम्भसा । मन्त्रैस्तीर्थोदकैः कुर्यात्प्रत्यहं भगवत्परः॥
तीर्थादौ स्नानशुद्ध्यर्थं गत्वा पादौ विशोध्य च । वल्मीकाश्वत्थवाराहखातादाहृत्य मृत्तिकाम् ॥ ७२ ॥
मृदमादाय मूलेन गायत्र्या प्रोक्ष्य साधकः । द्विधाकृत्य सरित्तीरे भागैकं तु निधाय च ॥
भागैकेन शरीरस्य शुद्धिं कुर्याद्विचक्षणः । मलस्नानमिदं प्रोक्तं प्राणायामत्रयं चरेत् ॥
ध्यात्वा श्रिया समासीनं भूमिस्थं भागमाहरेत् । तं विभज्य त्रिधा मन्त्री शुद्धिमिच्छन्सदैहिकीम् ॥ ७५ ॥
मणिन्बधे पाणितले चाङ्गुलीषु निवेशयेत् । तलस्थभागं संप्रोक्ष्य मूलेनैवाभिमन्त्र्य च ॥
अस्त्रमन्त्रेण दिग्बन्धमाचरन्भ्राम्य पातयेत् । अङ्गुलीस्थेन भागेन कट्यधस्ताद्विलेपयेत् ॥ ७७ ॥
मणिबन्धस्थभागेन हृदयादूर्ध्वमुल्लिखेत् । तोये तीर्थं प्रकल्प्याथ स्नायाद्देवमनुस्मरन् ॥
स्नानाङ्गभूता संशुद्धिर्नित्या स्वाभाविकी मता । मनुष्यास्थिवसां विष्ठामार्तवं मूत्ररेतसी ॥ ७९ ॥
अजीर्णं शोणितं वाऽपि परस्य यदि संस्पृशेत् । स्नात्वा प्रमृज्य चैलादीनाचम्य स शुचिर्भवेत् ॥ ८० ॥
तान्येव स्वानि संस्पृश्य पुनः स्यात्परिमार्जनम् । असंस्कृतं द्विजं स्पृष्ट्वा विष्णुनिन्दापरायणम् ॥ ८१ ॥
पाखण्डिनं विकर्मस्थं सवासा जलमाविशेत् । ज्ञानादज्ञानतो वाऽपि विष्णुनिन्दापरायणम् ॥ ८२ ॥

---

१ क. °ष्णुत्रेषविवर्जितम्° ।

ब्राह्मणं पतितं स्पृष्ट्वा समानं शौचमाचरेत् । अवैष्णवस्य संस्पर्शो भाषणं पङ्क्तिभोजनम् ॥ ८३ ॥
अधोगतिं नयत्येतं तस्मात्तं परिवर्जयेत् । चरणामृतपानेन विष्णुनामानुकीर्तनात् ॥८४॥
श्रीवैष्णवाङ्घ्रिसंस्पर्शादात्मनः शुद्धिमाचरेत् । अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ ८५ ॥
संस्मरेत्पुण्डरीकाक्षं सद्यः शुद्धिमवाप्नुयात् । अतो भागवतं तीर्थं तीर्थं भगवतोऽपि हि
समं पश्येत्तु मतिमाञ्शुद्धिकामो विशेषतः । वैष्णवस्य तु विप्रस्य शङ्खचक्राङ्कधारिणः॥
पादोदकं च निर्माल्यं निषेव्य शुचितां व्रजेत् । स्नानशुद्धिर्भवेदस्य यदा पादोदकं स्वके॥
विप्रस्य विष्णुभक्तस्य यः स्नेहादेव धारयेत् । एवं शुद्धिं विधायाऽऽदौ मृदा मन्त्रैश्च वैष्णवः ॥ ८९ ॥
श्रीशार्चनाङ्गभूतं च स्नानं कुर्यात्सरिज्जले । स्वशाखोक्तविधानेन कुशानादाय वारिणा॥
स्मृत्वा भगवतो रूपमात्मनो दासरूपताम् । प्रातरुत्थाय यो विप्रो वैष्णवः स्नानमाचरेत् ॥ ९१ ॥
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् । अस्नात्वा नाऽऽचरेत्कार्यं जपहोमादि किंचन ॥ ९२ ॥
क्लिद्यन्ति हि सुषुम्नादीनीन्द्रियाणि क्षरन्ति हि । दन्तधावनिकं कर्म स्नानात्पूर्वमथाऽऽचरेत् ॥ ९३ ॥
तदकृत्वा तु यः स्नाति तस्य स्नानं तु निष्फलम् । अविद्वान्स्नानकाले तु यः कुर्याद्दन्तधावनम् ॥ ९४ ॥
पापीयान्रौरवं याति विष्णुशापहतो ध्रुवम् । आराधने भगवतो मुखात्पूतिं समुत्सृजन् ॥
दासः किल्बिषमाप्नोति प्रतिकूलमथाऽऽचरन् । प्रक्षाल्य पादौ हस्तौ च मुखं च सुसमाहितः ॥ ९६ ॥
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः । तिक्तं कषायं च तथा कटुकं कण्टकान्वितम् ॥ ९७ ॥
क्षीरिणो वृक्षगुल्मादेर्भक्षयेद्दन्तधावनम् । द्वादशाङ्गुलमानं स्याद्विप्राणां दन्तधावनम् ॥
क्षत्रविट्शूद्रजातीनां नवषट्चतुरङ्गुलम् । चतुरङ्गुलमानं स्यान्नारीणां दन्तधावनम् ॥
नैर्ऋत्यां निक्षिपेत्काष्ठं दन्तोल्लेखं विधाय च । इष्टकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा ॥
मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् । दक्षिणाभिमुखो नाद्यान्नीलं धवकदम्बकम्॥
तिन्दुकेङ्गुदबन्धूकमोचार्कस्नुहिजम्बुकम् । कार्पासं दन्तकाष्ठं च श्रीकामः सततं त्यजेत्॥
नादण्डं न त्वचा हीनं नाप्रशस्ततरूद्भवम् । स्नुहीकिंशुकश्यामाकशाल्मलीनिम्बगुग्गुलान् ॥ १०३ ॥
कारञ्जकोविदारांश्च वर्जयेद्दन्तधावने । श्लेष्मातकशमीपीलुपिप्पलं तिलकं तथा ॥
शिग्रुनिर्गुण्डित्वक्सारकरवीरशिरीषकम् । बदरीं चैव चिञ्चां च वेणुं पालाशशिंशपम् ॥
वर्जयेत्कुशकाशांश्च मालतीमपि वैष्णवः । कुशकाशपलाशांश्च शिंशपां यस्तु भक्षयेत् ॥

---

१ ख. वार्यं न द ।

तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति । पालाशमासनं यानं दन्तकाष्ठं च पादुके ॥
वर्जयेत्तु प्रयत्नेन शमीमश्वत्थमेव च । पूतिगन्धाम्लमधुरं सच्छिद्रं दन्तधावनम् ॥१०८॥
अज्ञातपूर्वं पत्राढ्यं युग्मपर्णं तु वर्जयेत् । सकामैः कामनायोगादकामैर्विधृतानि हि ॥
वर्ज्यान्यपि द्विजश्रेष्ठा विचिन्त्यानि मनीषिभिः । अपामार्गः प्रशस्तोऽयं दन्तधावन-
कर्मणि ॥ ११० ॥
तदभावे तु शस्तानि काष्ठानि द्विजसत्तमाः । कुशकाशपलाशं च शिग्रुशिंशपकानि च ॥
वर्जयेदङ्गुलिं चापि दन्तशुद्धौ दिनोदयम् । अङ्गारवालुकापर्णतृणवस्त्रनखादिभिः ॥
न कुर्याद्दन्तकाष्ठं च वैष्णवो दूषिते दिने । श्राद्धाहे जन्मदिवसे व्रते चैवोपवासके ॥
द्वादश्यां रविवारे च चन्द्रनाशे तु वर्जयेत् । नन्दासु च नवम्यां च द्वादश्यां भौमवासरे ॥
दन्तकाष्ठं न कुर्वीत चामायां तु विशेषतः । काष्ठाभावदिने शुद्धिं कुर्यात्पर्णादिभिर्द्विजः
जिह्वोल्लेखस्तु कर्तव्यः काष्ठेनादि सदैव हि । अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ
तथा ॥ ११६ ॥
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् । प्रक्षाल्य भक्षयेत्काष्ठं प्रक्षाल्यैव विसर्जयेत् ॥
मन्त्रेणैव तरोर्ग्राह्यं दन्तकाष्ठं विपश्चिता । आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते । पतितान्त्यजपाखण्डिदेवाजीवरजस्वलाः ॥
भिषक्पातकिचाण्डालान्न पश्येद्दन्तधावने । हरिनिन्दारतो नित्यं शङ्खचक्रविदूषकः ॥
जलं च दन्तकाष्ठं च तद्धस्तान्नैव संस्पृशेत् । भगवत्संनिधीकृत्य दन्तकाष्ठं तु वैष्णवः ॥
प्रसादबुद्ध्या गृह्णीयान्न स्वातन्त्र्येण वैष्णवः । दन्तान्विशोध्य मतिमान्स्वगुरुं चिन्त्य
चेतसा ॥ १२२ ॥
सपवित्रो विशेद्वारि स्नानार्थं साधकोत्तमः । कुशैः पूतं भवेत्स्नानमभावे काश उच्यते ॥
दूर्वायवव्रीहिभिर्वा तुलसीपल्लवैस्तथा । यावद्भगवतः पादपूता तुलसिका भवेत् ॥१२४॥
तावदन्यैः प्रकर्तव्यं स्नानं स्नानपरैर्द्विजैः । कुशादीनामभावे तु क्रमात्काशादयो मताः ॥
कुशा एव समाख्याता मुख्याः स्नानादिकर्मणि । न तथा तुलसी ज्ञेया तदभावे समा
मता ॥ १२६ ॥
न स्नानादिक्रिया कार्या तुलसीदलवर्जिता । विष्णोः प्रसादजननी साक्षात्तुलसिका मता
न तथा कमलादीनि कमला वा द्विजातयः । अनाकारित एवायं तुलसीकानने हरिः ॥
नित्यं निवसते विप्रा अशुचावपि भूतले । न यत्र तुलसी शाखा शुष्कं वा तुलसीदलम्
विप्राणामपि तत्स्थानमासुरं परिकीर्तितम् । तुलसीविटपच्छायामाश्रित्य यजते हरिम् ॥
तस्य पुण्यस्य माहात्म्यं नाहं वक्तुमलं मनाक् । तुलसीमूलमृत्स्नेयं महापातकनाशिनी ॥
यामुद्वहन्मृतोऽरण्ये मुच्यते यमशासनात् । न तथा गोमयैः शुद्धिः प्राशितैर्गव्यपञ्चकैः ॥
यथा तुलसिकामूलमृत्स्नायां शुचिता द्विजाः । ऊर्ध्वपुण्ड्रादिभिर्देहे धृतं चेत्तुलसीरजः ॥
मुच्यते भवपाशेन पादतीर्थं प्लुतं यदि । द्विजातिभिः सदा सेव्या तुलसी विष्णुवल्लभा
शालग्रामशिलापूजा यां विना नैव जायते । तस्मादप्सु सदा धार्या स्नानकाले विशेषतः
तुलसी मृत्तिकालेपे मार्जने तुलसीदलम् । कुशास्तु नामसाः श्रेष्ठा यातयामा न ते
मताः ॥ १३६ ॥

नियोज्यास्ते समस्तेषु कर्मस्वब्दान्तमेव च । मासे नमस्यमायां तु कृतो दर्भोच्चयस्तु यः ॥
अयातयामः स ज्ञेयो यावदब्दं भवेत्पुनः । शुचिर्भूत्वा शुचौ देशे स्थित्वा पूर्वोत्तरा-
मुखः ॥ १३८ ॥
ॐकारेणैव मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः । विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ॥
दहस्व सर्वपापानि दर्भ स्वस्तिकरो भव । हुमस्त्राय फडित्युक्त्वा भूमेर्दर्भान्समुद्धरेत् ॥
तैरेव सर्वं कुर्वीत विप्रो मन्त्रैश्च वैष्णवम् । यावत्तीर्थं भवेद्यत्र तावदन्यत्र वारिणि ॥
न स्नायादमलप्रज्ञा आज्ञेयं मामकी द्विजाः । स्नातुं संचिन्तितं तीर्थं सर्वे पितृदिवौकसः ॥
यान्ति पूर्वं स्नातृदत्ततोयग्रहणलिप्सया । ततोऽन्यद्यद्यसौ गच्छेन्निराशास्ते शपन्ति हि ॥
देवखातनदीस्रोतःसरःसु स्नानमाचरेत् । सत्स्वन्येष्वपि तीर्थेषु स्नायात्पादजले हरेः ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । शालग्रामशिलातोये योऽभिषेकं समाचरेत् ॥
स्नातस्यापि न संशुद्धिः सर्वतीर्थेषु भूसुराः । विना पादोदकं विष्णोर्वैष्णवस्य विशेषतः॥
अन्यतीर्थं भवतु वा माऽस्तु वा श्रूयतां वचः । महाभागवतैर्धार्यं स्नाने पादोदकं हरेः ॥
संकुले तीर्थखातस्य न स्नायाद्दुष्टसंकुले । दर्भहीनोऽन्यचित्तस्तु न नग्नो न शिखां
विना ॥ १४८ ॥
अवैष्णवेषु पश्यत्सु शाक्तकापालिकेषु च । न स्नायान्नाऽऽनयेन्नीरं पूजायै वैष्णवो जनः॥
यावन्न दुष्टसंघातो नानादेवनिषेवकः । आगच्छेत्तावदेवायं स्नायाद्वासोद्वयेन वा॥१५०॥
संशोध्य वैष्णवैर्मन्त्रैर्जलेष्वावाह्य केशवम् । पूतं विभाव्य चक्रेण स्नायादनवलोकयन् ॥
श्रीविष्णुचरणाम्भोजस्रुतपीयूषधारया । प्लावितं तीर्थपानीयं विचिन्त्य स्नानमाचरेत् ॥
तत्रैव वीरजातोऽयं कीकटेष्वपि पुत्रकाः । यत्र नारायणायेति मनसा प्रोच्चरेन्मनुम् ॥
म्लेच्छदेशेऽशुचौ स्थाने खरमार्जारदूषिते । उषित्वाऽवैष्णवैर्वापि नाम्ना शुद्धिः प्रकी-
र्तिता ॥ १५४ ॥
पञ्च वा सप्त वा पिण्डान्स्नायादुद्धृत्य वारिणि । अम्बुकृद्दुष्कृतांशेन स्नानकर्ता न
लिप्यते ॥ १५५ ॥
रविसंक्रान्तिवारेषु ग्रहणेषु शशिक्षये । व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा ॥१५६॥
न स्नायाच्छूद्रहस्तेन मद्यमांसनिषेविणा । आहृतैरेकहस्तेन चोद्धृतैर्ब्राह्मणैरपि ॥ १५७ ॥
नाभिमात्रे जले गत्वा चास्त्रेणाऽऽरक्ष्य सर्वतः । प्राणानायम्य संचिन्त्य तीर्थानि रवि-
मण्डले ॥ १५८ ॥
जले षट्कोणमुल्लिख्य बीजं मध्ये विचिन्त्य च । अष्टपत्रं बहिस्तस्य पङ्कजं केसरोज्ज्व-
लम् ॥ १५९ ॥
विचिन्त्याऽऽधारमारभ्य पीठदेवाननुत्तमान् । स्वेष्टदेवं श्रिया सार्धमावाह्य विमले जले॥
मानसैरुपचारैस्तु संपूज्य पुरुषोत्तमम् । जले संचिन्त्य तत्तेजो ह्यन्तरीकृत्य मुद्रया ॥
अभिमन्त्र्य जलं विष्णुगायत्र्या प्रणवेन च । आपो अस्मानिति स्मृत्वा इदं विष्णुरिति
द्विजाः ॥ १६२ ॥
श्रीसूक्तं विष्णुसूक्तं च मूलविद्यां प्रयोज्य च । संप्रोक्ष्य तुलसीयुक्तं मुद्रया कुम्भसंज्ञया॥

स्मरन्गुरुपदाम्भोजमम्भसि स्नानमाचरेत् । प्रवाहाभिमुखं स्नानं गृहे सूर्यमुखं चरेत् ॥
स्नात्वाऽऽचान्तो वारिमध्ये त्रिः पठेदघमर्षणम् । स्नानाङ्गतर्पणं कृत्वा संध्यां कुर्याद्वि-
धानतः ॥ १६५ ॥
जले जलेन पुण्ड्राणि कृत्वा द्वादशसंख्यया । शिखामाबध्य मूलेन गायत्र्या मौनमाश्रितः
ॐ लं केशवाय नमःप्रोच्य तथा नारायणाय च । माधवाय नमश्चैवमाचामेत्सर्व-
कर्मणि ॥ १६७ ॥
गोविन्दाय नमस्तद्वद्विष्णवे च नमो वदन् । कपोलयोर्द्वयोश्चैव विदध्यात्परिमार्जनम् ॥
मधुसूदनाय नमो वदंस्त्रिविक्रमाय च । ओष्ठयोः स्पर्शनं कुर्याद्वामनश्रीधरौ तथा ॥
ङेन्तौ नमोन्तौ ताराद्यौ ताभ्यां संमार्जयेत्तथा । हृषीकेशेन करयोः पद्मनाभेन पादयोः
जलेन स्पर्शनं कृत्वा मूर्ध्नि दामोदराय च । मार्जयेत्कुशवारिभ्यामेभिरङ्गानि संस्पृशेत्
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः । पुरुषोत्तमोऽधोक्षजो नृसिंहोऽच्युत एव च ॥
जनार्दन उपेन्द्रश्च हरिः कृष्णश्च मूर्तयः । आस्ये नसि त्वेकमेकमक्ष्णोर्द्वौ द्वौ च कर्णयोः
हृदि नाभौ त्वथैकैकमुदरे मस्तके तथा । भुजयोर्द्वाविति प्रोक्तो विधिराचमने सुताः ॥
आचामेत्सर्वकार्येषु स्नाने दाने सुरार्चने । संस्पर्शे भाषणेऽसत्सु भुक्त्वा पीत्वा च चर्वणे ॥
रेतोमूत्रशकृन्मोक्षे ह्यधोवायुविमोक्षणे । परिश्रमेऽनृते हास उच्छिष्टजनसंगमे ॥ १७६ ॥
उच्छिष्टस्पर्शनेऽमेध्यदर्शने चाश्रुपातने । रक्तकेशमलस्पर्शे जृम्भायां स्वप्नदर्शने॥ १७७ ॥
छिक्काष्ठीवनसंक्रोधेष्वाचामेच्छुद्धिकाम्यया । उपक्रमोपसंहारे कर्मणो नीविबन्धने ॥
केशवादिभिराचम्य सद्यः शुद्धिमवाप्नुयात् । अकृत्वाऽऽचमनं विप्रो न कर्मफलभाग्भ-
वेत् ॥ १७९ ॥
यथाऽभिषेकजा शुद्धिर्बहिरेव प्रजायते । मन्त्रपूतजलैस्तद्वदाचामे ह्यन्तरा शुचिः ॥
प्राणायामं ततः कुर्यान्मूलेन प्रणवेन वा । नारायणं स्मरन्देवमघमर्षणमाचरेत् ॥१८१॥
शिखां मूलेन संबध्य स्वशाखोक्तविधानतः । संध्यां कृत्वा हरिं ध्यात्वा सूर्यमण्डलम-
ध्यगम् ॥ १८२ ॥
सूर्यमण्डलमध्यस्थमरविन्दकृतासनम् । पीनायतचतुर्बाहुमुत्पलस्रजमच्युतम् ॥ १८३ ॥
दरारिगदयोपेतमुत्फुल्लकरपङ्कजम् । श्रीनिकेतं श्रियं तद्वदनवद्यरुचिं स्मरेत् ॥ १८४ ॥
गायत्रीं वारिसंस्नातो न स्मरेद्यदि केशवम् । न लभेत्कर्मसंसिद्धिं येन याति हरेः
पदम् ॥ १८५ ॥
अनर्हः कृतशौचोऽपि विना नारायणस्मृतिम् । तस्मात्सर्वत्र संयोज्यं भगवत्स्मरणं
सदा ॥ १८६ ॥
यथाऽतिदूरमाख्यातं कर्मज्ञानविवर्जितम् । तथाऽतिदूरमप्युक्तं विना विष्णुस्मृतिं द्विजाः
गायत्रीवारिसंस्नातः प्रणवैर्निर्मलीकृतः । विष्णुस्मरणसंसक्तो ह्यर्हः सर्वेषु कर्मसु॥१८८॥
प्रजपेद्विष्णुदैवत्यां गायत्रीं वेदमातरम् । अष्टाक्षरेण मूलेन ब्राह्मणः शुद्धिकाम्यया ॥

मुनय ऊचुः—

सविता देवता देव्या गायत्र्याः श्रूयते पितः । कथं सा विष्णुदैवत्या संशयं नः पराणुद॥

श्रीब्रह्मोवाच—

आदित्ये पुरुषो योऽसावहमेवेति निश्चितम् । आदित्यस्य शरीरत्वादभेदं श्रुतिरुज्जगौ ॥
सवितृनामको विष्णुः सवितृस्थो विचार्यताम् । सविता देवता तेन गायत्र्याः ख्यायते बुधैः ॥ १९२ ॥
न स्वतन्त्रतया देवो गायत्र्याः सविता मतः । नारायणादेव सर्वमुत्पन्नं श्रुतिरुज्जगौ ॥
तस्मान्नारायणस्वामि यत्किंचिद्दृश्यते जगत् । अतो नारायणपरं ज्ञानं कर्म तपः श्रुतिः ॥ १९४ ॥
सूर्येन्द्राग्नीन्विधिं सोमं रुद्रं वायुं क्षितिं जलम् । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १९५ ॥
विभूतयो हरेश्चैता मन्त्रपीठतया स्थिताः । तदभेदतयोपास्या मुमुक्षुभिरहर्निशम् ॥१९६॥
शङ्खचक्रगदोपेतः किरीटी कुण्डली तथा । सूर्यमण्डलमध्यस्थः सूर्यभेदेन चिन्त्यते ॥
धीनां प्रवर्तकत्वं हि साक्षान्नान्यत्र युज्यते । य आत्मनीति वाक्येन हरिरात्मतया मतः॥
गायत्र्याऽशेषभूतानामादित्यश्चक्षुरुत्तमम् । इति पीठतया विष्णोरादित्यः प्रतिपद्यते ॥
यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमर्हति । तस्य तस्याचलां श्रद्धां तामेव विदधात्यजः ॥ २०० ॥
स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते । लभते च ततः कामान्हरिणा विहितान्हितान् ॥ २०१ ॥
अन्तवत्तु फलं तेषां तद्भवस्यल्पमेधसाम् । देवान्देवयजो यान्ति भक्ता यान्ति हरेर्हरिम् ॥
अव्यक्तं सर्वभूतस्थमात्मानं तमबुद्धयः । परं नैवाभिजानन्ति शरीरेष्वात्ममानिनः ॥
अतो नाऽऽत्मानमात्मस्थं सत्यसंकल्पमच्युतम् । नित्यानन्दगुणोपेतं सर्वज्ञमवधिं हरिम् ॥
प्राप्यं भोग्यं परं ब्रह्म प्राप्नुवन्ति कदाचन । तस्मान्नित्यपदाकाङ्क्षी गायत्रीं विष्णुदेवताम् ॥ २०५ ॥
आराधयति सर्वत्र विधिरेव द्विजातयः । व्यापको भगवानेष व्याप्यं सर्वं चराचरम् ॥
न तदस्ति विना यत्स्याद्वासुदेवेन किंचन । ब्रह्मा शक्रश्च रुद्रश्च गणेशो भास्करस्तथा॥
विचिन्त्या वासुदेवस्य तनुभूता विभूतयः । चतुर्भुजाः शङ्खचक्रगदाजलजधारिणः ॥
नान्यं देवं नमस्कुर्यात्तच्छरीरतया विना । पृथक्त्वेनार्चयन्तो वा मामकास्ते प्रकीर्तिताः
हरेः पीठा हरेर्दासा हरिशेषा द्विजातयः । पृथग्भूताः कथंभूता उपास्या मुक्तिमिच्छता
कैंकर्यं वासुदेवस्य मुक्तिमिच्छन्ति तत्पदे । कथं तैरितरे सेव्यास्तदीयत्वमतिं विना ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे सदाचारनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ २९५२ ॥

---

अथ तृतीयपादेऽष्टमोऽध्यायः ।

---

ब्रह्मोवाच—

ब्रह्मवादः सममवत्पुरा वै मुनयो ननु । विस्मृताः किमिदानीं तं संक्षेपात्प्रवदामि वः ॥

मुनिः कहोलः पप्रच्छ याज्ञवल्क्यं महामुनिम्। आत्मशब्दः समादिष्टः क्षेत्रक्षेत्रज्ञयो-
रपि ॥ २ ॥
ब्रह्मशब्दः समाख्यातः क्षेत्रक्षेत्रज्ञयोरपि। सर्वान्तरश्च यः साक्षादपरोक्षः प्रकीर्तितः ॥
तमाचक्ष्व महाभाग प्राप्यभोग्यतया स्थितम्। उपास्यभूतं सर्वेषामात्मानं परमेश्वरम् ॥

याज्ञवल्क्य उवाच—

क्षेत्रक्षेत्रज्ञयोरात्मा परमात्मा प्रकीर्तितः। शोकमोहजरामृत्युदेहधर्मानतीत्य यः ॥ ५ ॥
एतैः संसृष्टमात्मानं क्षेत्रज्ञं चाप्यतीत्य यः। संस्थितो न विना येन क्षेत्रक्षेत्रज्ञयोर्मनाक्॥
विदित्वा चैनमात्मानं ब्राह्मणाः स्वान्तरस्थितम्। पुत्रवित्तैषणां हित्वा तथा लोकै-
षणामपि ॥ ७ ॥
यदर्थं सकलं हित्वा कृत्वाऽनन्यप्रयोजनम्। अनन्यसाधनं कृत्वा भिक्षार्थं च चरन्ति हि॥
प्रेर्यमात्मानमाज्ञाय प्रेरकं पुरुषं परम्। निर्विद्य सर्वतस्तस्य चोपासांचक्रिरे द्विजाः ॥ ९ ॥
चाक्रायण उषस्तस्तं भूयः पप्रच्छ सादरम्। याज्ञवल्क्यं महात्मानमुपासार्थमकल्मषम्॥
ब्रह्मन्ब्रह्मापरोक्षं यत्साक्षात्सर्वात्मसंस्थितम्। कतमः सोऽन्तरात्मेति समाचक्ष्व यथा-
तथम् ॥ ११ ॥

याज्ञवल्क्य उवाच—

यः प्रयोजनरूपेण सर्वं सर्वत्र जायते। तत्साक्षादपरोक्षं हि शारीरात्मार्थसाधकः ॥१२॥
अपानिति ह्यपानेन व्यानेन व्यानिति ह्यपि। उदानेनोदानिति च समानेन समानिति॥
स आत्मा ह्यान्तरः साक्षाद्ब्रह्म सर्वत्र संस्थितम्। स एव सर्वनामाऽसौ दृष्टिश्रवण-
चेतसाम् ॥ १४ ॥
द्रष्टा श्रोता चेतयिता न तं पश्यति कश्चन। अतो द्रष्टा ह्यदृष्टोऽयमश्रुतश्च शृणोति हि
अविज्ञातो हि विज्ञाता ह्यमतो मनुते मुने। चिदचिद्भूतसंघस्थं सर्वेषां स हि कारणम्॥
एवं श्रुत्वाऽन्तरगतं भगवन्तं मुनीश्वराः। संदिहानाः पुनस्तत्र ह्यप्रच्छन्मुनिपुंगवम् ॥
याज्ञवल्क्यं महाप्राज्ञमात्मतत्त्वबुभुत्सवः। कार्यजातमिदं सर्वं नैकरूपं कदाचन ॥ १८ ॥
परिणामकृतानेकविचित्रावस्थया स्थितम्। ओतं प्रोतमिदं कस्मिन्पटवत्परिनिष्ठितम् ॥
इति विज्ञातुकामा हि गार्गी वाचक्नवी पुनः। पप्रच्छ कस्मिन्संप्रोतमोतमेतच्चराचरम् ॥
तामाह भगवान्वायावोतं वायुश्च कुत्र हि। आकाशे स च कस्मिन्हि अन्तरिक्षे निशा-
मय ॥ २१ ॥
कुत्रान्तरिक्षं द्योलोके द्योलोकः कुत्र सत्तम। आदित्यलोके कुत्रायं चन्द्रलोके च
कुत्र सः ॥ २२ ॥
नक्षत्रलोके कस्मिन्स देवलोके च कुत्र सः। गन्धर्वलोके सोऽप्यस्ति कस्मिँल्लोके प्रजापतेः
लोकः प्रजापतेर्गार्गि ब्रह्मलोके प्रतिष्ठितः। । स च कुत्रेति मा गार्गि ह्यतिप्रश्नं प्रयो-
जय ॥ २४ ॥
ब्रह्मण्येवाखिलाधारे ह्योतं प्रोतमिदं जगत्। तन्तुष्विव पटो गार्गि तस्मादेष परो मतः॥
सद्रूपेण स्थितस्यास्य ह्युपादानतया हरिः। निर्विशेषतया स्वस्मिन्स्थितं विश्वमशेषतः

पटवद्याकरोत्येतन्नामरूपविभागवत् । हर्यधीनतया चास्य स्थितिर्नियमनं तथा ॥२७॥
तस्माज्जिज्ञास्यमेवायमुपास्यः सर्वथा च सः । सूत्रभूतोऽयमेवैकस्तथाऽन्तर्यामिरूपतः ॥
स्थितः सर्वत्र मुनयो हरिरेव न संशयः । प्रविश्यान्तर्यमयति सर्वभूतानि सर्वतः॥ २९ ॥
स्वव्याप्यैस्तैरविज्ञातः शरीरैश्चिदचिद्विधैः । उद्दालको याज्ञवल्क्यमपृच्छत्सूत्रमन्ति-कम्॥ ३० ॥
तथाऽन्तर्यामिणं ब्रूहि याज्ञवल्क्येत्युवाच सः । श्रुतं वदनमाहात्म्यं कबन्धात्काप्यसद्मनि॥
स ब्रह्मदेवदेवात्मयज्ञवित्स्याच्छृणोति यः । याज्ञवल्क्यस्ततः प्राणः सूत्रमुक्तमिहारुणे ॥
भूतानि सर्वाण्यङ्गानि प्राणा दिव्यानि सन्ति हि । स च प्राणो महाभाग संदृष्टो ह्यन्तरात्मना ॥ ३३ ॥
तमन्तर्यामिणं ब्रूहि याज्ञवल्क्येत्युवाच सः । अब्रवीद्याज्ञवल्क्योऽपि तमन्तर्यामिणं द्विजाः ॥ ३४ ॥
पृथिव्यादिषु भूतेषु शरीरेषु व्यवस्थितः । यो वेद तानि नैतानि तं विदुः स्वनियामकम् ॥ ३५ ॥
सोऽन्तर्यामी ह्यात्मभूतश्चामृतोऽव्यक्तनामधृक् । आदित्यचन्द्रादिविद्युल्लोकप्राणेन्द्रियेषु च ॥ ३६ ॥
वेदयज्ञेषु भूतेषु योऽन्तर्यमयति स्वयम् । नैनं विदुः शरीराणि यो वेदात्मतया स्थितः ॥
सोऽन्तर्याम्यमृतश्चाऽऽत्मा परमात्मा हरिः स्मृतः । य आत्मनि स्थितो ह्यात्मा शरीरं यस्य चेतनः ॥ ३८ ॥
आत्मा न वेद यमसौ वेदाऽऽत्मानं परोऽमृतः । यमयत्ययमात्मानमन्तर्यामीति स स्मृतः॥
अदृष्ट एव द्रष्टाऽसौ श्रोता चाश्रुत एव सः । अविज्ञातैव विज्ञाता द्रष्टा श्रोता ज्ञ एव सः॥
नान्यः स्वातन्त्र्यहीनत्वाच्छेषत्वात्तस्य सुव्रताः । अतोऽन्यदार्तं सर्वं हि ऋतमेको हरिः स्वयम् ॥ ४१ ॥
स्वतन्त्रः सर्वशेषीति श्रुत्वाऽऽरुणिरुपारमत् । एवं विनिश्चये जाते सर्वात्मा भगवान्हरिः॥ ४२ ॥
संसिद्धः सर्वभूतानामुपास्यः सद्विभूतिषु । सवितृनामको देवः प्रभामण्डलसंस्थितः ॥
परमात्मा स शारीरः क्षेत्रज्ञोऽन्यो विधीयते । गायत्री सूर्यरूपेण भगवन्तमधोक्षजम् ॥
उपादिदेश भूतानां श्रेयसे बुद्धिबोधकम् । सवितृसंस्थितो देवः सवित्रात्मा सनातनः ॥
तं ध्यायेम परं येन बुद्धयो नः प्रणोदिताः । यथेन्द्रप्राणशब्दैश्च निर्दिष्टो भगवान्हरिः ॥
तथा सवितृशब्देन सवित्रात्मा विधीयते । मुमुक्षवो विचार्यैवं सर्वत्र परमेश्वरम् ॥४७॥
उपासते न संदेहः कर्तव्यः शास्त्रनोदनात् । ब्राह्मणानां विशेषेण गायत्र्या मूलविद्यया
उपास्यो भगवान्विष्णुरुदिते सूर्यमण्डले । अष्टाक्षरो मूलविद्याप्रणवाद्यो मनीषिभिः ॥
निश्चितः सर्वविद्यानां मूर्धन्यः परमो मनुः । अष्टाक्षरेण संयुक्तां गायत्रीं विन्यसेत्तनौ ॥
स एव वैष्णवो विप्रो मतो नारायणात्मकः । विना मूलेन गायत्र्या न विप्रो जायते द्विजाः ॥ ५१ ॥

१ ख. °थ ऽस्य सः°। २ ख. तमन्तर्या°। ३ ख. संदृष्टो ग°।

न विनोपनिषद्‌ज्ञानं गायत्र्यास्तत्त्वविद्भवेत्। अविज्ञाय मनोस्तत्त्वं कर्मबन्धाय केवलम्॥
शतलक्षं प्रजप्ताऽपि गायत्री नैव सिद्धिदा। सिद्धिस्तु सर्वलोकस्य कर्तुः सर्वाश्रयस्य हि॥ ५३॥
वासुदेवस्य वैकुण्ठे पदपल्लवसेवने। विप्रस्य सत्त्वदेहस्य वैकुण्ठपदकाङ्क्षिणः॥ ५४॥
नान्यो देवः समाराध्यो विनाऽऽवरणसत्क्रियाम्। विष्णोरावरणत्वेन शरीरत्वेन वा पुनः॥ ५५॥
विभूतित्वेन भो विप्रा माननीया दिवौकसः। समाधिकविचारेण पृथक्त्वेन दिवौकसाम्॥ ५६॥
आराधनाज्जगद्बन्धो न निवर्तेत कर्हिचित्। विष्णोः समत्वबुद्ध्या च नरो निरयमाप्नुयात्॥ ५७॥
विना दास्यं हरेश्चान्यत्सर्वं निरयसंनिभम्। संसारो निरयः प्रोक्तो यत्र नाऽऽचार्यसेवनम्॥ ५८॥
निरयोऽपि भवेन्मुक्तिर्यत्र गोविन्दचिन्तनम्। अत्र गाथाः प्रवक्ष्यामि निःसंदेहाय भोः सुताः॥ ५९॥
नारायणात्परो नान्यः को हि संसारनाशनः। आसीद्भद्रासनो नाम राजा कोसलमण्डले॥ ६०॥
शशास वसुधां सर्वां पयोधिपटमण्डिताम्। धार्मिको दयया युक्तो वृद्धब्राह्मणसेवकः॥
सत्कीर्तिपटसंवीतसमस्तक्षितिमण्डलः। स कदाचिद्धरेः कोपान्नष्टराज्यो बभूव ह॥
शत्रुभिर्निर्जितः संख्ये जगाम गहने वने। एकाकी जीवरक्षार्थं त्यक्तस्वजनबान्धवः॥
तृषितः क्षुधितो दीनो निमग्नो दुःखसागरे। आसाद्य पुष्पभद्राख्यां नदीं गिरिसमाश्रयाम्॥ ६४॥
तत्र बिल्ववने दीनो निवासमकरोच्चिरम्। तत्र बिल्वेश्वरो नाम महादेवो विराजते॥
आयान्ति तत्र पूजार्थं मुनयो नित्यमेव हि। पूजां कुर्वन्ति शतशो निजकामानुसारतः॥
स्तुवन्ति स्तुतिभिर्देवं हरं चन्द्राङ्कमौलिकम्। तत्रायं तरुजालेषु चकार तृणकेतनम्॥
फलमूलाशनो दीर्घचिन्ताव्याकुलमानसः। चिन्तयामास मतिमान्कथं मे दुःखसंक्षयः॥
भवेदशेषस्वजनैर्विमुक्तस्य दुरात्मनः। क्व दाराः क्व सुताः प्रेष्ठाः क्व राज्यं स्वप्नसंनिभम्॥
क्व मे परिजनाः सर्वे कालेन कवलीकृताः। अहो कष्टमहो कष्टं विनष्टेषु पुनः पुनः॥
धावते मे मनो मोहान्मृगतृष्णोपमेषु च। विजानतोऽपि मे सौख्यं नाऽऽयाति क्षणमेव हि॥ ७१॥
किं जीवितेन मे नूनमिहामुत्र च्युतस्य च। मनो न याति परमे देवदेवे रमापतौ॥ ७२॥
न च राज्यसुखे का मे गतिरन्या भविष्यति। पुष्पभद्रातटे राजा मरणे कृतनिश्चयः॥
बिल्वेश्वरं नमस्कृत्य निषसाद महीतले। एवं चिन्तयतस्तस्य गौतमो मुनिसत्तमः॥
शिष्यप्रशिष्यैः संयुक्त आजगाम यदृच्छया। पर्यटंस्तीर्थयात्रार्थं वसुधां विष्णुवल्लभाम्॥
स्नात्वा भद्राजले पुण्ये दृष्ट्वा बिल्वेश्वरं हरम्। अपश्यन्नृपतिं लीनमुटजे निर्जने मुनिः॥

महाकारुणिको गत्वा तं पप्रच्छ तपोनिधिः । कत्यस्त्वं कुत आयातः कोऽसि खिन्नमना वने ॥ ७७ ॥
भयानके शिवाव्यालव्याघ्रचित्रमृगान्विते । निरन्ने निर्जने देशे कथं गतिरिहाभवत् ॥

भद्रासन उवाच—

भद्रासनेति विख्यातो राजा कोसलमण्डले । शत्रुभिर्निर्जितोऽरण्ये भयादिह वसाम्यहम् ॥ ७९ ॥
जनसंदर्शनाद्भीतः शत्रुचारविशङ्कया । नान्तं दुःखस्य पश्यामि को भवानिह पृच्छति ॥

गौतम उवाच—

अहं तु गौतमो नाम्ना तव भाग्यादिहाऽऽगतः । स्मरस्व दुःखनाशाय शंकरं चोमया सह ॥ ८१ ॥
भुक्तिमुक्तिप्रदो देवो नान्योऽस्ति गिरिजाधवात् । यः संहरति कल्पान्ते त्रिलोकीं लोचनानलैः ॥ ८२ ॥
भक्तानां वरदः सद्यो बिल्वार्ककनकादिभिः । ताण्डवैः स्तवनैस्तालैरक्षतैर्गलवादनैः ॥
विलम्बितफलैर्देवैः किमन्यैरच्युतादिभिः । सद्यस्ते राज्यलाभाय महादेवोऽवधारितः ॥
श्मशानशायी भगवांस्त्रिनेत्रो नीललोहितः । मृडो हिमांशुधवलो वनमालाकृतोरगः ॥
गजचर्मपरीधानः खट्वाङ्गायुधभूषणः । शितिकण्ठोग्रकण्ठश्च हरोऽन्धकविनाशनः ॥८६॥
वृषध्वजो महादेवश्चन्द्रचूडो दिगम्बरः । ज्ञानदो ज्ञाननिरतः पशुपः पार्वतीपतिः ॥ ८७॥
महादेवो धराधीशः पिनाकी पावकाम्बकः । कपर्दी दुष्टदमनो महाकालो महातपाः ॥
समाधिसंस्थितः कामदहनो धारणाश्रयः । नित्योऽक्षरो निरातङ्को धीरो विषधरो भवः॥
अरण्यवासी कैलासकेतनो वटविष्टरः । विभूतिभूषणो भूतिप्रदो भूतिकरो वरः॥ ९० ॥
वाग्ग्मी सत्यव्रतः सत्यः सतीप्राणप्रियो नुतः । यज्ञविध्वंसनो दक्षगर्वभङ्गकरो विभुः ॥
भूतप्रियो भूतनाथो भूतवासो भयापहः । कूष्माण्डभैरवानीकभीषणो भीमदर्शनः ॥
विभीषणो जितामित्रो रावणाराधितः प्रभुः । प्रसन्नवदनो नित्यं धत्तूरोन्मत्तलोचनः ॥
निर्धनो धनदाधीशो निर्वृत्तो निर्मदो मुनिः । बाणप्रियो बाणरुद्धो बाणसद्मनिकेतनः ॥ ९४ ॥
तापत्रयहरो हारी शैलजार्धतनुः स्मृतः । तरुणस्तारिताघौघो गीर्वाणाराधितः शिवः ॥
खेचरः खेचराक्रीडो जटामुकुटमण्डितः । रुद्रो रुद्रो भैरवाख्यो डमरोर्वादनप्रियः ॥
त्रिशूलहस्तो हस्ताब्जविधृतब्रह्मस्तकः । अट्टाट्टहासविध्वस्तशैलशृङ्गोऽहिभूषणः ॥
पादाभिघातसंत्रस्तशेषः कम्पितभूधरः । वेतालवृन्दमध्यस्थः पिशिताशनसंस्तुतः ॥
कपालमाली दुर्दर्शो योगिनीगणनृत्यधृक् । कालभीतिकरो देवो यमदूतभयंकरः ॥
एवं नामावलीं जप्त्वा ध्यात्वा बिल्वेश्वरं हरम् । राजन्बद्धाञ्जलिर्भूत्वा विनिवेद्यं निवेदयेत् ॥ १०० ॥

---

१ ख. °भतः ।

जय विश्वेश्वर श्रीमंस्तरुणार्कनिभेक्षण। जय कालानलोद्दीप्त शत्रुभीतिहरो भव॥१०१॥
जय त्र्यक्ष महाभाग कल्पान्तकृतकेतन। जय दीनार्तिशमन शत्रुभीतिहरो भव ॥
उग्रवीर्योग्रवदन महाभैरवशासन। प्रपदाक्रान्तदिक्प्रान्त शत्रुभीतिहरो भव ॥ १०३॥
त्रिपुरान्तकरोग्रेश चन्द्रचूड पिनाकधृक्। अन्धकान्तकरोदग्र शत्रुभीतिहरो भव॥१०४॥
महाट्टहासवदन द्राविताशेषराक्षस। खट्वाङ्गधर चण्डीश शत्रुभीतिहरो भव ॥१०५॥
नागेन्द्रहार नागेन्द्रसूत्र नागेन्द्रभूषण। जटाविकीर्णवदन शत्रुभीतिहरो भव॥ १०६॥
जय हालाहलास्वादविदग्धारुणलोचन। कन्दर्पहर भूतेश शत्रुभीतिहरो भव ॥१०७॥
कृशानुलोचनज्वालसंदीप्तजगतीत्रय। मृत्युंजयोग्रदंष्ट्रास्य शत्रुभीतिहरो भव ॥ १०८॥
रुण्डमालाचिताभस्मनिस्नात विषभोजन। मदव्याघूर्णनयन शत्रुभीतिहरो भव ॥१०९॥
कल्पान्तकालिकागीतविनोदित महानट। जृम्भाविभ्रान्त लोकेश शत्रुभीतिहरो भव ॥
व्याघ्रचर्मासनारूढ खेचरीभूचरीप्रिय। दिगम्बर दिशाधीश शत्रुभीतिहरो भव॥१११॥
पञ्चाम्नायविचारज्ञ पञ्चाम्नायनिरूपक। पञ्चाम्नायकथागीत शत्रुभीतिहरो भव॥११२॥
सर्वागमप्रजनक सर्वागमनिरूपक। सर्वाव्ययक्षमासार शत्रुभीतिहरो भव ॥ ११३॥
सर्वयोगिजनाराध्य महायोगिन्महोदय। महोदर महापार्श्व शत्रुभीतिहरो भव ॥११४॥
ताण्डवाचार्यनिपुण महाताण्डवकृत्प्रभो। विनोदितसुरव्रात शत्रुभीतिहरो भव॥११५॥
जितनिद्र जितालस्य जितेन्द्रिय जनप्रिय। जितमित्र पवित्राङ्ग शत्रुभीतिहरो भव ॥
परब्रह्म परानन्दपूर्ण पर्वतजापते। भूशण्डीपरिघोपेत शत्रुभीतिहरो भव ॥ ११७॥
पशुपाल महापाशभञ्जन प्राणदायक। परलोकप्रद प्रौढ शत्रुभीतिहरो भव ॥ ११८॥
निरञ्जन निराकार निर्विकार निरामय। निष्कलङ्क निराधार शत्रुभीतिहरो भव ॥
निर्वासन निराभास निष्प्रपञ्च निजेश्वर। निजाक्रीड निजाभास शत्रुभीतिहरो भव ॥
वागतीत जनातीत कालातीत निरङ्कुश। सर्वातीत विनीतेश शत्रुभीतिहरो भव॥१२१॥
गीर्वाणगीत दिक्पाल मौलिमालार्चितारुण। विशुद्धज्ञानविज्ञान शत्रुभीतिहरो भव ॥
सदैकरस शीतांशुशुद्धहासामरप्रिय। दयार्द्र दलितानङ्ग शत्रुभीतिहरो भव॥ १२३॥
गणेशप्रिय गौरीश गोवाहन गुणाकर। गोद गोविन्द गोभक्त शत्रुभीतिहरो भव ॥
कबन्धहर कल्याण कालिताशेषदुर्जन। कासारकौतुकिन्कान्त शत्रुभीतिहरो भव ॥
समदृक्शाश्वतस्वामिञ्शरणागतवत्सल। निर्मुक्तमाय त्रिजट शत्रुभीतिहरो भव॥१२६॥
गुणातीत गुणाधार गुणगीत गुणाधिप। एकान्तवल्लभानन्त शत्रुभीतिहरो भव ॥
नतोऽस्मि चरणद्वंद्वमद्वंद्वं प्रणतोऽस्मि ते। रक्ष रक्ष महादेव शत्रुभीतिहरो भव॥१२८॥
हाहाहूहूवीर्यहारिन्भिन्धि भिन्धि बिभीषण। छिन्धि छिन्धि महाघोरं शत्रुभीतिहरो भव॥ १२९॥
निवारय रयोपेत परशास्त्रास्त्रवैभवम्। निर्भिन्धि परसैन्यानि शत्रुभीतिहरो भव ॥
विद्रावय महावीर वाहनानि सहस्रशः। निपातय महादुर्गमुग्रशत्रुहरो भव ॥ १३१॥
पाशमुद्गरखट्वाङ्गत्रिशूलमुसलायुधैः। पाहि मां परितो देव सर्वतः शरणागतम् ॥
राजसिंहासनाविष्टं जयशब्दैरुदीरितम्। कुरु मां राजराजेशं सर्वतः शरणागतम् ॥

---

१ ख. भुसुंडीप°।

इति स्तोत्रं महाभाग शत्रुप्रशमनाभिधम्। शुचिर्भूत्वा शिवार्चायां प्रजपस्व समाहितः॥
गौतमोऽहमृषिश्चास्य च्छन्दोऽनुष्टुप्प्रकीर्तितम्। देवता भगवान्रुद्रः शत्रुहा बीजमी-
रितम् ॥ १३५ ॥
प्रणवः शक्तिराख्याता पार्वती प्राणवल्लभा। विनियोगाऽस्य संप्रोक्तः शत्रुप्रशमने नृप॥
ॐ नमः कालरूपाय हूं नमः शूलपाणये। महादेवाय वीराय पार्वतीपतये नमः ॥
द्वात्रिंशदक्षरो मन्त्रो महाशत्रुजयः स्मृतः। न्यासार्चनमनेनैव कुर्यात्प्राणान्नियम्य च ॥
शत्रुप्रशमनं स्तोत्रं श्रद्धया प्रपठेत्तु यः। तस्य शत्रुकृता पीडा विनश्यति न संशयः ॥
साङ्गं सावरणं देवं बिल्वेशं पूजयेत्सदा। ॐ नमः कालरूपाय हृदयाङ्गुष्ठयोर्न्यसेत् ॥
ॐ नमः शूलहस्ताय तर्जनीशिरसोस्तथा। शिखामध्यमयोर्देयो वामदेवाय सादरम् ॥
अनामिकाकवचयोर्वीरायेति निवेशयेत्। कनिष्ठिकानेत्रयोश्च पार्वतीपतये तथा॥१४२॥
नमः सतलयो राजन्करयोश्च निवेशयेत्। ततो ध्यानं महेशस्य कुर्यात्कार्यस्य सिद्धये
तेन ते शत्रुसंहारो भविष्यति न संशयः ॥ १४३ ॥

त्र्यक्षं करालवदनं शितशूलहस्तं चन्द्रार्धचूडममराधिपपूजिताङ्घ्रिम्।
गङ्गाधरं धवलभस्मविभूषिताङ्गं गौरीपतिं भयहरं भवमाश्रयामि ॥ १४४ ॥

इति ध्यानं महेशस्य संध्यायां प्रातरेव च। मध्याह्ने कुर्वतां पुंसां नारिसैन्यभयं भवेत् ॥
प्रसन्नोऽयं हरो भक्त्या भुक्तिं मुक्तिं प्रयच्छति। किं शत्रुमात्रशमनं चण्डीशस्य धरा-
धिप ॥ १४६ ॥
इत्युक्त्वाऽन्तर्हितो विप्रः सशिष्यो गौतमो मुनिः। कृतवांश्चन्द्रचूडस्य पूजनं प्रयतो
नृपः ॥ १४७ ॥
प्रेम्णा च श्रद्धया नित्यं त्रिकालमुमया सह। प्रत्यक्षमकरोद्देवं कालेनाल्पेन सेवया ॥
स्वसैन्यं प्रददौ देवो वधाय द्विषतां द्विजाः। स्वराज्ये स्थापयामास भद्रासनमकल्म-
षम् ॥ १४९ ॥
स च भद्रासनो राजा प्रसादात्पार्वतीपतेः। अकरोद्वसुधाराज्यमकण्टकमयत्नतः॥१५०॥
महामन्त्रीव सकलं स्वसैन्येनैव भूतपः। भक्त्या रशनया बद्धो काले कालेऽभिरक्षति ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे सदाचारनिरूपणे भद्रासनाख्यानं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ ३१०३ ॥

---

अथ तृतीयपादे नवमोऽध्यायः।

---

श्रीब्रह्मोवाच—

गते बहुतिथे काले वसुधामनुशासतः। शिवैकशरणस्याथ धार्मिकस्य महीपतेः ॥ १ ॥
ज्ञानं समभवत्तस्य दृष्ट्वा कालस्य चेष्टितम्। क्व गताः पितरोऽस्माकं तथाऽन्ये पितृ-
बान्धवाः ॥ २ ॥
नाम्नाऽपि नैव श्रूयन्ते बहवोऽस्माद्विलोकिताः। ममापि रूपसंपत्तिः क्व गता यौवने
स्थिता ॥ ३ ॥

सामर्थ्यं क्व गतं यच्च परसैन्यविनाशनम् । केशा नैवोपलक्ष्यन्ते स्निग्धाञ्जननिभा मम ॥
वलीपलितसंयुक्तं गात्रं न परिगीयते । यद्वर्णयन्ति कवयो जातरूपसमं मम ॥ ५ ॥
काऽऽननं कमलाकारं कुन्देन्दुधवलद्विजम् । सुन्दर्यपाङ्गसंजुष्टं विकचाम्बुजलोचनम् ॥ ६ ॥
स्वप्नोपममभूत्सर्वं कामिनीकामजं सुखम् । तथाऽपि निस्त्रपं चेतो विषयेष्वनुधावति ॥
आराधितोऽपि गिरिशो मया गौतमशासनात् । मुक्तिं प्रयच्छति प्रीतो महादेवो महा-
द्युतिः ॥ ८ ॥
तन्न पश्यामि मुक्तिर्मे येन स्वात्कर्मणाऽधुना । राज्यसिद्धिस्तु संप्राप्ता मदीया कित-
वैर्हृता ॥ ९ ॥
नाऽऽत्मराज्यं हृतं मन्देरहो मोहानुगैर्भृशम् । कथं तदुपलभ्येत प्रसादात्पार्वतीपतेः ॥ १० ॥
राज्यं कोशो बलं भोगः प्रतापः प्रतिवासरम् । वर्धते ते ह्यलं गेहे वैराग्यं नैव दृश्यते ॥
संसारस्याभिवृद्धिर्मे पूर्वं भगवतः कृपा । निश्चिता कोपरूपाऽद्य सैव मे प्रतिभाति हि ॥
अविच्छिन्नं सुखं यद्धि तदेव भगवत्कृपा । विच्छिन्नरूपा मनसो वृत्तिः कोपो विनि-
श्चितः ॥ १३ ॥
येन संसाध्यते रत्नं सकाचं लभते यदि । व्यर्थं हि सर्वं भवति विनोक्तफललाभतः ॥
कामुकेन मया पूर्वमाराध्येशः प्रसादितः । पलालोपमराज्यार्थं नाऽऽत्मतण्डुलकाम्यया ॥
धिङ्मामकृतसद्बुद्धिमुमया सहितो हरः । आराधितो मया मिथ्या मृगतृष्णाम्बुलि-
प्सया ॥ १६ ॥
अतोऽहं सकलं हित्वा चाऽऽशुतोषमुमापतिम् । आराधयिष्ये सततमात्मकामो महे-
श्वरम् ॥ १७ ॥
एवं निर्बन्धयुक्तस्य राज्यत्यागं प्रकुर्वतः । आविरासीन्महादेवः कैलासादुमया सह ॥
अहमिन्द्रस्तथा चान्ये सिद्धगन्धर्वकिंनराः । शिवेन सह संप्राप्ताः कुमारा नारदस्तथा
कौतुकार्थं महाभागा निर्विण्णस्य महीपतेः । कथं सदाशिवो योगी राज्ञो मुक्तिं विधा-
स्यति ॥ २० ॥
अन्तर्हिताः स्थिताः सर्वे निजैश्वर्यविमोहिताः । वृषध्वजोऽभवन्नेत्रपद्मयोरतिथिः स्वयम्
तं दृष्ट्वा सहसोत्थाय राजा हर्षसमन्वितः । सूपविष्टं कृतातिथ्यं कृताञ्जलिरभाषत ॥
वामदेव महादेव वृषभध्वज गोपते । चन्द्रचूड भवानीश मृड सर्वार्थसाधक ॥ २३ ॥
उपायं वद देवेश कर्तव्यं किमिहास्ति मे । भुक्तिमुक्तिप्रदं देवं गौतमस्त्वाममभाषत ॥ २४ ॥
भुक्तिस्तु देवदेवेश लब्धा मे त्वत्प्रसादतः । मुक्तिमिच्छामि संसारादतस्ते शरणं गतः ॥
उपासनं करिष्येऽहं भवतो हि समाधिना । अनुमोदय विश्वात्मन्ननुज्ञां दातुमर्हसि ॥

श्रीमहादेव उवाच—

नैवंविधोऽहमाराध्यः संसारान्मोक्षमिच्छता । आत्मा मे ह्यपरो राजन्यः सदाशिवसं-
ज्ञितः ॥ २७ ॥
येनाहमखिलं कर्म करोमि तनुसंस्थितः । तं विना नैव पश्यामि क्षणमेकान्तिजां गतिम्
अनुविश्य च मे वाचं चक्षुः श्रवणनासिके । प्राणापानमनोबुद्धिचित्ताहंकरणेषु च ॥

१ ख. °लक्ष्यन्ते° ।

सर्वं कारयति प्राज्ञो भूत्वा सर्वप्रयोजकः । परमात्मा स चास्माकममृतः शाश्वतो हरिः॥
अहं स चास्मि योऽहं वै स च तस्य मनुः स्मृतः । तं मां विज्ञाय सुधियः सेवन्ते बन्ध-
मुक्तये ॥ ३१ ॥
नाहं कैवल्यदो राजन्परतन्त्रः स्वभावतः । स्वतन्त्रः सर्वभूतात्मा परमात्मा रमापतिः ॥
त्वं चाऽऽहं च सुराः सर्वे तनवः परमात्मनः । तमात्मत्वेन सर्वेषां विजिज्ञास विमुक्तये
स्वस्वरूपस्य संप्राप्तिं मुक्तिमाहुर्मनीषिणः । सत्त्वमात्मनि निर्दिष्टं यदायत्तमिदं जगत् ॥
यत्सत्त्वमात्मनि प्रोक्तं तदाधेयतया स्थितम् । विधेयत्वेन निर्दिष्टं शेषत्वेन प्रजापतेः ॥
आधारत्वेन स्थितो यो विधातृत्वेन वा पुनः । शेषित्वेन च राजेन्द्र स चाऽऽत्मा मुक्ति-
मिच्छताम् ॥ ३६ ॥
तमेव शरणं गच्छ सर्वभावेन मानद । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्व-
तम् ॥ ३७ ॥
सर्वभूतेषु यो राजन्नन्तर्यामितया स्थितः । स चोपास्यः प्रयत्नेन यदीच्छेत्परमां गतिम्
स्वान्तरस्थं परात्मानमात्मत्वेन विशां पते । संपूज्याहं प्रमोक्ष्यामि तथा त्वं च तथापरे
आत्मा तु स च सर्वेषां प्राप्यो भोग्यः सनातनः । तमविज्ञाय राजेन्द्र कथं मुक्तिर्भवि-
ष्यति ॥ ४० ॥
नाहमात्मा च सर्वेषां तत्पृथक्त्वेन मानद । मदुपासनया कस्मान्मुक्तिमाकाङ्क्षसेऽनघ ॥
मदन्तर्यामिणं स्वस्य चान्तर्यामितया स्थितम् । विज्ञायैक्यधिया राजन्विमुक्तो भव
संसृतेः ॥ ४२ ॥
एतेनैवोपदेशेन मुक्तिं दास्यामि सेवकान् । आत्मत्वेन तमाराध्य मुक्तो भव विशां पते
चेतनोऽयमणुर्नित्यो जीवो नाऽऽत्मा शरीरिणाम् । नैव प्राप्योऽयमन्येषां भोग्यो भवितु-
मर्हति ॥ ४४ ॥
य आत्मा सर्वभूतानां सर्वशक्तिः सनातनः । सर्वनामा सर्वरूपः सर्वज्ञः सर्वधृग्विभुः ॥
स एव सर्वभूतेषु नामरूपेषु सर्वतः । उपास्यः परमात्माऽसौ पूर्णः पुरुषपुंगवः ॥ ४६ ॥
अहं ब्रह्मा च देवाश्च मुनयो मनवस्तथा । तदात्मका भविष्यामः सर्वे तदनुवर्तिनः ॥
उपास्यामो वयं सर्वे तमेवैकं नराधिप । त्वमप्येनं धिया देवमाराधय जनार्दनम् ॥४८॥
अन्तर्यामितयाऽस्मासु स्वस्मिन्वा चिदचित्सु च । विभूतिषूपदिष्टासु ह्यवतारेषु वा पुनः
निधाय चेतसो वृत्तिमुपास्व सुसमाहितः । कल्याणादिगुणोपेतं सर्वज्ञं सर्वकारणम् ॥
नारायणं परं ब्रह्म परमात्मानमद्वयम् । सर्वावासं निजाधारं पुराणं पुरुषोत्तमम् ॥५१॥
अथ वा त्रिगुणातीते वैकुण्ठे परमे पदे । महाविभूतौ भूतानामगम्ये नित्यसंज्ञके ॥५२॥
शेषपर्यङ्कनिलये स्वयमेव स्थितं हरिम् । नित्यमुक्तजनैः सेव्यं सच्चिदानन्दविग्रहम्॥५३॥
रमया लालितपदं भूलीलाभ्यां विराजितम् । निर्गुणं प्रकृतेर्दूरमनौपम्यमनुत्तमम् ॥५४॥
वेदवेदान्तसिद्धान्तैर्मूर्तिमद्भिरुपाश्रितम् । पञ्चरात्रानुसारेण समाराधय केशवम् ॥५५॥
अस्माकं परमं ध्येयं प्राप्यं भोग्यं परात्परम् । स्वामी स दासभूतानामाश्रयोऽयमुदीरितः॥

मद्रासन उवाच—
किं मां वृथा खेदयसि त्रिलोचन दयानिधे । त्वदन्यं नावदन्मह्यं मुक्तये गौतमो मुनिः॥
ईश्वरः सर्वभूतानामाधारश्चन्द्रशेखरः । कर्ता हर्ताऽविता नित्यो महाशक्तिरुमापतिः ॥
स एव सर्वभूतानां हिताय तनुते तनुम् । गुणातीतः परं ज्योतिर्धूर्जटिर्नापरो मतः ॥
गुरुणाऽभिहितं पूर्वं पश्चात्त्वं दर्शनं गतः । संसिद्धमभवत्सर्वं पूर्वोक्तं राज्यमुत्तमम् ॥
मुक्त्यर्थमपरं देवं कथं मन्ये दयानिधे । अलक्ष्यं सर्वभूतानामन्तर्यामितया स्थितम्॥६१॥
श्रीमहादेव उवाच–
राजन्यद्गौतमेनोक्तमविज्ञाय मतं हरेः । संगोप्य हेतुना केन प्रायः प्रोक्तुं विचिन्तय ॥
यदि ते हृदि संदेहस्तदाऽहं गौतमं मुनिम् । इहाऽऽनयिष्ये राजेन्द्र संकल्पेन विलोकय॥
इत्युक्त्वा शंकरो योगी सस्मार मुनिसत्तमम् । स आजगाम स्मरणाद्यत्राऽऽस्ते भगवान्हरः ॥ ६४ ॥
प्रणम्य चरणोपेतो बद्धाञ्जलिरवस्थितः । पूजितः परया भक्त्या नृपेणाऽऽह हरं वचः ॥
गौतम उवाच—
धन्योऽहं देवदेवेश दत्तं मे गौरवं महत् । त्वया त्रिलोकगुरुणा यत्स्मृतोऽहमकिंचनः ॥
श्रीमहादेव उवाच–
वञ्चितोऽसि महाभाग मायया तत्त्वतो मुने । न जानासि परं गूढं बीजमत्र मया धृतम्॥
देवो हि मत्परः साक्षात्परमात्मा सनातनः । नारायणोऽस्ति जगतां मोक्षदः पुरुषोत्तमः
तं प्राप्य मुनिशार्दूल लोके मुक्ता भवन्ति हि । उपायस्तत्र वै साक्षाद्धरिरेव न चापरः॥
शरणं नैव जानन्ति तस्यैव परमात्मनः । तदेवोपदिशाम्यङ्ग स्वाश्रितान्मुक्तये ननु ॥
अतो मुक्तिप्रदातारो भवामो वयमत्र हि । मुक्त्येकनिलयः साक्षाद्धरिरेव न चापरः ॥
अन्वेषयामो हि वयं साधनैः श्रुतिनोदितैः । स्वायनं स्वनिवासार्थं वयांसीव दिनात्यये ॥ ७२ ॥
सर्वेषामेव चांशानामंशित्वेन परा गतिः । नान्यो जलतरङ्गानामाश्रयोऽस्ति जलं विना
स्वस्वरूपं च गदितं भगवच्छेष एव हि । तमदृष्ट्वा कथं मुक्तो भवेदेष महामुने ॥
स्वरूपस्थः परस्थो वा स्वात्मानं विश्वतोमुखम् । विलोक्य परमात्मानं भवतीति निशामय ॥ ७५ ॥
ब्रह्मादिषु शरीरेषु मुक्तिगम्यो न गम्यते । ऋते पुरुषसंतानो वासुदेवात्सनातनात् ॥७६॥
मदन्तर्यामिणं देवं स्वान्तर्यामिणमेव च । अचिदन्तर्गतं वाऽपि स्मर गौतम मुक्तये ॥
तत्त्वमात्रोपदेष्टारो न वयं मुक्तिसंश्रयाः । एवं त्वयोपदेश्योऽयं राजा ते शिष्यतां गतः ॥
ऐश्वर्यस्यापि दातारो न वयं विद्धि गौतम । षड्गुणसंश्रयो यस्माद्भगवान्पुरुषोत्तमः ॥
अविज्ञातो विभूतिस्थः पूजितो हि प्रयच्छति । विभूतिं मुनिशार्दूल विज्ञातो मोक्षदो मतः ॥ ८० ॥
मयिस्थो भगवानस्य ह्यविज्ञातोऽपि मानद । दत्तवान्परमं राज्यं निष्कण्टकमशेषतः ॥

---

१ ख. मुक्त्यर्थं मुनिभिर्नित्यं चिन्तितोऽसि हृदम्बुजे । निष्कामैः कामनाबद्धैरपि पावकलोचन ॥ ६० ॥

आत्मराज्यप्रदो देवो विज्ञातो हि भवेदिति । अतश्चैनं ममाऽऽत्मानं श्रुत्या स्मृत्या प्रदर्शय ॥ ८२ ॥

गौतम उवाच—

त्वमेव सर्वभूतानामात्माऽसि गिरिजापते । विभूतिभूतास्ते सर्वे श्रुतं मे वदनात्तव ॥
उक्तं च शिवगीतायामगस्त्येन महात्मना । तथा चेश्वरगीतायां शास्त्रे पाशुपतेऽपि च ॥
शिवादन्यो न देवोऽस्ति मुक्तिदो भुक्तिदो नृणाम् । कारुण्यादिगुणोपेतो गुणातीतो निरञ्जनः ॥ ८५ ॥
इदानीमपरं देव देवं वदसि मुक्तये । किं सत्यमिति संदेहमपाकर्तुं त्वमर्हसि ॥ ८६ ॥

श्रीमहादेव उवाच—

अहं मनुरहं सूर्य इत्यादिश्रुतिभिर्मुने । वामदेवेन यत्प्रोक्तमन्तर्यामिधिया हि तत् ॥८७॥
सामानाधिकरण्येन ब्रह्मास्मीति विचिन्त्य च । तद्विशेषणसंपन्नमात्मानं चोक्तवानहम् ॥
आत्मदृष्ट्या मया प्रोक्तं शृणु गौतमसत्तम । नाहमात्मा स्वतन्त्रेण सत्यं सत्यं ब्रवीमि ते
नारायणादेष सर्गः संप्रवृत्तो द्विजोत्तम । नारायणे प्रलीयेत पाल्यते न च संशयः॥९०॥
तस्मान्नारायणो देवो निर्गुणः प्रकृतेः परः । निर्गुणोऽप्यहमेवैकस्तस्याऽऽज्ञां पालयाम्यहम् ॥ ९१ ॥
अधिकारे निविष्टोऽस्मि तामसीं प्रकृतिं गतः । तत्प्रसादेन तत्साम्यं संप्राप्तोऽस्मि महामते ॥ ९२ ॥
तेनैव कारितं सर्वं करोमि तदधीनतः । ब्रह्मा सृजत्यहं हन्मि रविर्भासयतेऽखिलम् ॥
वायुर्वाति नभो मार्गं प्रयच्छति हुताशनः । कालः पचति भूतानि मृत्युर्धावति सर्वतः ॥ ९४ ॥
न तत्र सूर्यः संभाति चन्द्रतारा: क्व विद्युतः । तं भान्तमनुसंभाति तस्य भासा विभाति हि ॥ ९५ ॥
अशिवोऽपि शिवोऽहं वै यत्प्रसादान्मुनीश्वर । दासोऽहं तस्य देवस्य सत्यं सत्यं न संशयः ॥ ९६ ॥
सोऽहं कथं वदिष्यामि तच्छरीरतया विना । परेशसाम्यं वचसा ब्रह्मास्मीति कदाचन॥
दण्ड्यः स्याममरेशोऽपि पूजितोऽपि मनीषिभिः। ततोऽभिन्नतया नैव पौरुषेण बलेन च
यत्तु पाशुपते शास्त्रे गौतमोक्तं मया पुरा । तत्तु तस्याऽऽज्ञया स्वस्य स्वातन्त्र्यं विद्धि निश्चितम् ॥ ९९ ॥
दैत्यानां मोहनार्थाय पाखण्डं धर्ममुक्तवान् । न तद्विश्वसनीयं स्यान्मुमुक्षूणां मनागपि॥
तामसानि पुराणानि शास्त्राणि च महामते । स्मृतयोऽपि भवन्तीह कानिचिज्जगतीतले
विष्णुनाऽपि प्रयुक्तानि मोहनार्थं सुरद्विषाम् । वाक्यानि च बहून्यङ्ग तामसानि न संशयः ॥ १०२ ॥
तत्र मत्प्रमुखा देवाः स्वात्मसाम्यतया मताः । क्वचित्ततोऽधिकाः प्रोक्ता मोहनार्थं महामते ॥ १०३ ॥

इदं सत्यमिदं सत्यं गौतमात्र वदाम्यहम् । नारायणो ममाऽऽधार आधेयोऽहं निशामय॥
बाहुमुद्यम्य वक्ष्यामि न त्राणं विद्यतेऽपरम् । नारायणपदाम्भोजमृते मुक्तनिषेवितम् ॥
श्रुत्वेदं गौतमो देवाच्छंकरादात्मनो हितम् । बभूव शरणापन्नो वासुदेवस्य शार्ङ्गिणः ॥
बोधयामास राजानं तत्त्वं वेदान्तसंमतम् । न बोधमगमद्राजा मुनयो जातसंशयः ॥
भूयः शिवः समाहूय निजभक्तमुमापतिः । प्रबोधमकरोत्तस्य कृपया शिवगीतया ॥
विज्ञाय परमात्मानमुपास्यं मुक्तिमिच्छता । राजाऽपि शरणापन्नो बभूव शिवशासनात्॥
तदा देवगणाः सर्वे व्योमाङ्गणविहारिणः । प्रकाशमगमन्मूर्ध्नि किरन्तः सुमसंततिम् ॥
धन्योऽयं नृपतिः सिद्धः शिवभक्त्या महीतले । बहूनां जन्मनामन्ते प्रपन्नो जायते हरिः
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिज्जानाति माधवम्
शास्त्रं विजानतां मध्ये कश्चिदेव नराधिप । प्रपन्नो जायते लोक आकारत्रयसंयुतः ॥
त्वं तु राजञ्शिवादेशात्स्वात्मानं पुरुषोत्तमम् । विज्ञाय परमैकान्तभागं गन्तुमिहेच्छसि
अतोऽद्य प्रणताः सर्वे त्वामेकं विष्णुदैवतम् । गन्तासि नः समुल्लङ्घ्य धाम वैकुण्ठम-
द्वयम् ॥ ११५ ॥
दुर्लभं निर्गुणं धाम राजन्वैकुण्ठमन्दिरम् । स्वाधिकारस्थितानां नस्त्वं तु सद्यो गमि-
ष्यसि ॥ ११६ ॥
यत्र त्रैलोक्यजननी श्रीदेवी पुत्रवत्सला । क्रोडी करिष्यति क्षिप्रं विमुक्तं घोरसंसृतेः ॥
यतो नाऽऽवर्तते घोरे संसारे शरणं गतः । तदेव वैष्णवं धाम विमुक्तिपदमुच्यते ॥११८॥
अन्तर्गतास्ततः सर्वे ब्रह्माद्या ये समागताः । महाभागवतं नत्वा शिवोऽपि कृतमङ्गलः॥
अहो मद्भक्तवर्गेषु निष्पन्नो ह्ययमञ्जसा । आत्मानमध्यगात्प्रेम्णा येनेदमखिलं ततम् ॥
प्रदर्श्य वैष्णवं तेजो महादेवो निजं महत् । कैलासमगमद्देव्याः प्राप्यं भोग्यं निरूपयन्॥
राजाऽपि वैष्णवीं दीक्षामवाप्य गिरिजाप्रियात् । उपारमत कृत्येभ्यः श्रीपतिं शरणं गतः
य एतत्प्रातरुत्थाय वैष्णवः शिवभाषितम् । शृणुयाच्छ्रावयेद्वाऽपि मुच्यते ह्यन्यसाधनात्
मुनयोऽतः स्मृतः सर्वमन्त्रैराराध्यते हरिः । गायत्र्या तु विशेषेण यस्यां बुद्धिप्रवर्तकः ॥
मुमुक्षवो महाभागा विष्णुं सर्वात्मरूपिणम् । समर्चयन्ति संभूता न संभूतिमुपासते ॥
आत्मा वाऽरेति मन्त्रेण मन्तव्यो भगवान्हरिः । श्रोतव्यश्चानुसंधेयो नमस्यो मुक्तिमि-
च्छता ॥ १२६ ॥
यथा संसेचनं मूले पोषायाखिलवीरुधाम् । तथा संसेवनं विष्णोस्तोषाय भवति ध्रुवम्॥

मुनय ऊचुः—

पितामह समाचक्ष्व हरगीतामनन्दिताम् । येन संदेहमुन्मुच्य गौतमेन समं नृपः ॥१२८॥
महाभागवतत्वं च संप्राप्तो विश्वभेषजम् ॥ १२९ ॥

श्रीब्रह्मोवाच—

उपरिष्टात्प्रवक्ष्यामि हरगीतामनिन्दिताम् । शृण्वन्तु मुनयस्तावदाह्निकं विष्णुभाषितम्

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे सदाचारनिरूपणे परमात्मतत्त्वनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ ३२३२ ॥

अथ तृतीयपादे दशमोऽध्यायः ।

श्रीब्रह्मोवाच—

संध्यां कृत्वा विधानेन मुनयो विष्णुदेवताम् । सूर्यमण्डलमध्यस्थामर्घ्यं दद्यात्समाहितः
चतुर्व्यूहात्मकं सर्वं स्मृत्वा विश्वं जले जनः । तर्पयेद्देवमनुजपितॄंस्तिलकुशोदकैः ॥ २ ॥
कुशैस्तु सर्वदा कार्यं तिलैस्तूक्तदिनेषु च । तर्पणं च प्रकर्तव्यं विष्णोराज्ञानुसारतः ॥३॥
सप्तम्यां रविवारे च मातापित्रोर्मृतेऽहनि । तिलैर्न तर्पणं कुर्यात्कुर्वाणः पितृहा भवेत् ॥
संक्रान्त्यादिनिमित्तेषु स्नानाङ्गे तर्पणे तथा । तिथिवारनिषेधेऽपि तिलैस्तर्पणमाचरेत् ॥
श्रीविष्णुपादतीर्थेन तुलसीमिश्रितेन तु । पितॄणां तर्पणं कार्यं सर्वकालेषु धीमता ॥ ६ ॥
सदा पूर्वाग्रदर्भेषु साग्रदर्भकुलेषु च । प्रादेशिकेषु शुद्धेषु ब्रह्मादिभ्योऽम्बु निक्षिपेत् ॥७॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु । दक्षिणं जानु भूलग्नं देवेभ्यः सिञ्चये ज्जलम् ॥ ८ ॥
देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा । तर्पणे तर्पयामीति णिजन्तमिति वा वदेत् ॥ ९ ॥
देवास्तृप्यन्तु पितरस्तृप्यध्वमिति चापरे । देवान्सव्येन दातव्यं जलं पूर्वमुखेन वै ॥१०॥
दक्षिणाभिमुखो भूत्वा पितॄनावाह्य मन्त्रतः । द्वाभ्यां कराभ्यां दातव्यमपसव्योपवीतिना ॥ ११ ॥
दक्षिणाग्रकुशेष्वेव सव्यपातितजानुना । विना रूप्यसुवर्णाभ्यां विना ताम्रतिलैरपि ॥१२॥
विना दर्भैश्च मन्त्रैश्च विनोर्ध्वतिलकं तथा । विना श्रीपादसलिलं तुलसीमिश्रितं विना॥
नैव तृप्यन्ति पितरः कोटितीर्थजलैरपि । दर्भैर्लोहितदर्भैश्च काशवीरणबल्वजैः ॥ १४ ॥
शूकधान्यतृणैर्वाऽपि दर्भकार्यं समाचरेत् । अभावे सर्वदैवैषां भावेऽपि मुनिसत्तमाः ॥
तुलसीमञ्जरीपत्रकाष्ठेष्वेकतरेण वै । न तर्पयेत्पतन्तीभिर्विद्वानद्भिः कथंचन ॥ १६ ॥
पात्रस्थाभिः सदर्भाभिः सतिलाभिश्च तर्पयेत् । वसूनष्टौ महाभागान्रुद्रानेकादशापि च॥
आदित्यान्द्वादश तथा विभूतिमवगत्य च । अन्तर्यामितया वाऽपि तर्पयेत्प्रयतो द्विजः॥
ध्रुवो धरश्च सोमश्चाप्यापश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः॥
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ शंकरः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः । एते रुद्राः समाख्याताः संकर्षणविभूतयः॥
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा । अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ॥ २२ ॥
एते वै द्वादशाऽऽदित्या ह्यनिरुद्धात्मका मताः । एवं हि दिव्याः पितरः पूज्या विष्णुविभूतयः ॥ २३ ॥
कव्यवाहोऽनलः सोमो यमश्चैव तथाऽर्यमा । अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि वा ॥ २४ ॥

---

१ °र्मं कुर्वाणः सि° । २ ख. °जन्तं शब्दमुच्चरेत्° ।

एते चान्ये च पितरः पूज्याः सर्वे मनीषिभिः। एतैस्तु तर्पितैः सर्वे पुरुषास्तर्पितास्त्विह ॥
आदौ संतर्पयेद्देवान्मनुष्यांस्तु तथा पितॄन् । पिता पितामहश्चैव तथैव प्रपितामहः॥२६॥
प्रद्युम्नसंकर्षणकवासुदेवस्वरूपकाः। अनिरुद्धस्वरूपोऽयं तर्पयेत्तान्क्रमात्पुनः ॥ २७ ॥
माता पितामही चैव तथैव प्रपितामही । रतिवारुणीरुक्मिणीरूपास्तर्पणीयाः क्रमादिमाः ॥
तथा मातामहादींश्च तत्पत्नीश्च तथैव हि । त्रिभिस्त्रिभिरञ्जलिभिरेकैकमभितर्पयेत् ॥
भ्रातॄन्पितृव्यांस्तत्पत्नीः सखिसंबन्धिबान्धवान् । स्वजनाञ्ज्ञातिवर्गीयानुपाध्यायान्गुरूनपि ॥ ३० ॥
मित्रभृत्यानपत्यानि ये भवन्ति तदाश्रिताः। वैष्णवो लोकशिक्षार्थमन्तर्यामितयाऽर्चयेत्
जलस्थश्च जले सिञ्चेत्स्थलस्थश्च स्थले तथा । पादौ स्थाप्योभयत्रापि प्रक्षाल्योभयतः शुचिः ॥ ३२ ॥
देवतानामृषीणां च जले दद्याज्जलाञ्जलीन् । असंस्कृतप्रमीतानां स्थले दद्याज्जलं पुनः
जलाञ्जलित्रयं दद्याद्येचान्ये संस्कृता भुवि । असंस्कृतप्रमीतानामेक एव तटे क्षिपेत् ॥
यज्जले शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा। कुर्याद्धोमं जपं दानं तत्सर्वं निष्फलं भवेत्॥
नाऽऽर्द्रवासाः स्थलस्थस्तु बुद्धया तर्पणमाचरेत् । जानुदघ्नजलस्थो वा विगलत्स्नानवस्त्रकः ॥ ३६ ॥
नाभिमात्रे जले स्थित्वा स्नानसंध्यादिकाः क्रियाः । कर्तव्यास्तर्पणं तीरे जले संविश्य वा स्थितः ॥ ३७ ॥
द्वौ हस्तौ संयुतौ कृत्वा पूरयेदुदकाञ्जलिम् । गोशृङ्गमात्रमुद्धृत्य जलमध्ये क्षिपेज्जलम् ॥
आकाशे निक्षिपेद्वारि जलस्थो दक्षिणामुखम् । पितॄणां स्थानमाकाशं दक्षिणा दिक्तथैव च ॥ ३९ ॥
स्थलगो नाऽऽर्द्रवासास्तु कुर्याद्वै तर्पणादिकम् । व्रतावृते नाऽऽर्द्रवासाः कुर्याद्वै तर्पणादिकम् ॥ ४० ॥
प्रैताद्दतेनाऽऽर्द्रवासा नैकवासाः समाचरेत् । निष्फलं जायते कर्म कृतं यत्त्वेकवाससा ॥ ४१ ॥
सव्यादंसात्परिभ्रष्टं नाभिदेशे व्यवस्थितम्। एकं वस्त्रं तु तद्विद्याद्दैवे पित्र्ये च कर्मणि ॥
तर्पणेन विना वस्त्रं स्नानीयं नैव पीडयेत् । निष्पीडितं धौतवस्त्रं स्कन्धे नैव तु धारयेत् ॥ ४३ ॥
निष्पीडयेन्न त्रिगुणीकृतं वस्त्रं द्विजोत्तमाः । आर्द्रवस्त्रमधस्तात्तु स्नात्वा नोत्तारयेद्बुधः ॥ ४४ ॥
पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे । ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यं तु सौमिकम् ॥ ४५ ॥
ब्राह्मं पश्चिमलेखायां दैवं ह्यङ्गुलिमूर्धनि । प्राजापत्यं कनिष्ठादौ मध्ये सौमं निबोधत ॥
अङ्गुष्ठस्य प्रदेशिन्यां मध्ये पित्र्यं प्रतिष्ठितम् । कुर्यादहरहश्चैव सम्यकृत्वा विधानतः ॥

---

१ ख. °स्तु संध्यात°।

स्नात्वा दैवं च पित्र्यं च नित्यं कुर्याद्विचक्षणः । अन्तर्यामिविमूर्त्यादिदृष्टया विष्णोरनुज्ञया ॥ ४८ ॥
विष्णोरनुचराणां च प्रभोराज्ञानुपालनम् । कर्तव्यं न गुरुत्वेन भिया सामान्यया धिया ॥
देवान्तरे हरेः श्रैष्ठ्यं गुरुत्वं न भयं पुनः । देवोऽयं मे विना सर्वां धर्माद्यं विधमेदिति ॥
यथा विष्णुस्तथा चान्यः किमाधिक्यं तदर्चने । इति सामान्यधीर्विष्णौ विज्ञेया मोक्षनाशिनी ॥ ५१ ॥
विष्णुपादप्रपन्नानां न भयं विद्यते क्वचित् । शङ्खचक्रादयस्तस्य रक्षन्ति निभृतं तनुम् ॥
न कार्यं विद्यते किंचिद्विनाऽऽज्ञापरिपालनम् । स एव प्रेरको विप्रा आज्ञा चाव्याहता मता ॥ ५३ ॥
आज्ञया प्रेरितश्चाहमिति संकल्प्य वैष्णवः । स्नानदानादिकं कर्म कुर्याद्यावत्स्थितिर्भवेत्
यतो भक्तिरखण्डा हि दर्शनप्रतिमा हरेः । तस्मात्स्वभावतः प्रातः कुर्याद्विष्णोरनुज्ञया ॥
सर्वस्वामिनमात्मानं मत्वा नारायणं हरिम् । तच्छेषभूतमखिलं दासभूतमिदं जगत् ॥
एवं संविदुषो विप्रा देवान्तरसमर्चनम् । कथं समधिकत्वेन भवेदिति विचिन्त्यताम् ॥
अथाष्टदलमध्यस्थं देवं संतर्पयेद्द्विजाः । तुलसीचन्द्रमिश्राम्बुसेचनैः परमादरात् ॥ ५८ ॥
आधारशक्तिमारभ्य वक्ष्यमाणक्रमेण च । चतुर्विधं तु वैकुण्ठं नित्यमुक्तपरिच्छदान् ॥
श्रीविग्रहाङ्गभूषाभिः शक्त्यायुधसुवाहनैः । प्रणवादिद्वितीयान्ततर्पयामीति संयुतैः ॥६०
नाममन्त्रैः पृथक्कुर्यात्तर्पणं ध्यानतत्परः । तत्पादाम्बुरुहाकाङ्क्षी महाविद्यानिषेवकः ॥
एवं स्नात्वा गृहीत्वाऽम्भः कलशेन विचक्षणः । पूजार्थं देवदेवस्य यागमण्डपमाविशेत् ॥
घण्टाशङ्खमृदङ्गानां निर्घोषैर्ब्रह्मवादिनाम् । महोत्सवेषु सर्वेषु जलं नेयं जलाशयात् ॥
धृतोर्ध्वपुण्ड्रैः कलशैः शुक्लवस्त्रावृताननैः । पुष्पमालावृतैस्तोयमुद्धार्यं वैष्णवोत्तमैः ॥
जलाशयसमीपं तु क्षालयेद्गोमयाम्भसा । अस्त्रेण द्वादशार्णेन तत्राऽऽधारं तु धारयेत् ॥
इमं मे गङ्गेतिऋचा जलमामन्त्र्य वैष्णवः । क्षालयेत्कलशं शुद्धमापो अस्मानिति स्मरन्
अथवा मूलमन्त्रेण द्वयमन्त्रेण साधकः । समुद्रज्येष्ठामन्त्रेण गृह्णीयाच्छिरसाऽथ वा ॥
उदुत्तमेति वस्त्रेण मुखमाच्छाद्य वैष्णवः । शिखया चाथ मूलेन प्रसम्राजेति सूक्तकम् ॥
प्रजपन्कवचेनापि पूजामन्दिरमाविशेत् । धान्योपरि तथा कुम्भान्न्यसेद्दक्षिणतो हरेः ॥
तत्र संपूज्य मन्त्रेण धूपदीपाक्षताङ्कुरैः । एवं जलं समानीय द्वारदेवान्प्रणम्य च॥७०॥
स्वासनं तत्र संस्तीर्य स्मृत्वा गुरुपरम्पराम् । आदाय तिलकद्रव्यमूर्ध्वपुण्ड्राणि धारयेत्

मुनय ऊचुः—

किं स्थानमूर्ध्वपुण्ड्राणां किं द्रव्यं काश्च देवताः । को मन्त्रः किं फलं ब्रह्मन्किं कर्तव्यं तदुत्तरम् ॥ ७२ ॥

ब्रह्मोवाच—

मत्पुत्रो नारदो योगी पुरा मत्संनिधौ हरिम् । पृष्टवान्परया भक्त्या तदेवाहं ब्रवीमि वः

नारद उवाच—

वासुदेव जगन्नाथ भगवन्पुरुषोत्तम । किं मुख्यं वैष्णवानां तु वैष्णवत्वविधायकम् ॥

श्रीवासुदेव उवाच—

धारणं चोर्ध्वपुण्ड्राणामेकादश्यामुपोषणम् । तदीयानामर्चनं च वैष्णवत्वमिदं स्मृतम् ॥

नारद उवाच—

ऊर्ध्वपुण्ड्रविधिं द्रव्यं मन्त्रस्थानादिसंयुतम् । ब्रूहि मे देवदेवेश यथाऽहं धारयाम्यहम् ॥

श्रीवासुदेव उवाच—

श्वेतं पीतं तथा रक्तं द्रव्यं तु त्रिविधं स्मृतम् । पुण्ड्राणां धारणे विप्र मयैव प्रकटीकृतम्
तेषु रक्तं श्रिया देव्या मत्स्नेहात्प्रकटीकृतम् । श्रीकुङ्कुमेतिविख्यातं सदा माङ्गलिकं मुने
केवलं मुक्तिदं पुंसाममङ्गलविनाशनम् । पुण्ड्राणामन्तरालस्थं मुक्तिदं मुनिसत्तम ॥
समुद्रमन्थनोद्भूता कमला मम वल्लभा । यदा तदाऽब्धिना पित्रा दातुं मे समलंकृता ॥
सुरासुराणां मध्ये च स्वयंवरविधानतः । दातुं कन्यां कञ्जकरां समुद्रः समुपस्थितः ॥
सा तमालोक्य देवेशमात्मनो हितमीश्वरम् । प्रेमातिशयतो नेत्रादम्भोबिन्दूनमुञ्चत ॥
तेनाभूद्वीरुधः प्रेमनियतः परमाद्भुतः । तेनैव सा हरिं प्राप्ता वीरुधेन स्वयंवरे ॥ ८३ ॥
हरिं द्राति परप्रेम्णो निजार्थोऽत्र विचार्यताम् । प्रापणाच्च हरेः साक्षाद्धरिद्रेयं प्रकीर्तिता
लक्ष्म्याः प्रेमतरुः साक्षाद्धरेरत्यन्तवल्लभः । संवीक्ष्य चिह्नितं तेन भक्तं प्रीणाति केशवः
लक्ष्मीप्रेमात्मकं द्रव्यं साक्षात्किं न करोति च । धनं धान्यं समृद्धिं च रूपसौभाग्य-संपदम् ॥ ८६ ॥
विवाहव्रतबन्धादिजन्मयात्रासु युज्यते । द्रव्यं माङ्गलिकं साक्षाद्धरिद्रं प्रेमभाजनम् ॥
या नारी भालदेशे तु बिभर्ति प्रत्यहं द्विजाः । सा नारी लभते भाग्यं सुखं च निज-मन्दिरे ॥ ८८ ॥
लक्ष्मीर्न मुञ्चति प्रेम्णा पार्श्वं तस्य त्वहर्निशम् । प्रयच्छति वरान्प्रीता जायते पति-वल्लभा ॥ ८९ ॥
लक्ष्मीप्रेमसमुद्भूते हरिद्रे हेमसंनिभे । बिभर्मि त्वां महाभागे वरदा भव ते नमः ॥ ९० ॥
इति मन्त्रेण या नारी श्रीचूर्णमभिमन्त्रितम् । स्नात्वा धारयते नित्यं सा लक्ष्मीव विराजते ॥ ९१ ॥
लक्ष्मीरूपमिदं द्रव्यं पुण्ड्रमध्ये बिभर्ति यः । दास्यं स लभते विष्णोः सत्यं सत्यं ब्रवी-म्यहम् ॥ ९२ ॥
पुण्ड्ररूपेण मां विद्धि रेखारूपेण वै श्रियम् । संधारयन्ति ये भाले बाहुवक्षस्थलादिषु ॥
ज्ञानिनो मुक्तये चूर्णं पुण्ड्रमध्ये बिभर्ति यः । स प्रियो ह्यावयोर्भूत्वा मामकं धाम-याति हि ॥ ९४ ॥
अज्ञोऽपि ज्ञानसिध्यर्थं मुक्यर्थं चापि यो भजेत् । ज्ञानं मुक्तिमवाप्नोति रहस्यं ते ब्रवी-म्यहम् ॥ ९५ ॥
हरिद्रासंभवं चूर्णं टङ्कणेन समन्वितम् । भावितं चाम्लद्रव्येण रक्तत्वमुपयाति हि ॥९६॥
वैवाहिकेषु योगेषु स्नात्वाऽऽमलकवारिणा । संस्मृत्य परमां देवीं कमलां मम वल्लभाम् ॥

१ ख. °म्णा निजर्थोत्र° । २ ख °र्थे भक्त° । ३ ख. °नं भक्ति° ।

हिरण्यवर्णाममलां वसुपात्रकरद्वयाम् । मातुलुङ्गधरां देवीं गन्धद्वारां मनोरमाम् ॥९८॥
पूजार्थं तव देवेशि वैकुण्ठप्राणवल्लभे । आज्ञां देहि महामाये श्रीचूर्णं साधये यथा ॥
हिरण्यवर्णेति ऋचां पञ्चकेन महामनाः । प्रोक्षयेद्रजनीद्रव्यं पञ्चगव्येन साधयेत्॥१००॥
अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठ्य च । पञ्चामृतेन संस्नाप्य तक्रमध्ये च निक्षिपेत् ॥
भूमिं संलिप्य तद्भाण्डं स्थापयेन्मृन्मयोद्भवम् । रात्रौ संरक्षयेद्दुष्टच्छायातो हृष्टमानसः
ग्रन्थीनां तक्षणं कुर्यादितिवा सूक्तमुच्चरन् । द्वितीये मृन्मये भाण्डे छायाशुष्कं विधाय च ॥ १०३ ॥
प्रातः स्नात्वा शुचिर्भूत्वा नित्यकर्म विधाय च । पात्रमुद्धृत्य हृन्मन्त्रं जप्त्वा कुर्याद्बहिस्ततः ॥ १०४ ॥
भावयेन्मूलद्रव्येण शुद्धनिम्बूद्भवेन च । अर्धपिष्टेन वा तत्र टङ्कणं दापयेद्बुधः ॥१०५॥
दत्त्वा चैरण्डपत्राणि मुखे मारुतवर्जिते । प्रदेशे स्थापयेद्यावद्रक्तत्वमुपजायते ॥ १०६ ॥
तावद्विधूपयेन्नित्यं यथा छायां न संक्रमेत् । पश्चात्संशोधयेत्तेन शिलया चूर्णयेद्दृढम् ॥
सुगन्धस्नेहलेशेन भावयेच्चन्द्रकेण वा । देव्याः प्रीतिकरं चूर्णं निष्पन्नं जायते यदि ॥
वासयेन्मालतीपुष्पैस्तिलानिव महात्मना । यावत्संपद्यते गन्धः श्रीचूर्णे कमलाप्रिये ॥
निष्पाद्य मङ्गलद्रव्यं मृष्टपात्रे च धारयेत् । पूजयेद्विविधोपायैस्तथा नीराजयेन्निशि ॥
द्वादश्यां जन्मसमये श्रीदेव्याः प्रयतो नरः । संपूज्य परमां देवीं सर्वाभरणसंयुताम् ॥
इदं द्रव्यं मया देवि प्रीत्या निष्पादितं तव । स्वीकुरुष्व महामाये विष्णुपत्नि नमोऽस्तु ते
धारणार्थं पृथक्कुर्याद्बिल्वपात्रं विशेषतः । श्रिये जातेति वाक्येन बिमृयादिति मे मतम्॥
पुण्ड्रार्थं श्वेतद्रव्यं हि समानीतं गरुत्मता । श्वेतद्वीपान्महाभाग मलयाद्रौ निवेशितम् ॥
मलयाद्रिसमुद्भूतां मृदमादाय वैष्णवः । करोति चोर्ध्वपुण्ड्राणि स ऊर्ध्वपदमश्नुते ॥
यस्य भाले हरेर्नाम श्वेतद्रव्येण दृश्यते । अन्तकाले मृतो याति श्वेतद्वीपं स पातकी ॥
न तथा वल्लभं विष्णोश्चन्दनं कुङ्कुमान्वितम् । यथा मलयकूटस्थं मृद्द्रव्यं चन्द्रपाण्डुरम् ॥ ११७ ॥
विष्णोर्ललाटे यः प्रेम्णा करोति तिलकं मुदा । श्वेतद्वीपमृदा नित्यं स प्रियः कमला यथा ॥ ११८ ॥
स्नाने दाने प्रयाणे च श्राद्धे पर्वणि मङ्गले । होमे सुरार्चने पुण्या श्वेतद्वीपामला मही॥
श्रीगोपीचन्दनं नाम पीतद्रव्यं महामते । वैकुण्ठलोकादानीतं द्वारकायां प्रतिष्ठितम् ॥
सर्वेषां गोपनाद्गोपो वासुदेवोऽहमेव हि । अनन्ताः शक्तयो गोप्यो मदीया एव नारद ॥
मदङ्गलेपितं पुण्यं वैकुण्ठे कुङ्कुमान्वितम् । गोपीभिः क्षालितं तस्माद्गोपीचन्दनमुच्यते
मदङ्गलेपनं पुण्यं चक्रतीर्थे प्रतिष्ठितम् । पीतं चक्रसमायुक्तं चन्दनं मुक्तिदं धनम् ॥
मदङ्गलेपनं पुण्यं धृत्वा करतले पुनः । संप्रोक्ष्य विष्णुगायत्र्या द्वादशार्णेन वा पुनः ॥
विष्णोर्नुकं पठन्पाणौ मर्दयेद्भक्तिमान्नरः । धारयेदूर्ध्वपुण्ड्राणि ललाटादिस्थलेषु च ॥
ललाटोदरहृत्कण्ठकुक्षिबाह्वंसकेषु च । कुक्षिबाह्वंसदेशेषु वामभागेषु नित्यदा ॥१२६॥

१ ख. °त शोध° । २ ख. °येद्राम्ल द्र° । ३ ए. °निम्बोद्ग° । ४ ख. शोध्य यत्नेन° ।

पृष्ठग्रीवाब्रह्मरन्ध्रे पुण्ड्राणि विनिवेशयेत्। केशवादिमहामन्त्रैर्देवास्तत्र त एव हि ॥
प्रणवाद्या नमोन्ताश्च मन्त्रा द्वादशसंख्यया। केशवश्च तथा नारायणो माधवसंज्ञकः॥
गोविन्दो विष्णुरित्युक्तो मधुसूदनवामनौ। श्रीधरश्च हृषीकेशः पद्मनाभो महामुने ॥
दामोदरो वासुदेवो निजाङ्गेषु निवेशयेत्। रेखाः पादयुतास्तिस्रः पुण्ड्रा ज्ञेया महामते॥
प्रणवावयवास्तिस्रस्त्रयः कालाः प्रकीर्तिताः। तिस्रो व्याहृतयस्त्रीणि च्छन्दांसि ज्वलनास्त्रयः॥ १३१॥
त्रीणि तत्त्वानि पुण्ड्रेषु चिन्तनीयानि सूरिभिः। पुण्ड्रमध्यस्थिता रेखा रक्तवह्निशिखोपमा॥ १३२॥
नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा॥
विष्णुपत्नीं विजानीयात्साक्षात्त्रैलोक्यमातरम्। विशिष्टः परया शक्त्या पुण्ड्ररूपेण माधवः॥ १३४॥
भावयन्त्यपरे भक्ताः पुण्ड्रं तु हरिमन्दिरम्। लक्ष्मीनारायणं तत्र बुद्ध्या ध्यायन्ति नित्यशः॥ १३५॥
धृत्वा पुण्ड्राणि गात्रेषु ब्रह्माहमितिभाविनः। विमुक्ता यान्ति मद्भावं शाश्वतं हेयवर्जितम्॥ १३६॥
चिदचिद्व्यापकं ब्रह्म परमात्मेति कथ्यते। व्याप्यभूतद्वयं ह्येतच्छरीरमभिधीयते॥१३७॥
आत्मानमपि तद्देहं ब्रह्मात्मकतया स्थितम्। स्थितोऽहं सर्वभूतेषु ह्यन्तर्यामितया द्विज॥
मदभिन्नमिदं सर्वं दृश्यते श्रूयते च यत्। आधारभूतः सर्वेषां मत्तो ज्ञानं च विस्मृतिः॥
प्रकाशकोऽहं सर्वेषां भर्ता भोक्ता च भोजकः। मद्रूपमद्वयं ब्रह्म मध्याद्यन्तविवर्जितम्॥
स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाऽऽत्मनि। एको विष्णुरनेकेषु जङ्गमस्थावरेषु च
अनुस्यूतो वसाम्यात्मा परमात्माऽहमव्ययः। तैलं तिलेषु काष्ठेषु वह्निः क्षीरे घृतं तथा॥
गन्धः पुष्पेषु भूतेषु तथाऽऽत्माऽहं व्यवस्थितः। यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। देहादिरहितं सूक्ष्मं चित्प्रकाशं निरञ्जनम्
सर्वानुस्यूतमद्वैतं परं ब्रह्म भवाम्यहम्। प्राप्यं भोग्यं च गन्तव्यं मच्छायं मामतन्द्रितः॥
भावयेत्साधनं साध्यं प्रापकं भाजकं हरिम्। गोपीचन्दनमालिप्य नामभिः केशवादिभिः
एवं मां चिन्तयेदीशमनुसंधानतत्परः। दिव्यभावं समासाद्य ज्योतीरूपमनश्वरम् ॥
मामेवैकमवाप्नोति यतो नाऽऽवर्तते पुनः। ब्राह्मणानां तु सर्वेषां वैदिकानामनुत्तमम् ॥
गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं विधीयते। कैंकर्यमेव कर्तव्यं कृत्वा पुण्ड्रस्य धारणम् ॥
गन्तव्योऽहं न संदेहो देवर्षे पुरुषोत्तमः। एवं नारायणेनायं नारदः प्रतिबोधितः ॥
तस्मादेवं प्रकर्तव्यं मुनयः पुण्ड्रधारणम्। कृत्वा पुण्ड्रं विधानेन प्रविशेन्मन्दिरं हरेः ॥
देहलीमस्पृशन्पद्भ्यां स्मृत्वा तन्मुक्तिमण्डपम्। वास्तोष्पतेः पठन्सूक्तं शोधयेन्मन्दिरं हरेः
आ गाव इति सूक्तेन गोमयेनानुलेपयेत्। आ नो भद्रेति सूक्तेन रङ्गवल्लीं च निक्षिपेत्॥
हस्तौ पादौ च प्रक्षाल्य प्राणानायम्य वैष्णवः। स्वयं वा वैष्णवैर्वाऽपि पत्न्या पुत्रेण वा पुनः॥ १५४॥

शोधयेद्विष्णुपात्राणि सद्द्रव्यैः श्रद्धयाऽन्वितः। शुचिभूमौ कुशेष्वेव संस्थाप्य जितमानसः
मौनेन विमुखस्पर्शो यथा न स्यात्तथाऽऽचरेत् । पतितो वर्णबाह्यश्च विकर्मस्थो ह्यवै-
ष्णवः ॥ १५६ ॥
अचक्रधारी नैवार्हो भगवत्पात्रशोधने । न ष्ठीवेन्नोच्चरेद्वातं नोच्छिष्टवदनो भवेत् ॥
विशोधने च पात्राणां सुस्नातश्चोर्ध्वपुण्ड्रकः । सम्यक्प्रक्षाल्य भाण्डानि दाहयेत्तृणवह्निना
भस्मादिना च संशोध्य क्षालयेच्छुद्धवारिणा । रसभाण्डानि सर्वाणि क्षालयेदुष्णवा-
रिणा ॥ १५९ ॥
शुद्धिं कुर्याद्विशेषेण स्पर्शादौ सति योषिताम् । पाकपात्राणि सर्वाणि क्रामयेन्न गृहाद्-
बहिः ॥ १६० ॥
तैरेव नोपभुञ्जीत नोच्छिष्टे परिवेषयेत् । भगवत्पात्रभोगेन निरयं याति मानवः॥१६१॥
तस्मात्सर्वप्रकारेण पात्राणि परिवर्जयेत् । ऊर्ध्वपुण्ड्राङ्कनं कुर्यात्पात्राणां वैष्णवो जनः॥
स्वभोग्यपात्रसंस्पर्शं देवपात्रे न कारयेत् । अन्यपाको न कर्तव्यो देवपात्रेषु कर्हिचित्॥
न देयं भगवत्पात्रमन्यस्मै विमुखाय हि । सूतके मृतके वाऽपि श्वादीनां स्पर्शने तथा ॥
स्पर्शने वाऽप्यभक्तानां सद्य एव परित्यजेत् । कृत्वा भाण्डस्य संशुद्धिमन्नानि भुवि
शोधयेत् ॥ १६५ ॥
गोमयेनोपलिप्तायां सुस्नातैर्वैष्णवैर्द्विजः । शुक्लाम्बरधरा नार्यो गायन्त्यो मधुनाशनम् ॥
अवहन्युर्मुदा विष्णोः पाकार्थं व्रीहिमुत्सवे । प्रक्षाल्य मुसलं शुद्धं हृन्मन्त्रेण विशेषतः ॥
शिरोमन्त्रेण व्रीहींस्तु दद्यात्तूर्णमुलूखले । अवहन्याद्धरेः प्रीत्यै द्वादशाक्षरविद्यया ॥
निस्तुषान्निष्कणान्कृत्वा तण्डुलाञ्शूर्पकोटरैः । ते तावदवहन्तव्या विप्रैश्चक्रादिलाञ्छनैः
यावन्मुक्ताफलाभाः स्युः कृष्णबिन्दुविवर्जिताः । ब्राह्मणीभिश्च साध्वीभिर्दीक्षितानाम-
भावतः ॥ १७० ॥
शूद्रैर्वा दीक्षितैर्देवदासीभिः प्रयतात्मभिः । हविःपाकादिकर्मार्थं कार्याऽवहननक्रिया ॥
निष्पन्नानस्त्रमन्त्रेणाऽऽरक्ष्य भाण्डेषु धारयेत् । अकणानतुषानेव कृमिहीनानपि क्रमात्॥
केशपाषाणहीनांस्तु प्राण्यङ्गरहितांस्तथा । भस्माङ्गारविहीनांस्तु अभुग्नानलघूनपि ॥
विपरीते भवेद्दोषो भगवत्पाकसाधने । कणैस्तु भवति व्याधिस्तुषैर्दारिद्र्यकं भवेत् ॥
कृमिभिः पुत्रनाशः स्यात्केशैर्दारविनाशनम् । पाषाणैर्मरणं विद्धि विनाशो वह्निना
जलैः ॥ १७५ ॥
प्राण्यङ्गैर्व्याधयः प्रोक्ता भस्मना कलहो ध्रुवः । अङ्गारैर्वह्निना बाधो भुग्नैर्भुग्नस्तु विग्रहः ॥
प्रवासो लघुभिश्चैव तस्मात्तान्परिवर्जयेत् । एवं शुद्धानि द्रव्याणि ब्रह्मसूक्तमुदीरयन् ॥
विलोक्य नेत्रमन्त्रेण पात्रेषु विनिधाय च । सुस्नातैश्च सुवेषैश्च वैष्णवैः परिचारकैः ॥
आनयेत्पचनागारं शङ्खतूर्यादिवादनैः । द्वारस्योत्तरपार्श्वे तु लिप्तायां भुवि गोमयैः ॥
पात्राणि विधिना मन्त्री स्वस्वस्थाने निवेशयेत् । चतुर्भिर्व्यापकैर्मन्त्रैः संप्रोक्ष्य तुल-
सीजलैः ॥ १८० ॥
पाकार्थं देवपात्रेषु क्षालयित्वा तु धारयेत् । आहृत्यौदनपाकाग्निं कुण्डादौपासनान-
लात् ॥ १८१ ॥

चुल्ल्यां निधाय तारेण समिद्धमग्निमितीरयेत् । इन्धनानि विनिक्षिप्य यज्ञदारुमयानि च
कृमिकीटविहीनानि ज्योतिरात्रीति मन्त्रतः । प्रक्षाल्य द्वादशार्णेन वीर्यमन्त्रेण मन्त्र-
वित् ॥ १८३ ॥
घृतेन लेपयेत्स्थाल्या अन्तरं व्यूहविद्यया । प्रज्वाल्य व्यजनेनैव स्थालीस्ताम्रमयीस्ततः॥
संस्थाप्य विष्णुगायत्र्या तण्डुलानि विनिक्षिपेत् । अम्भस्य पार इति च मन्त्रेण सहृ-
दा पुनः ॥ १८५ ॥
जलेन पूरयेदूर्ध्वं तण्डुलान्पात्रमध्यगान् । पिधानैश्चक्रमन्त्रेण संछाद्यास्ताः क्रमेण तु ॥
पाकानलं समुत्पाद्य वीर्यमन्त्रेण सध्वनि । निरीक्ष्य नेत्रमन्त्रेण दर्व्या मूलं समुच्चरन् ॥
विलोक्य पूरयेद्धव्ये घृतं चन्द्रकमेव वा । शोधितं भूतले तानि हवींष्युत्तार्य सर्वशः ॥
संस्थाप्य चास्त्रमन्त्रेण पात्राणि क्षालयेच्छुचिः । तेनैव प्रोक्ष्य पात्राणि चोर्ध्वपुण्ड्राणि
धारयेत् ॥ १८९ ॥
भस्मना चन्दनेनाथ वासुदेवादिनामभिः । साधयेदुक्तमार्गेण विष्णोः संप्रीणनाय च ॥
अन्यान्यपि च हव्यानि पायसादीनि सर्वशः । अपूपपूलिकादीनि घृतपूरितमोदकान् ॥
शाकसंधावसंधानकथितांश्च प्रसाधयेत् । संप्राप्तो मन्दिरद्वारमभिवाद्य सुराधिपान् ॥
विष्वक्सेनविहङ्गेशचण्डभद्रादियष्टिपान् । कृताञ्जलिपुटो भूत्वा प्रार्थयेद्विष्णुपार्षदान् ॥
अनुज्ञां दातुमर्हन्ति भवन्तः शरणागतम् । संसारभयसंत्रस्तो विषयव्याप्तमानसः ॥
अविद्याम्बुनि संततुं गुरुसंदर्शितं प्लवम् । श्रीमदाराधनं विष्णोः संस्थाप्य भवदाज्ञया ॥
दासोऽहं शेषभूतोऽहमनन्यसुखचिन्तकः । प्रबोधयेज्जगन्नाथं दिव्यपर्यङ्कशायिनम् ॥
घण्टामृदङ्गनिनदैः स्तवैः पुरुषविद्यया । तं प्रत्नथेति सूक्तेन बोधयेत्कमलापतिम् ॥
वनस्पतेति सूक्तेन तूर्यघोषं निनादयेत् । कुर्यात्प्रदक्षिणां विष्णोरतोदेवेत्यनेन तु ॥१९८॥
तद्विष्णोरिति मन्त्राभ्यां त्रिः प्रणम्याथ वाग्यतः । उत्थाप्य दर्शयेद्दीपकन्यागोपुण्यदर्श-
नान् ॥ १९९ ॥
श्रियं देवीं समुत्थाप्य दर्शयेद्दन्तधावनम् । प्रक्षाल्य वारिणा वक्त्रं साङ्गं सावरणं
हरिम् ॥ २०० ॥
स्मृत्वा नीराजयेद्दीपैस्ततः पूजां समारभेत् । पात्रासादनकं कुर्यादात्मसंयोगमुत्तमम् ॥
आवाहनादिकं कुर्याद्बहिर्यागं समारभेत् । शयनान्तोपचारैस्तु समाराध्य जनार्दनम् ॥
अन्ते वैकुण्ठमाप्नोति प्रपन्नोऽयं हरेः पदम् ॥ २०३ ॥

इति श्रीबृहद्ब्रह्मसंहितायां तृतीयपादे दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ ३४३६ ॥

इति तृतीयः पादः ।

---

अथ चतुर्थपादे प्रथमोऽध्यायः ।

---

मुनय ऊचुः—
अन्तर्यागं बहिर्यागं कथं कुर्याच्चतुर्मुख । एकादशीव्रतं यच्च पूर्वोक्तं वैष्णवार्चनम् ॥ १ ॥

---

१ ख. °तं सनवनीतकम् । २ ख. °र्यांस्तथाऽन्तर्यागमु° ।

विस्तराद्वद देवेश तरामो दुस्तरं तमः ।: येन तात वयं सर्वे भवच्चरणमाश्रिताः ॥ २ ॥
श्रीब्रह्मोवाच—
बाह्यमाभ्यन्तरं पुत्रा विष्णोराराधनक्रमम् । वक्ष्यामि सारतः सर्वं न क्षमोऽखिलभाषणे॥
यस्य नाभिमहापद्मादुत्थितोऽहं वराटकः । बीजभूतो विसर्गस्य तस्मै धात्रे नमो नमः॥
नमः सर्वात्मने यस्य प्रसादादहमेव च । करोमि हरते शंभुः पालयन्ति प्रजेश्वराः ॥ ५ ॥
आदौ संचिन्तयेत्स्थित्वा गुरुपादसरोरुहम् । संस्कृतो येन चक्राद्यैर्मूलेन द्वयविद्यया ॥
प्राणायामैर्भूतशुद्धिस्तथा भावनया द्विजाः । कर्तव्या प्रथमं विष्णोः समाराधनकर्मणि॥
शरीरं मलिनं ह्येतत्प्राकृतं दोषभाजनम् । ध्यानाग्निना च संताप्यं ह्यन्तस्तापोऽयमीरितः
आयुधैश्च बहिस्तापो धारणाख्यस्तथाऽऽन्तरः । मन्त्रन्यासैः शरीरस्य दिव्यभावो विधीयते ॥ ९ ॥
ब्रह्मात्मकतया ध्यानमात्मनः शुद्धिरीरितम् । विष्णोः स्वरूपस्मरणं मनसः शुद्धिरुच्यते
प्रसादतीर्थग्रहणात्प्राणशुद्धिरुदाहृता । वाक्शुद्धिः कीर्तनाद्विष्णोः श्रवणाच्छोत्रयोर्मता
एवं शुद्धिपरो विप्रः साक्षान्नारायणो मतः । पलायन्ते शरीरस्थाः पातकास्तस्य दर्शनात् ॥ १२ ॥
विचिन्त्य पापपुरुषं श्मशानस्तम्भसंनिभम् । उपपातकरोमाणं महापातकविग्रहम् ॥१३॥
संशोध्य वायुबीजेन वह्निबीजेन दाहयेत् । अमृतीकरणं कुर्याद्वारुणेनामृतात्मना॥ १४ ॥
गात्रं दार्ढ्यं पृथिव्या च व्योम्ना चेन्द्रियकल्पनम् । एवं संशोधयेद्देहं पूरकुम्भकरेचकैः॥
विस्तरेणापि वक्ष्यामि भूतशुद्धिं निशामय । भूतशुद्धिं विना नैव ह्यधिकारोऽस्य पूजने
विचिन्त्य हृदये विष्णुं संस्थितं परमे पदे । बहिर्निर्गमयेत्तं तु सुषुम्नादक्षिणेन तु ॥१७॥
वृत्तमण्डलमध्यस्थं सहस्रादित्यसंनिभम् । मन्त्रात्मानं तु तं ध्यात्वा ह्युपरि द्वादशाङ्गुले॥
प्रभाचक्रं तु तदधस्तत्त्वाधिष्ठातृसंयुतम् । निष्कलं मन्त्रदेहं च चिन्तयेत्पुरुषोत्तमम् ॥
तदधस्तात्स्मरेद्भूमिं चतुरस्रां तु पीतलाम् । शब्दाद्यैः पञ्चभिर्युक्तां वज्रलाञ्छनलाञ्छिताम् ॥ २० ॥
पुरप्राकारसुसरिद्द्वीपार्णवसमाकुलाम् । बाह्यां स्वदेहे विशतीं पूरकेन(ण) विचिन्तयेत्॥
प्रोच्चरंश्चैव तन्मन्त्रं विश्रान्तामथ चिन्तयेत् । जान्वोः पादतलं यावत्तावद्व्याप्तां क्रमेण तु ॥ २२ ॥
कुम्भकेन च तां पृथ्वीं मन्त्रसूक्तैः स्वकेतनः । शनैः शनैर्लयं कुर्याद्गन्धशक्तौ च तां पुनः
रेचयेद्गन्धशक्तिं च सर्वभूतेष्वयं विधिः । बहिस्थां पूरकेणैव ह्यन्तः कुर्याल्लयं नयेत् ॥
कुम्भकेनैव तन्मात्रे रेचकेन बहिः क्षिपेत् । तोयाख्ये च महाधारे ततस्तोयं च वैष्णवम्
ससमुद्रसरित्स्रोतोरसषट्कं च सौषधि । अर्धचन्द्रसमाकारं कमलं ध्वजशोभितम् ॥
वारुणं विभवं बाह्ये ध्यात्वा तेनाथ विग्रहम् । संपूर्य पूरकाख्येन करणेन शनैः शनैः ॥
ऊरुमूलाच्च जान्वन्तं शरीरं मण्डलं स्वकम् । तेनाखिलं तु संव्याप्तं कुम्भकेन स्मरेद्द्विजाः
तन्मध्ये वारुणं मन्त्रं धारणाख्यं विचिन्त्य च । अम्मयं विभवं सर्वं तन्मन्त्रे विलयं गतम् ॥ २९ ॥

ततस्तु रसशक्तौ तु सा शक्तिर्वह्निमण्डले । रेचकेन विनिक्षिप्य तथा वह्नेश्च वैभवम् ॥
त्रिकोणभुवनाकारं दीप्तिमद्भिर्विभूषितम् । विद्युच्चन्द्रार्कनक्षत्रमणिरत्नैश्च धातुभिः ॥
स्वप्रकाशशरीरैश्चास्वशरीरैश्च खेचरैः । चिह्नितं स्वास्तिकैर्दीप्तैर्ध्यात्वैवं विभवं महत् ॥
तैजसं मुनयश्चाथ तन्मन्त्रं विधिना स्मरेत् । तन्मण्डलान्तरस्थं तु प्रोच्चरन्वै तमेव हि
प्रविष्टं पूर्ववद्ध्यायेत्तेनैव करणेन तु । आ नाभेः पायुपर्यन्तं व्याप्तं कृत्वा विधाय च ॥
तमेव विभवं सर्वं तैजसं परिभावयेत् । तन्मन्त्रविग्रहं शान्तं तन्मन्त्रं चानलात्मकम् ॥
रूपशक्तौ लयं यान्तं शक्तिः संविन्मयी तु सा । तया मन्त्रशरीरस्थं स्वशक्त्या विल-
यीकृतम् ॥ ३६ ॥
रेचकेन तु तां शक्तिं बाह्याधारे बहिः क्षिपेत् । ततस्तु वायुबीजं वै विभवं बाह्यतः स्मरेत्
वृत्तं राजोपलाभं तु बिम्बैर्युक्तं स्वतेजसैः । पूर्णं नानाविधैर्गन्धैरनेकैस्तद्गुणैस्तथा॥३८॥
स्वमन्त्रेण समाख्यातं धारणाख्येन संस्मरेत् । तथा स्वरूपं तन्मन्त्रं ध्यात्वोच्चार्य समा-
हरेत् ॥ ३९ ॥
पूर्वोक्तकरणेनैव वायव्यं विभवं तु तम् । अधिष्ठातृलयं यान्तं स्मृत्वा तं च महाबलम् ॥
स्पर्शनाख्यमहाशक्तौ तां शक्तिमविनश्वरीम् । व्याप्तिं नित्यामनित्यां च स्वशक्तिविभवा-
न्विताम् ॥ ४१ ॥
शब्दाख्ये तु महाधारे निक्षिपेद्व्योममण्डले । ध्यात्वाऽपि विभवं सर्वं व्योमाख्यं विग्रहा-
द्बहिः ॥ ४२ ॥
नानाशक्तिसमाकीर्णं तद्रूपं चाञ्जनप्रभम् । अविग्रहैः शब्दमयैः पूर्णं सिद्धैरसंख्यकैः ॥
तन्मन्त्रे धारणामन्त्रं व्योमाख्यं संस्मरेत्पुनः । धारयन्तं स्वमात्मानं स्वसामर्थ्येन सर्वदा॥
शब्दमात्रमरूपं च व्यापकं विभवेष्वपि । धिया च संपरिच्छिन्नं कृत्वा विन्यस्य विग्रहे
प्रागुक्तकरणेनैव तेन व्याप्तं तु भावयेत् । आ कण्ठाद्ब्रह्मरन्ध्रान्तं व्योमाख्यं विभवेन च॥
संधार्य कुम्भकेनैव यावत्कालं तु योगिनः । ध्यायेत्परिणतं पश्चात्स्वमन्त्रेण तदम्बरम् ॥
व्योमाख्यं धारणामन्त्रं शक्तौ परिणतं स्मरेत् । तां शक्तिं ब्रह्मरन्ध्रेण प्रयान्तीमनुभावयेत्
युक्तां शक्तिचतुष्केन(ण) गन्धाद्येनाविनश्वरीम् । आश्रये निष्कलं मन्त्रं तदधिष्ठातृसं-
युतम् ॥ ४९ ॥
समन्त्रं विभवं भौतमेवमस्तं नयेत्क्रमात् । चैतन्यं जीवसंभूतं खस्फुरत्तारकोपमम् ॥
भावनीयं तु विश्रान्तं निःसृतं भूतपञ्चकात् । निष्प्रपञ्चे परे मन्त्रे पञ्चशक्त्यात्मविग्रहे ॥
अनेन क्रमयोगेन(ण) जीव आत्मानमात्मना । ईक्षते तद्धृदाकाशे त्वचलं सूर्यवर्चसम् ॥
स्फुरद्द्युतिभिराकीर्णमीश्वरं व्यापकं परम् । ततो मन्त्रशरीरस्थं समाधिं चाभ्यसेत्परम्॥
गन्धतन्मात्रपूर्वाभिर्युक्तत्वात्पञ्चशक्तिभिः । हेयं चेत्थमिदं बुद्ध्या यदा तत्स्थानबृंहितः॥
अतृप्तोऽकृतकृत्यश्च मन्त्रहृत्पद्मसेवनात् । षष्ठे पदे ह्यात्मतत्त्वज्ञानरज्जुबलेन च ॥ ५५ ॥
हृत्कोटराध्वनिर्यान्तं स्वात्मानं स्वात्मना स्मरेत् । भारूपनाडीमार्गेण मन्त्रवह्नेः शिखां
हि सः ॥ ५६ ॥

---

१ ख. तन्मध्ये र° । २ ख. °प्रसरू° । ३ ख. °ख्या विषा° ।

पद्मसूत्रप्रतीकाशा सुषुम्ना चोर्ध्वगामिनी । तद्ब्रह्मरन्ध्रगा साक्षात्सुखद्योतनसत्तमा ॥५७॥
शनैः शनैश्च स्वात्मानं रेचयेज्ज्ञानवायुना । मात्रकारणषट्कं चाप्येवमव्यापकं त्यजेत् ॥
प्राप्नुयाच्च तदूर्ध्वं तु ॰ः परात्प्रभुविग्रहात् । उदितो जायते तत्र तेजःपुञ्जो ह्यनूपमः ॥
तत्प्रभाचक्रनाभिस्थस्वानन्दानन्दनादितः । परम्परात्परस्यास्य परतत्त्वस्य वै ततः ॥
तत्त्वं निमुक्तदेहस्य केवलस्य चिदात्मनः । उदितो हि महानन्दः सा शक्तिर्वैष्णवी परा॥
अलुप्तकर्मकर्तारं र्ज वं कृत्वा तमात्मसात् । यत्रोदिता च तत्रैव पुनरेवावतिष्ठते ॥ ६२ ॥
तच्च संकल्पनिमुक्तमवाच्य मुनिसत्तमाः । एवं स्वस्थानमासाद्य त्यक्त्वा भोतं च विग्रहम् ॥ ६३ ॥
तत्र स्थितो दहेत्पिण्डं शक्तितन्मात्रवर्जितम् । षट्कोणं विशिखा सारं निर्गतं तृणरूपिणम् ॥ ६४ ॥
संस्थितः साधको नित्यमुक्तस्वात्मशरीरिणि । इच्छानिर्मथनोत्थेन मन्त्रजेन तु वह्निना
तद्वह्निदेशादारभ्य तं पिण्डं ज्वलितं स्मरेत् । दक्षिणाग्रकराङ्गुष्ठप्रान्तदेशे रमक्षरम् ॥६६॥
ध्यात्वा युगान्तहुतभुग्रूपज्वालाशतावृतम् । तेन स्वविग्रहं ध्यायेत्प्रज्वलन्तं समन्ततः ॥
नाभिकन्दान्तरे देशे नत्रमन्त्रेण पावकम् । ध्यायेज्ज्वालागणोपेतं निनयेत्तेन भस्मसात्
दहनन स्वकं देहं ह्वन्मन्त्रं भावयंस्ततः । देहजां भावयेज्ज्वालां मन्त्रनाथे लयं गताम् ॥
भस्मराशिसमप्रख्यशान्ताग्निं तदनुस्मरेत् । वातचक्रेण तद्भस्म यातं ध्यात्वा स्थितस्ततः
ततः समन्त्रं तद्बिम्बं पूर्णचन्द्रायुतोपमम् । ध्यात्वा तन्निःसृतेनैव त्वमृतौघेन चाम्बरात्॥
प्लावयेद्देहजां भूतिं सर्वां ध्यायेत्सुधात्मिकाम् । तत्राऽऽधारमयीं शक्तिं मध्ये विन्यस्य वैष्णवीम् ॥ ७२ ॥
बीजभूतां च सर्वस्य तदुत्थं चाम्बुजं स्मरेत् । षडध्वतत्त्वभूतं च सितं तेजोमयं शुभम् ॥
मण्डलं त्रितयात्पूर्णं स्फुरत्किरणभास्वरम् । मन्त्रात्मानं च तन्मध्ये ध्यायेन्नारायणं प्रभुम् ॥ ७४ ॥
निष्कलं केवलं शुद्धं पञ्चसन्मन्त्रविग्रहम् । तन्मन्त्रशक्तिभिर्भूयो भावयेन्मूर्छितं द्विजाः ॥ ७५ ॥
व्योमादिपञ्चभूतीयमात्रमीश्वरपञ्चकम् । तेभ्यः प्रसारितं चैव व्योमाद्यं विभवं स्मरेत् ॥
संयोगजनितं पिण्डं ध्यायेद्विभवपञ्चकात् । सहस्रसूर्यसंकाशं शतचन्द्रगभस्तिमत्॥७७॥
निर्मलं स्फटिकप्रख्यं जरामरणवर्जितम् । जनित्वेनास्य पिण्डं तु परमं भोगमोक्षयोः ॥
साधनं सहजं सर्वदेहिनां मुनिसत्तमाः । समाधितः क्रमेणैव सम्यक्संक्षालनेन च ॥७९॥
स्वपदान्निस्तरङ्गाच्च कृत्वा शक्त्या सहोदयम् । स्वानन्दं च महानन्दात्स्वानन्दाच्च भयेत्ततः ॥ ८० ॥
मारीचं नाभिगं चक्रं तस्माद्रूपं स्वकं च यत् । सूर्यकोटिप्रतीकाशं प्रस्फुरन्तं स्वयाऽऽभया॥
कदम्बगोलाकारं च निशाम्बुकणनिर्मलम् । एवं मानसमानीय स्वस्थानात्स्वात्मना द्विजाः ॥ ८२ ॥
विशेन्मन्त्रशरीरं स्वं ब्रह्मरन्ध्रेण पूर्ववत् । ज्योत्स्नानाडीपथेनैव प्रविश्य च कचान्तरम्॥

स्ववाचकं भावयन्वै ध्वनिना निष्कलेन तु । ततस्तु निष्कलान्मन्त्राद्यावर्द्धातिकविग्रहम्
पञ्चोपनिषदात्मानमासाद्यालोकविग्रहम् । स्वमन्त्रादमृतौघेन सेचयेद्विग्रहं स्वकम् ॥
ततः स्वमन्त्रं तद्बिम्बमाकृष्य हृदये न्यसेत् । निस्तरङ्गा परा शक्तिर्महानन्दमयी च सा॥
स्वानन्दं च प्रभाचक्ररूपमात्मीयभास्वरम् । सुषुम्ना तादृशं मार्गं पिण्डमन्त्रं च निष्कलम् ॥ ८७ ॥
सत्त्वाढ्यो मन्त्रशक्तो यो धारयेत्स्वरपञ्चके । तेषां विभवसिद्धो यः पिण्डस्तत्समुदायकः
स्थूलसूक्ष्मपराख्येन त्रिविधेन तु सत्तमाः । करणेनोदिता सम्यक्शुद्धिरेषा च भौतिकी ॥
अनया चेन्द्रियाणां च शुद्धिरुक्ता महात्मभिः । उपासकेन कर्तव्या पिण्डशुद्धिर्मुनीश्वराः ॥
पश्चाद्यागः प्रकर्तव्यो बाह्याभ्यन्तरभेदतः ॥ ९० ॥

मुनय ऊचुः—

ब्रह्मन्ननुग्रहोऽस्माकं सर्वथा भवता कृतः ॥ ९१ ॥
यागाङ्गभूता मन्त्रोक्तभूतशुद्धिर्यथा तथा । आत्मशुद्धिः प्रवक्तव्या पूर्वोक्ता भावनामयी ॥ ९२ ॥
जीवोऽयं ब्रह्मभावेन स्वात्मानं शोधयेत्कथम् । मुख्येयमात्मनः शुद्धिः स्वात्मप्राप्तौ पितामह ॥ ९३ ॥
किं चाङ्गभूता यागस्य भूतशुद्धिरिहोदिता ।

श्रीब्रह्मोवाच—

मुनयः स्वात्मशुद्धिर्हि मुख्यैवाऽऽत्मसमागमे ॥ ९४ ॥
अङ्गभूताऽपि विज्ञेया वाक्याभ्यासेन केवला । अशक्नुवन्भावयितुं वाक्यमेव समभ्यसेत् ॥ ९५ ॥
ब्रह्मैवाहं न संसारी नित्यमुक्तो न शोकभाक् । अच्युतोऽहमनन्तोऽहमव्ययोऽस्मि स्वरूपतः ॥ ९६ ॥
इति वेदोपनिषदा भावना ह्यात्मशोधिनी । तस्याः प्रकारं वक्ष्यामि भवन्तो मेऽनुयायिनः ॥ ९७ ॥
ब्रह्मणः प्रकृतिर्द्वेधा जीवाजीवविभेदतः । अजीवा प्रकृतिः प्रोक्ता हरिणा क्षेत्रलक्षणा॥
क्षेत्रज्ञलक्षणभिन्ना प्रकृतिर्जीवसंज्ञिता । क्षेत्रस्य धारणादात्मा जीवोऽयमज एव हि ॥
धार्यं वेद्यं शरीरं हि क्षेत्रमित्यभिधीयते । क्षेत्रसंधारणाद्ब्रह्मन्क्षेत्रज्ञात्मा प्रकीर्तितः ॥
धार्यं तस्य शरीरं हि जीवोऽयमवधार्यताम् । क्षेत्रक्षेत्रज्ञयोरात्मा स्वतन्त्रः स्वाश्रयो हरिः
प्रयोजकः पोषकश्च प्रकाशक इतीरितः । द्रष्टा श्रोताऽनुमन्ता च धारको रञ्जकोऽच्युतः ॥
तस्मात्स्वत्वं सदा भाव्यं परमात्मनि केशवे । क्षेत्रं च भगवान्विष्णुः क्षेत्रज्ञोऽपि हरिर्मतः ॥ १०३ ॥
सर्वनामा सर्वरूपः सर्वः सर्वरसः स्मृतः । अचिन्नैव विजानाति कोऽहं कस्यास्मि कुत्र च ॥

---

१ ख. °वविग्रहम्° ।

नातो ब्रह्मात्मकत्वेन बोधस्तस्य विधीयते । अहमस्मीति बोधोऽयं चेतनस्य स्वतो मतः॥
तस्माद्ब्रह्मात्मकत्वं च ब्रह्माधारत्वमुच्यते । आत्मनश्च परस्यापि ब्रह्मात्मत्वविभावनात्॥
विमोक्षः संसृतेर्विप्राश्चेतनस्यैव निश्चितः । प्रकृतेर्देहरूपायाः कर्तृत्वं पुरुषं विना ॥
विज्ञेयं बन्धनायैव तत्त्वमविजानताम् । अचेतनस्य कर्तृत्वे स्वरूपस्य च्युतिर्मता ॥
आत्मनोऽपि च कर्तृत्वं बन्धनायैव बोधितम् । अस्वातन्त्र्याच्छरीत्वादाश्रितत्वाद्विशेषतः ॥ १०९ ॥
स्वातन्त्र्येण च कर्तृत्वे स्वस्वरूपाच्च्युतिर्मता । तस्मात्सर्वात्मना स्वस्य परस्यापि ह्यनात्मनः ॥ ११० ॥
आत्मत्वं तत्स्वरूपत्वं जीव एव विभावयेत् । प्रणमेद्भगवद्बुद्ध्या विश्वं चिदचिदात्मकम् ॥ १११ ॥
कुर्यात्कर्माणि सर्वाणि वासुदेवात्मकानि हि । ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना । आत्मनो ब्रह्मभावत्वं भावयेद्बन्धमुक्तये ॥
बोधितं श्रुतिवाक्यैश्च स्मृत्यागमशतैरपि । नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च॥
न मनोऽहं नवै बुद्धिर्न वै चित्तमहं कृतिः । नाहं पृथ्वी न सलिलं न च वह्निस्तथाऽनिलः ॥ ११५ ॥
न चाऽऽकाशो न शब्दश्च न च स्पर्शस्तथा रसः । न हि गन्धो न रूपं च न मायाऽहं न संसृतिः ॥ ११६ ॥
अहमात्मा च सर्वेषां साक्षी चेता सनातनः । ब्रह्मास्मीति न संसारी तत्त्वमस्यादिवाक्यतः ॥ ११७ ॥
क्षेत्रक्षेत्रज्ञयोरेवमभेदो ब्रह्मणा समम् । भूतानामात्मनः शुद्धिरुदिता मुनिसत्तमाः ॥
अभेदं जीवपरयोर्यावज्जानाति नैव हि । तावदाचारितैर्नैव सिद्धिः कल्पशतैरपि ॥
अन्तर्यागविहीनस्य पूजा भवति निष्फला । अतो वः संविधास्यामि ह्यन्तर्यागं समासतः

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे भूतशुद्धिकथनं नाम
प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ ३५५६ ॥

---

अथ चतुर्थपादे द्वितीयोऽध्यायः ।

---

श्रीब्रह्मोवाच—

पद्मासने स्वस्तिके वा तथा योन्यासने मुदा । स्थित्वा निर्बाधदेशे तु ध्यानयागं समारभेत् ॥ १ ॥
नाभिमेढ्रान्तरे ध्यायेच्छक्तिमाधाररूपिणीम् । तदूर्ध्वे कालकूर्मं तु विमलं दीप्तविग्रहम् ॥
कूर्माकारं परं देवं शङ्खचक्रगदाधरम् । तस्याङ्केऽपि च नागेन्द्रं पूर्णचन्द्रनिभाननम् ॥
फणासहस्रसंपूर्णं मदाघूर्णितलोचनम् । चक्रलाङ्गलहस्तं च प्रणमन्तं परात्परम् ॥ ४ ॥
तदूर्ध्वं वसुधादेवीं कुङ्कुमक्षोदसंनिभाम् । हेमरत्नविचित्राङ्गीं प्रसन्नवदनेक्षणाम् ॥ ५ ॥

---

१ क॰ °नश्चाप्य सन्दो न° ।

बद्धाञ्जलिं शिरोदेशे संस्मरन्तीं विभोः स्मरेत् । चतुर्धा भाजिते क्षेत्रे नाभिमेढ्रान्तर-
स्थिते ॥ ६ ॥
एवमाधारशक्त्याद्याः संस्मरेद्देवता इमाः । नाभौ क्षीरार्णवं ध्यायेत्कुन्देन्दुधवलाकृतिम् ॥
स्रोतोराशिमभिराकीर्णं पूर्णचन्द्रनिभाननम् । गम्भीरविग्रहं ध्यायेद्रूपवन्तमरूपिणम् ॥८॥
ततः समुत्थितं पद्मं ध्यायेत्क्षीरार्णवोदरात् । प्रशान्तपावकाकारमुदयादित्यवर्चसम् ॥
श्वेतद्वीपं ततो ध्यायेद्वैकुण्ठं च चतुर्विधम् । वैकुण्ठं दिव्यलोकं च तथा जनपदं स्मरेत् ॥
वैकुण्ठं दिव्यनगरं विमानं च तथाविधम् । तत्राऽऽनन्दमयं साक्षाद्भावयेद्रत्नमण्डपम् ॥
तस्मिन्सहस्रशिरसं देवमासनरूपिणम् । सहस्रमणिज्योत्स्नाभिर्दीप्यमानरुचं स्मरेत् ॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमादिमान् । आसनस्य स्मरेत्पादानाग्नेयादिषु वैष्णवः ॥
पुरुषाकृतयः सर्वे स्थिताः सिंहासनादधः । महोत्साहा महावीर्या भगवत्पीठधारकाः ॥
पूर्वादिदिग्गता ज्ञेया धर्मादीनां विपर्ययाः । अधर्मं च तथाऽज्ञानमवैराग्यमनैश्वरम् ॥
पुरुषाकृतयश्चेमे बन्धूककुसुमारुणाः । प्रागीशानदिशोर्मध्ये प्रागाग्नेयीदिगन्तरे ॥ १६ ॥
नैर्ऋतीवारुणीमध्ये पाशिवायुदिगन्तरे । ऋग्वेदाद्यं चतुष्कं तु पीठं हयनराकृति॥ १७ ॥
ईशानसोमयोर्मध्ये प्रागन्तकदिगन्तरे । राक्षसान्तकदिङ्मध्ये वायुसोमदिगन्तरे ॥ १८ ॥
कृताद्यं युगवृन्दं तु कृष्णं वृषनराकृति । सर्वे चतुर्भुजा एते द्वाभ्यां पीठविधारकाः ॥
द्वाभ्यामञ्जलिबन्धाभ्यां प्रणमन्त्यासनस्थितम् । तेषामुपरि संचिन्त्य पीठं बुद्धिमयं
परम् ॥ २० ॥
अव्यक्तमम्बुजं श्वेतं तदूर्ध्वेऽष्टदलं स्मरेत् । तदूर्ध्व सूर्यबिम्बं तु सूर्यकोटिसमप्रभम्॥२१॥
तदूर्ध्वे वह्निबिम्बं तु वह्निकोट्ययुतप्रभम् । तमो रजश्च सत्त्वं च गुणानेतान्क्रमात्स्मरेत् ॥
प्रणवस्य नतेश्चैव तत्संज्ञा तनुमध्यगा । बुद्ध्यादिसत्त्वपर्यन्तं तत्त्वमन्त्रगणाः स्मृताः ॥
ततश्चिदासनं दद्यात्पराहन्तास्वरूपकम् । आ नाभेर्हृदयान्तं तु पञ्चधाभाजिते पदे ॥
समुद्राद्यासनान्तं तु चतुर्भिः कल्पयेत्पदैः । एकेन पञ्चमेनैव पद्माद्यासनकल्पनम् ॥२५॥
भूतान्याधारशक्त्यन्तमेतच्च मातृकं गणम् । वागादिकं तथाऽनन्ते भुवि श्रोत्रादिपञ्चकम्
मनः क्षीरार्णवं ध्यायेदहंकारं ततोऽम्बुजे । द्विरष्टकं च धर्माद्यं मानं चापि विधिः स्मृतः॥
अथाव्यक्तं तदूर्ध्वस्थमवदातं सरोरुहम् । तमःप्रभृतयः प्रोक्ता गुणा ह्यन्नत्रयात्मकाः॥२८॥
एके कालं वदन्त्येतद्भूतादित्रितयात्मकम् । चिदानन्दमहंतास्थं पुमांसं संपदे विदुः ॥
अथवा गरुडं ध्यायेदूर्ध्वं चैव चिदासनात् । आत्मानमन्तरात्मानं परमात्मानमेव च ॥
ज्ञानात्मानं ततो ध्यात्वा पद्ममष्टदलं तु यत् । तस्य पूर्वादिभागेषु विमलाद्याश्च शक्तयः
विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च । प्रह्वी सत्या तथेशाना मध्ये शक्तिरनु-
ग्रहा ॥ ३२ ॥
चामरान्दोलितकरा विचिन्त्या नव मूर्तयः । जगत्प्रकृतये मध्ये योगपीठाय वै नमः ॥
दिव्यं च योगपर्यङ्कं तत्रानन्तासनं स्मरेत् । तद्भोगदिव्यशय्यायां महावैकुण्ठनायकम् ॥
श्रीभूम्यां सहितं देवं सर्वात्मानं हरिं स्मरेत् । मामसैरुपचारैस्तु पूजयेन्मन्त्रपूर्वकम् ॥

आवाहनादिभिस्तत्र मन्त्रमूर्तौ जगत्प्रभुम् । लक्ष्म्या सह समानीय सूक्ताभ्यां न्यास-विद्यया ॥ ३६ ॥
पुरुषाराधने सर्वं सूक्तपूर्वं विचिन्तयेत् । तथैव पूजयेदन्ते महापुरुषविद्यया ॥ ३७ ॥
स्तुत्वा नत्वा परिक्रम्य संबद्धाञ्जलिरानतः । गृहाण मानसीं पूजां यथार्थपरिभाविताम्
इति संप्रार्थ्य विधिना मानसं होममाचरेत् । संकल्पजनितैर्द्रव्यैः पवित्रैः पारमार्थिकैः ॥
बाह्यप्रक्रियया शश्वत्पुरस्ताद्वक्ष्यमाणया । यजेत कमलाकान्तं भोगैः सांस्पर्शिकादिभिः
प्रापणान्तं विधायाथकारिणं संस्मरेद्गुरुम् । जीवन्तमथवाऽतीतं तस्मै दद्यात्ततोऽखि-लम् ॥ ४१ ॥
वित्तं[1] संविभजेच्चैव प्रापणांशेन मन्त्रवित् । जीवतोऽप्यथवाऽतीतान्यथार्थेनैव चेतसा ॥
परिवारान्स्मरेत्सर्वान्वक्ष्यमाणान्विशेषतः । कारणे मयि संलीनान्मनसाऽऽनीय भूरुहान्
तत्तन्मन्त्रप्रयोगेण लयप्रक्रियया यजेत् । कुर्याच्च मानसे होमं संस्कारं चेष्टदं शुभम् ॥
त्रिगुणाधारमध्यस्थे त्रिकोणे त्रिगुणानले । ध्यानारणिं तु निर्मथ्य चिदग्निमवतार्य च ॥
संस्कारैः संस्कृतं कृत्वा वक्ष्यमाणधिया बुधः । त्रिलक्षणस्थानगते वैष्णवे जातवेदसि ॥
नादावसानगमनात्तारिकायाः परिष्कृतम् । ब्राह्मं हविर्गृहीत्वाऽथ ब्रह्मरन्ध्रेण संविशेत् ॥
ततो वह्निगृहं गत्वा सर्पिः संस्कृत्य शास्त्रतः । कुर्वीत सकलं कृत्यं तेनाऽऽज्येन यथा-विधि ॥ ४८ ॥
ततो होमावसाने तु सकलं कर्म मानसम् । संन्यसेत्प्रेमभावेन वक्षमाणधिया हरौ ॥
कथितो मानसो यागः कार्य आदेहपातनात् । बाह्ययागं प्रवक्ष्यामि वासनामलशान्तये
बहिर्वेद्यादिदेशस्य द्रव्यैस्तद्भावनेक्षितैः । भोगभूतैर्हरेरिज्या बहिर्यागस्तु संस्मृतः ॥५१॥
मण्डपादिविनिर्माणं वेदीविरचनं तथा । प्रागुक्तं वो मुनिश्रेष्ठाः सूर्याय यजने यथा ॥
वैकुण्ठवैभवं स्मृत्वा स्मृत्वा प्राकृतवैभवम् । उभयोराश्रमं ब्रह्म हृदि सूत्रमिव स्मरेत् ॥
आधारशक्तिमारभ्य शरीरे यद्विचिन्तितम् । पूजितं भावनाद्रव्यैर्बहिरावाहयेद्धि तत् ॥
वैकुण्ठवनभूपीठनित्यमुक्तजनांस्तथा । विचिन्त्य कुसुमैर्दिव्यैः सुषुम्नावर्त्मना बहिः ॥
आनयेद्राचिते धाम्नि स्तम्भतोरणमण्डिते । तत्र संपूजयेद्देवं साङ्गं सायुधभूषणम् ॥५६॥
तत्राऽऽदौ योगपीठस्य पश्चिमे गुरुपूजनम् । गुरुपूजार्थमाधारे पात्रं दिव्यं निवेशयेत् ॥
पूजयेद्गन्धपुष्पाद्यैरात्मनो गुरुसंततिम् । गुरुं नारायणाभिन्नं दिव्यबाहुचतुष्टयम् ॥ ५८ ॥
धृतोर्ध्वपुण्ड्रपद्माक्षमालया समलंकृतम् । कृपया भगवत्तत्त्वं बोधयन्तं मुमुक्षवे ॥ ५९ ॥
उत्तरे भगवद्भक्तान्नारदादीन्विचिन्तयेत् । प्रणामैर्नाममन्त्रैश्च पूजयेच्चन्दनादिभिः ॥६०॥
द्वारदेवान्समभ्यर्च्य पीठदेवांस्तथैव च । यजेन्नारायणं देवं कोटिब्रह्माण्डनायकम् ॥
घण्टां वामे तु संस्थाप्य गरुडाङ्कितमस्तकाम् । ॐ नमः पूर्वमुच्चार्य गजध्वनिपदं ततः ॥
मन्त्रं[3]मातस्ततः स्वाहा मनुर्घण्टार्चने मतः । दक्षिणे शङ्खसंस्थानं तत्राऽऽधारं प्रकल्पयेत्
अग्निमण्डलमाधारं दशतत्त्वसमन्वितम् । शङ्खं सूर्यमयं ध्यायेत्कलाद्वादशसंयुतम् ॥६४॥
मध्ये तु षोडशकलं चन्द्रबिम्बं विचिन्तयेत् । पूरयेत्तीर्थनीरेण कुम्भस्थेन महामनाः ॥
तीर्थान्यावाहयेत्तत्र देवं तत्र प्रपूजयेत् । आवाहनं स्थापनं च संमुखीकरणं तथा ॥६६॥

१ ख. पितॄन्संप्रीणयेच्चै° । २ ख. °मं घृतवा° । ३ ख. °त्रात° । ४ क. °यं घोषेरु° ।

संनिरोधावगुण्ठं च सकलीकरणं पुनः । अमृतीकरणं कुर्यान्मुद्रया धेनुसंज्ञया ॥ ६७ ॥
शङ्खं देवमयं ध्यात्वा पञ्च पात्राणि वै पुनः । पाद्यार्घ्याचमनार्थं च प्रोक्षणार्थमथापरम्
शुद्धोदकं पञ्चमं तु क्रमेणैव तु धारयेत् । आधारोपरि संस्थाप्य तोयद्रव्यैश्च पूजयेत् ॥
वामे कलशमाधारे स्थापयेन्मूलविद्यया । मातृकां प्रतिलोमां च तत्त्वन्यासं विशेषतः ॥
तेजःसूर्यकलोपेतं मूलविद्याक्षराणि तु । तीर्थान्यावाह्य कलशे तुलसीकुसुमोदकैः॥७१॥
संपूज्य सप्तधाऽऽमन्त्र्य संरक्ष्यास्त्रेण वाग्जितः । प्रदर्श्य सुरभिं तत्र पूतं तोयं विभावयेत्॥
तेनोदकेन शङ्खं च पात्राण्यन्यानि पूरयेत् । गन्धपुष्पादिद्रव्याणि दृग्गोचरतया न्यसेत्॥
प्रक्षाल्य मूलमन्त्रेण संशोध्य शोषणादिभिः । पात्राणि पूततोयेन चोद्धरण्या प्रपूरयेत् ॥
विष्णुक्रान्ता च दूर्वा च श्यामाकं पद्मकं तथा । पाद्यपात्रे प्रदेयानि तुलसीतोयमेव च॥
सिद्धार्थकांस्तिलान्दूर्वाः सयवान्सिततण्डुलान् । तोयक्षीरफलान्यर्घ्ये द्रव्याणि परि-
पूरयेत् ॥ ७६ ॥
एलालवङ्गकङ्कोलपुष्पाण्याचमनीयके । सर्वौषधिसुगन्धीनि स्नानीये तुलसीं तथा ॥७७॥
अन्यस्मिन्नपि पात्रे तु तोयमादाय सर्वतः । निक्षिपेन्मूलमन्त्रेण स्पृशन्पात्राणि पाणिना
मुद्रां कामदुघां तत्र प्रदर्श्य जलभाजने । तेन पात्राम्भसा प्रोक्ष्य मण्डलं मण्डपं तथा ॥
यागद्रव्याण्यशेषाणि ताडयेदस्त्रमन्त्रतः । मूलेन पावयेत्पश्चात्तत्सर्वं भोगतां व्रजेत् ॥
ततो विष्णुं नमस्कृत्य श्रीभूभ्यां सहितं तथा । आधारशक्तिमारभ्य योगपीठान्तमेव च॥
पूजयेद्गन्धपुष्पैश्च तन्नामानि समुच्चरन् । प्रणवादि नमोन्तं च ङेन्तं नाम तथैव च ॥८२॥
पूजने सर्वदेवानां नाममन्त्रः प्रकीर्तितः । पीठेन तं पादपीठं द्वारदेवांस्तथैव च ॥ ८३ ॥
पूजयेत्परया भक्त्या ततो देवं समर्चयेत् । ध्यात्वा नारायणं देवं नागभोगे स्थितं द्विजाः
दोर्भिश्चतुर्भिः संयुक्तं दिव्यसद्गणमण्डितम् । पञ्चशक्तिमयं दिव्यं पञ्चोपनिषदैस्तथा ॥
साङ्गं सावरणं सास्त्रं मणिभूषणभूषितम् । आवाह्य कर्णिकायां तु देवदेवं समर्चयेत् ॥
आवाहनं चाऽऽसनं तु स्थापनं संमुखं तथा । संनिधौ करणं चैव सकलीकरणं पुनः ॥
प्रतिमायां प्रकर्तव्यं तत्र मुद्राप्रदर्शनम् । प्राणप्रतिष्ठा कर्तव्या तत्त्वन्यासो विशेषतः ॥
पञ्चोपनिषदां बीजं मन्त्रन्यासमथाऽऽचरेत् । मूलविद्याक्षरन्यासं तथा सूक्तं च पौरु-
षम् ॥ ८९ ॥

मुनय ऊचुः—

आवाहनादिकर्तव्यं सूक्तमुद्राप्रदर्शनम् । पञ्चोपनिषदां बीजं मन्त्रन्यास उदीरितः॥९०॥
तेषां तु लक्षणज्ञानं वक्तव्यं कमलासन । यत्कृत्वा तु प्रकर्तव्यं श्रीमदाराधनं हरेः ॥९१॥

श्रीब्रह्मोवाच—

ऊर्ध्वाञ्जलिमधः कुर्यादियमावाहनी मता । सेयं तु विपरीता स्यान्मुद्रा स्थापनकर्मणि॥
बाह्याङ्गुष्ठद्वया मुष्टिमुद्रा स्यात्संनिधापनी । अङ्गुष्ठगर्भिणी सैव मुद्रा स्यात्संनिरोधनी ॥
उत्तानमुष्टियुगला संमुखीकरणी मता । अन्योन्यतर्जनीयुग्मभ्रमणादवगुण्ठनी ॥ ९४ ॥
मातृकां केशवाख्यां च तत्त्वन्यासश्च वै पुनः । कराङ्गदशतत्त्वानां न्यसनात्संनिधिर्भवेत्

---

१ ख. °वगुण्ठ°।

शालग्राममणौ यन्त्रे मण्डले प्रतिमासु च । नित्यं पूजां हरेः कुर्यान्न तु केवलभूतले ॥
पञ्चोपनिषदां न्यासः श्रूयतामविलम्बितम् । रहस्यं सर्वतन्त्राणां हरिणा च प्रकाशितम्
ॐनमश्च परायेति परमेष्ठ्यात्मने नमः। यां नमो नमसा युक्तं पराय पुरुषात्मने ॥ ९८ ॥
नमो रां च परायेति ततो विश्वात्मने नमः । वां पराय निवृत्त्यात्मा ङेन्तो नमः पुनः पुनः ॥ ९९ ॥
लांनमश्च परायेति तथा सर्वात्मने नमः । इति मूर्ध्नि च नासाहृद्गुह्यपादेषु विन्यसेत् ॥
आत्मनश्च हरेर्वाऽपि तन्न्यासः परमाद्भुतः । तस्मात्सर्वात्मना विप्राः पञ्चोपनिषदो न्यसेत् ॥ १०१ ॥
संचिन्त्य नित्यममलं स्वप्रकाशमनामयम् । सच्चिदानन्दमद्वैतं भगवद्विग्रहं द्विजाः॥१०२॥
मूलान्ते देवदेवाय पाद्यादीन्क्रमशोऽर्पयेत् । कल्पयामीति सूक्तस्य ऋचा ह्येकैकयाऽथ वा
पञ्चामृतैश्च शुद्धोदैस्तथा संस्नापयेद्धरिम् । कुम्भोदकैः स्नानमन्त्रैः संस्कृतैस्तीर्थवारिभिः
महाभिषेकविधिना स्नापयेत्पुरुषोत्तमम् । तथा ह्याचमनं देयं देहोद्वर्तनकं तथा ॥१०५॥
धौतमाचमनं देयमुपवीतं च पादुका । हृदयादिमहामन्त्रान्संन्यसेन्मूलविद्यया ॥ १०६ ॥
कर्णिकायां न्यसेद्देवं ध्यात्वा वैकुण्ठवैभवम् । ततोऽङ्गपूजनं कुर्याद्भूषणायुधपूजनम् ॥
हृदयादिमहामन्त्रैर्हृदयादीन्प्रपूजयेत् । पादमारभ्य मूर्धान्तं द्वादशाङ्गेषु पूजयेत् ॥१०८॥
प्रणवादिनमोन्तैश्च केशवाद्यैः प्रपूजयेत् । पादजानूरुजघनकटिनाभ्युदरेषु च ॥ १०९ ॥
हृत्कण्ठबाहुवदनललाटेषु क्रमादिमान् । पूजयेत्परया भक्त्या गन्धपुष्पैर्महामते ॥११०॥
किरीटादीननुध्याय चतुर्बाहुचतुर्मुखान् । कृताञ्जलिपुटान्मूर्ध्नि दिव्यरूपान्प्रपूजयेत् ॥
किरीटादीननुध्याय किरीटाय नमो वदेत् । दक्षिणे श्रवणे दक्षकुण्डलाय नमस्तथा ॥
वामकुण्डलमानम्य वामतो वनमालिकाम् । प्रणवादिनमोन्तोऽयं सर्वत्र मनुरीरितः ॥
श्रीमत्तुलस्यै च नमः पुरतो हारमेव च । श्रीवत्सं कौस्तुभं काञ्चीं पीताम्बरमनुस्मरेत् ॥
अङ्गुलीयं च वलयमङ्गदं पादभूषणम् । भगवद्भूषणान्येवं पूजयेत्कुसुमोत्करैः॥ ११५ ॥
सुदर्शनं हेतिराजं रक्तवर्णं कृताञ्जलिम् । आलोकयन्तं लक्ष्मीशं पुरुषं मूर्ध्नि धारिणम् ॥
भगवच्चक्रममलं ज्वालामालि वरायुधम् । नन्दकाख्यं तथा खड्गपुरुषं खड्गधारिणम्
तथैव पद्मपुरुषं मस्तके पद्मधारिणम् । शङ्खात्मानं च पुरुषं पाञ्चजन्यधरं स्मरेत्॥११८॥
कौमोदकीं गदां शार्ङ्गं वहन्तमभिमानिनम् । तथैव शार्ङ्गपुरुषं शिरःशार्ङ्गधरं नमेत् ॥
सर्वदिव्यायुधं नत्वा पादसंवाहिनीस्तथा । चतुर्भुजं नागराजं कृताञ्जलिपुटं स्मरेत् ॥
हलं च मुसलं चैव धारयन्तं हरेर्मुखम् । पिबन्तमुल्लसत्स्मेरसहस्रफणमण्डितैः ॥ १२१ ॥
एवं संपूज्य देवेशं श्रीदेवीं दक्षिणे यजेत् । भूदेवी नामतः पूज्या लीलां चाग्रे समर्चयेत् ॥ १२२ ॥
निमलाद्यास्तु संपूज्या दलेष्वानीतचामराः । वासुदेवादयः पूज्याः पूर्वादिक्रमतो बुधैः ॥
वासुदेवः सीरपाणिः प्रद्युम्नश्चानिरुद्धकः । दिक्षु कोणेषु तत्पत्न्यो लक्ष्मीर्देवी रतिर्ह्युषा॥
द्वितीयावरणं पश्चात्केशवाद्याः सशक्तयः । श्रीलक्ष्मीः कमला पद्मा पद्मिनी कमलालया

---

१ क. ओं बीजं हुंप°।

रमा वृषाकपिर्धन्या पृथ्वी यज्ञा तथेन्दिरा। शक्तयः केशवादीनां संप्रोक्ताः परमे पदे ॥
संकर्षणादयश्चैव सपत्नीकाः समन्ततः। संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः॥१२७॥
पुरुषोत्तमोऽधोक्षजश्च नृसिंहोऽच्युतसंज्ञकः। जनार्दन उपेन्द्रश्च हरिः कृष्ण इति स्मृताः
हिरण्या हरिणी नद्या नित्यानन्दा त्रयीसुखा। सुगन्धा सुन्दरी विद्या सुशीला च सुलक्षणा ॥ १२९ ॥
संकर्षणादिमूर्तीनां शक्तयः संप्रकीर्तिताः। इज्या मत्स्यादयः पश्चात्सपत्नीकाः पृथक्पृथक्
वेदा वेदवती धात्री महालक्ष्मीः सुखालया। भार्गवी च तथा सीता रेवती रुक्मिणी प्रभा ॥ ३१ ॥
मत्स्यकूर्मादिमूर्तीनां शक्तयः संप्रकीर्तिताः। पश्चात्सशक्तयः पूज्याः शङ्खचक्रादिहेतयः
शङ्खश्चक्रं गदा पद्मं शार्ङ्गं च मुसलं हलम्। बाणश्च खड्गखेटौ च क्षुरिका दिव्यहेतयः
भद्रा सौम्या तथा माया जया च विजया शिवा। सुमङ्गला च नन्दा च हेता रम्या सुरक्षणी ॥ १३४ ॥
शक्तयो दिव्यहेतीनां पूजनीयाः सनातनाः। बहिर्लोकेश्वराः पूज्याः साध्याश्चैव मरुद्गणाः
एवमावरणं सर्वमर्चयेत्परमात्मनः। पुनरर्घ्यादिकं दत्वा धूपदीपान्निवेदयेत् ॥ १३६ ॥
वैनतेयादयः पूज्या विष्वक्सेनादयस्तथा। चण्डाद्या द्वारपाश्चैव विष्णोरतुलतेजसः ॥
प्रागुदीच्यां तु सेनेशं सपत्नीकं प्रपूजयेत्। पत्नीं सूत्रपतिं नाम्ना नागराज्ञं च वारुणीम्
वैनतेयं च कान्तिं च स्वकीर्तिं च प्रपूजयेत्। गजाननो जयत्सेनो हरिवक्त्रस्तथैव च ॥
कालप्रकृतिरित्येते विष्वक्सेनानुयायिनः। विष्वक्सेनस्तु सेनानीः पार्षदप्रवरो हरेः ॥
चण्डः प्रचण्डो भद्रश्च सुभद्रश्च जयस्तथा। विजयो धातृनामा च विधाता चापरो मतः
द्वौ द्वौ पूर्वं समारभ्य द्वारदेशेषु कीर्तिताः। सर्वे चतुर्भुजाः प्रोक्ताः शङ्खचक्रगदाधराः॥
पुनः पूर्वं समारभ्य कुमुदादीन्प्रपूजयेत्। कुमुदं कुमुदाक्षं च वामनं शङ्कुकर्णकम्॥१४३॥
सर्वनेत्रं च सुमुखं सुप्रतिष्ठान्तमेव च। इति नारायणं देवं मुमुक्षुः प्रयतः सदा ॥१४४॥
पूजयेत्परया भक्त्या नानासंभारसाधनैः। स्नानमाचमनं वासो ब्रह्मसूत्रोत्तरीयकम् ॥
पादुकां भूषणान्यङ्गे छत्रं चामरमेव च। चन्दनं कुसुमान्येवं धूपमष्टाङ्गमुत्तमम् ॥१४६॥
दीपं तु मूलमन्त्रेण परमन्नं निवेदयेत्। निवेदनप्रकारस्तु श्रूयतां मुनिसत्तमाः॥ १४७ ॥
पूर्वोक्तविधिना सम्यङ्निष्पन्नं यद्धविर्भवेत्। पाखण्डपतिताशुद्धविकर्मस्थानवेक्षितम् ॥
अचक्राङ्कैरमर्यादैर्वैष्णवैरपि नेक्षितम्। शुद्धं सत्त्वगुणोपेतमुच्छ्वासस्पर्शवर्जितम् ॥
घण्टाशङ्खनिनादेन समानीतं महानसात्। जयशब्दैर्नमःशब्दैरुद्घोषितमितस्ततः ॥
स्थापयेत्पुरुषो विष्णोर्मनुना शोधितेषु च। पात्रेषु पायसं शुद्धं सिताज्यपरिपूरितम् ॥
सिद्धौदनं दधिक्षीरमोदकापूपमण्डकान्। पूलिका घृतपूरं च शाकराजिफलानि च ॥
अन्यानि लोकरम्याणि ह्यविरुद्धानि शास्त्रतः। तुलसीगन्धपुष्पैश्च संपूज्यान्नं हरेः प्रियम्
संप्रोक्ष्यार्घ्यजलेनैव संरक्ष्यास्त्रेण सर्वतः। धेनुमुद्रां प्रदर्श्याथ ततो देवं निवेदयेत् ॥ १५४ ॥
भोज्यासने संनिविष्टं श्रिया सार्धं जगत्पतिम्। अर्घ्यपाद्यादिकं देयं पीठे संस्थाप्य पूर्ववत्

---

१ ख. रक्षा सु॰। २ ख. पुरतो वि॰।

मधुपर्कः प्रदातव्यः पयोदधिमधुप्लुतः । देयमाचमनं पश्चात्तदन्नं दर्शयेद्धरिम् ॥ १५६ ॥
इदं हविर्गृहाणेश रचितं तव भक्तितः । आपोशनं जलेनैव कारयेत्परमात्मने ॥ १५७ ॥
प्राणाहुतिं प्रयुज्याथ तत्तन्मुद्राप्रदर्शनैः । भोजनं भावयेत्पश्चान्मन्त्रराजं जपन्स्थितः ॥
मध्ये नीराजयेद्दीपैः शालिपिष्टविनिर्मितैः । राजिकालवणोपेतैः कृत्वा चोत्तानभाजनं ॥
दृष्टिदोषविघातार्थं देवदेवेश मुच्यते । पुष्पं पत्रं फलं तोयं यो मद्भक्त्या प्रयच्छति ॥
तदहं भक्त्युपहृतमश्नामीति वचस्तव । इति संचिन्त्य देवेश दीनस्य मम केशव ॥
गृहाण देवदेवेश प्रणतस्य दयानिधे । कृत्वा जवनिकां मध्ये नैच्यमावेदयन्निजम्॥१६२॥
साङ्गं सावरणं देवं चेतसा परिचिन्तयन् । हेमपात्रगतं दिव्यं जलं चन्द्रकपङ्किलम् ॥
शीतलं बहुलामोदमभिमन्त्र्य निवेदयेत् । आपोशनं पुनर्दत्त्वा करोद्वर्तनकं तथा॥१६४॥
शुद्धमाचमनं कार्यं सुगन्धेन विशोधयेत् । भोज्यासनात्सलक्ष्मीकं दत्त्वा सद्रत्नपादुकम्॥
नयेत्पीठं जपन्सूक्तं ताम्बूलं प्रोक्ष्य चार्पयेत् । पुनः संपूजयेद्भक्त्या कुसुमैर्धूपदीपकैः ॥
धूपमन्त्रेण देवस्य धूपयेदलकावलीम् । नीराजयेद्विधानेन नानावाद्याभिवादनैः॥१६७॥
आदर्शं दर्शयेत्पश्चात्प्रणिपातप्रदक्षिणाम् । कुर्यात्स्तुतिं परां भक्तिं प्रार्थयेत्पुरुषोत्तमात्॥
अपराधं क्षमाप्याथ व्यजनैश्चामरैरपि । संपूज्य भुक्तशेषेण बलिं भुवि विनिक्षिपेत् ॥
चण्डादिद्वारपालानां सर्वेषां च दिवौकसाम् । दद्यादुदकपूर्वेण हविःशेषं द्विजोत्तमाः ॥
अन्तर्चा[1] पौरुषस्यास्य सूक्तस्य सुरसत्तमान् । विष्णवर्पितं चतुर्भागं क्रमाद्द्रव्यस्य[2] चार्पयेत्
अनन्त तार्क्ष्य सेनेश पवित्राणां निवेदयेत् । तीर्थेन सहितं हव्यं पृथक्पात्रेषु निक्षिपेत्॥
स्वार्येभ्यो विष्णुभक्तेभ्यः प्रसादं तीर्थसंयुतम् । दत्त्वाऽऽत्मानं च मनसा कृतार्थं भावये-
त्कृती ॥ १७३ ॥
दासोऽहं भावयेत्पश्चात्स्वामिनं भावयेद्धरिम् । चेतनाचेतनं सर्वं शरीरं स्वामिनः स्मरेत्
आत्मनो धारकं देवं हरिमात्मतया स्मरेत् । स्वकर्तृत्वं परित्यज्य तदाज्ञापालनेन हि ॥
कर्तव्यं स्वोचितं कर्म यावदात्मस्थितिर्भवेत् । स्वरूपस्थितिमाश्रित्य भगवच्छेषवैभवाम्
आकाङ्क्षेन्नित्यनिरवध्यत्यन्तभगवत्सुखम् । परमैकान्तिकात्यन्तपरभक्तिपरो भवेत् ॥
तेनैव नित्यकैंकर्यस्वरूपस्थितिमेष्यति ॥ १७८ ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे भगवत्परिचर्याप्रकारो नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ ३७३४ ॥

---

अथ चतुर्थपादे तृतीयोऽध्यायः ।

---

श्रीब्रह्मोवाच—
अथाग्नियजनं वक्ष्ये वैष्णवस्य विशेषतः । पूजान्ते सर्वदा होमो ब्राह्मणस्य विधीयते ॥
न्यायार्जितैः साधनैश्च दानहोमार्चनादिकम् । कुर्यान्न चेदधो याति नारायणपराङ्मुखः
होमान्ते पितृयागः स्यात्प्रद्युम्नादिधिया द्विजाः । वैष्णवेष्टिश्च कर्तव्या ह्याज्ञेयं परमा-
त्मनः ॥ ३ ॥

---

१ क. अन्तर्चा पौ° । २ ख. °मद्रव्य° ।

वैदिकस्तान्त्रिको विप्रा मखोऽयं द्विविधः स्मृतः । अधिकारस्य भेदात्तु येनोपैति हरेः पदम् ॥ ४ ॥
भूमिं विशोध्य यत्नेन समां कुर्याद्विचक्षणः । कुण्डं तु तत्र कर्तव्यं हस्तमात्रेण यत्नतः
आत्मनः पञ्चमांशोऽयं हस्त इत्येकशाखिनः । कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः
चतुर्विंशतिभिर्हस्तः पूर्वोक्ताद्विगुणो मतः । युगानामनुरोधेन विज्ञेयः सर्वकर्मसु ॥ ७ ॥
पञ्चमांशेन निखनेदन्तःकोणचतुष्टयम् । दिशि दिश्यन्तरं चैव पार्श्वस्थलचतुष्टयम् ॥८॥
एवं संलक्षणं कृत्वा बहिः कुर्याच्च मेखलाम् । द्वादशाष्टचतुर्मानां स्वाङ्गुलैश्च प्रकल्पयेत् ॥ ९ ॥
चतुष्कं त्रितयं कुर्यादेवं स्यान्मेखलाक्रमः । कुण्डस्य पश्चिमे भागे योनिं कुर्यात्सुलक्षणाम् ॥ १० ॥
अश्वत्थपत्रसदृशीं कुण्डे किंचित्प्रतिष्ठिताम् । षट्चतुरूयङ्गुला साऽपि भवेन्निम्ना क्रमाद्विजाः ॥ ११ ॥
विस्तारेणाऽपि सा योनिर्भवेत्पञ्चदशाङ्गुला । मूलं नालं तथाऽग्रं व्युत्क्रमात्त्वष्टचतुस्त्रिकम्
तन्मानाङ्गुलमानं स्यात्तदेतत्कुण्डलक्षणम् । एकहस्तस्य कुण्डस्य प्रकारोऽयं प्रकाशितः ॥
द्विहस्तकुण्डमप्येवं द्विगुणीकृतमेखलम् । नाभिरप्यथ वा कुण्डमेकमेखलकं भवेत् ॥
संक्षेपकर्मसु तथा वर्तुलं प्रोच्यते मया । चतुष्कोणैकहस्तस्य बाह्यकुण्डस्य लक्षणम् ॥
समं विधाय सूत्रेण भ्रामयेदभितो द्विजाः । कोणे कोणे यदधिकं तद्विक्षेव विनिर्दिशेत्
कुण्डं च वर्तुलं कुण्डं ततः स्यादर्धचन्द्रकम् । दिशि चोत्तरतः कुण्डो कोणभागार्धभागतः
बहिरैन्द्र्याश्च वारुण्या यत्नान्मध्ये तु लाञ्छयेत् । संस्थाप्य भ्रामयेदेनमर्धचन्द्रं सुशोभनम्
मेखलाद्यष्टपत्राणि वर्तुलस्य निबोधत । पद्माकारं भवेदेतत्पुण्यं सर्वफलप्रदम् ॥ १९ ॥
शतहोमेऽरत्निमात्रं तदर्धं मुष्टिसंमितम् । द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ॥ २० ॥
दशलक्षेषु षड्ढस्तं कोटयामष्टकरं स्मृतम् । एकहस्तमितं कुण्डमेकहस्ते विधीयते ॥२१॥
लक्षणं दशकं यावत्तावद्धस्तेन वर्धयेत् । दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते ॥
इति वा कुण्डमानं स्यान्मेखलामानमुच्यते । कुण्डानां यादृशं रूपं मेखलानां च तादृशम्
कुण्डानां मेखलास्तिस्रः सत्त्वादिगुणरूपतः । मुष्टिमात्रे तु ताः प्रोक्ता उत्सेधायामतः समाः ॥ २४ ॥
द्व्येकार्धाङ्गुलमानेन भवन्ति मुनिसत्तमाः । अरत्निमात्रे कुण्डे स्युस्तास्त्रिद्व्येकाङ्गुलात्मिकाः ॥ २५ ॥
एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः । मेखलानां भवेदन्तः परितो नेमिरङ्गुलात् ॥२६॥
एकहस्तस्य कुण्डस्य वर्धयेत्तां क्रमात्सुधीः । दशहस्तान्तमन्येषामर्धाङ्गुलवशात्पृथक् ॥
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः । चतुर्हस्ते तु कुण्डे ता वस्वृत्वर्कगुणाङ्गुलाः ॥
कुण्डे रसकरे ताः स्युर्दशाष्टत्र्यङ्गुलान्विताः । वसुहस्तमिते कुण्डे भानुपङ्क्त्यष्टकाङ्गुलाः ॥
दशहस्तमिते कुण्डे मनुभानुदशाङ्गुलाः । होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् ॥ ३० ॥
मुष्टयरत्न्येकहस्तानां कुण्डानां योनिरीरिता । षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतिशालिनी॥

एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम् । एकैकाङ्गुलितो योनिं कुण्डेष्वन्येषु वर्धयेत् ॥
यावद्व्ययक्रमेणैव योन्यग्रमपि वर्धयेत् । स्थलादारभ्य नालं स्याद्योन्या मध्ये सरन्ध्रकम्॥
नार्पयेत्कोणकुण्डेषु योनिहोमपरायणः । कुण्डानां कल्पयेन्मध्ये नाभिमम्बुजसंनिभाम्॥
तत्तत्कुण्डानुरूपं वा मानमस्या निगद्यते । मुष्टयरत्न्येकहस्तानां नाभिरुत्सेधमानतः ॥
नेत्रवेदाङ्गुलोपेतां कुण्डेष्वन्येषु वर्धयेत् । यावद्व्ययक्रमेणैव नाभिं पृथगुदारधीः ॥ ३६ ॥
योनिकुण्डे योनिमब्जं कुण्डे नाभिं विवर्जयेत् । नाभिक्षेत्रं त्रिधा भित्त्वा मध्ये कुर्वीत कर्णिकाम् ॥ ३७ ॥
बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् । कुण्डानां नवकं प्रोक्तं स्वस्वकामानुसारतः ॥
मुमुक्षूणं वैष्णवानां चतुरश्रं प्रकीर्तितम् । सकामानां क्षत्रियाणां वर्तुलं परिकीर्तितम् ॥
वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यश्रमीरितम् । एतद्वर्णानुसारेण न निषिद्धं कदाचन ॥
विशेषकाम्यहोमे तु सर्वेषामखिलानि तु । पुत्रार्थं तु चतुर्णां तु योनिकुण्डं प्रकीर्तितम्॥
अर्धेन्द्वाख्यं तु सर्वेषां वश्यादिशुभकर्मणि । शत्रुक्षयार्थं त्र्यश्रं स्याद्वर्तुलं शान्तिकर्मणि॥
छेदमारणयोः कुण्डं षडश्रं तु प्रकीर्तितम् । पद्माभं वृष्टिदं प्रोक्तमष्टाश्रं रोगनाशनम् ॥
विप्राणां चतुरश्रं तु मखे निष्कामकामयोः । चतुरश्रं निवृत्तानां सर्वेषामेवमीरितम् ॥
स्वरूपं च प्रवक्ष्यामि संस्कारं च विशेषतः । प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ॥ ४५ ॥
उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे । स्थण्डिले वा प्रकर्तव्यो नित्यहोमो मनीषिणा ॥ ४६ ॥
विचारः कुण्डनिर्माणे बहुः प्रोक्तो विचक्षणैः । अष्टादश च संस्काराः कुण्डानां तु प्रकीर्तिताः ॥ ४७ ॥
वीक्षणं प्रोक्षणं चैव ताडनाभ्युक्षणे तथा । खननं पूरणं चैव समीकरणसेचने ॥ ४८ ॥
कुण्ठनं मार्जनं चैव त्रिसूत्रीकरणं पुनः । अर्चनं वज्रकरणं चतुष्पथविभावनम् ॥ ४९ ॥
तनुपादाक्षिकरणं संस्काराष्टादश स्मृताः । वीक्षणं मूलमन्त्रेण शरेणाऽऽद्योक्षणं मतम् ॥
तेनैव ताडनं दर्भे वर्मणाऽभ्युक्षणं मतम् । अस्त्रेण खननं चाग्नेर्हृन्मन्त्रेण प्रपूरणम् ॥५१॥
समीकरणमस्त्रेण सेचनं वर्मणा मतम् । कुण्ठनं हेतिमन्त्रेण वर्ममन्त्रेण मार्जनम् ॥ ५२ ॥
विलेपनं कलारूपकल्पनं तदनन्तरम् । त्रिसूत्रीकरणं प्रोक्तं मेखलापरिवेष्टनम् ॥ ५३ ॥
अर्चनं गन्धपुष्पाद्यैरस्त्रेण दृढतां नयेत् । हृन्मन्त्रेण कुशैश्चैव तत्र कुर्याच्चतुष्पथम् ॥
कवचेनैव कर्तव्यं तनुपादाक्षिपाटनम् । पूर्वोक्तभूतशुद्ध्यादि पात्रासादनमेव च ॥५५॥
पूजनं द्वारदेवानां मण्डपस्य च पूजनम् । कृत्वा संप्रार्थ्य च गुरुं यागकर्म समारभेत् ॥
संस्थाप्य प्रोक्षणीपात्रं प्रक्षाल्य च स्रुवं स्रुचम् । प्राणानायम्य मनसा श्रीमद्वैकुण्ठवैभवम्
स्मृत्वा जप्त्वा मनुवरं श्रीमदष्टाक्षरं सुधीः । आज्ञया वासुदेवस्य तेनैवाहं प्रवर्तितः ॥
दासोऽहमधुना सम्यगर्जितैर्यज्ञसाधनैः । स्वात्मानं सर्वगं सर्वशरीरं पुरुषोत्तमम् ॥ ५९ ॥
यक्ष्ये स्वरूपसंप्राप्तिद्वारा कैंकर्यसिद्धये । कुण्डे वा स्थण्डिले वाऽपि रेखास्तिस्रः प्रकल्पयेत् ॥ ६० ॥

---

१ ख. स्वकर्मानु° । २ ख. °नं लेपत्रि° । ३ ख. °रणे पु° । ४ ख. रेण प्रोक्ष° ।

ऊर्ध्वगाः प्राक्प्रतीचीस्थास्तिस्रश्चोत्तरदक्षिणाः । प्रागग्राणां स्मृता देवा मुकुन्देशपुरंदराः ॥ ६१ ॥
रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः । आधायाष्टदलं मध्ये षट्कोणं त्र्यश्रगर्भितम् ॥
केवलाष्टदलं वाऽपि वैष्णवानां प्रकीर्तितम् । सर्वाण्यभ्यर्च्य तारेण योगपीठमथार्चयेत् ॥
ऋतुस्नातां महालक्ष्मीमानयेत्कुशविष्टरे । संपूज्य लक्ष्मीं मनुना पद्माक्षीं पद्मसंभवाम् ॥
क्षीराम्बुराशिसंभूतां विष्णोरनपगामिनीम् । मातरं सर्वजगतो रिरंसुं विष्णुमानयेत् ॥
तिष्ठन्तमृतुदानाय कर्तारमखिलेश्वरम् । रेतोरूपं समानीय वह्निं चारणिसंभवम् ॥ ६६ ॥
वैष्णवायतनाद्वाऽपि विष्णुयागसमुद्भवम् । आनीतं पात्रमध्यस्थं क्रव्यादांशविवर्जितम् ॥
चतुर्भिश्चैव संस्कारैः संस्कृतं वीक्षणादिभिः । योजयेद्वह्निबीजेन चैतन्यं पावके तदा ॥
तारेण मन्त्रितं मन्त्री धेनुमुद्रामृतीकृतम् । अस्त्रेण रक्षितं पश्चात्कवचेनावगुण्ठितम् ॥
अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः । प्रदक्षिणं सतारं च मन्त्रमष्टाक्षरं जपन् ॥
आत्मनोऽभिमुखं वह्निं जानुभ्यामवनीं गतम् । विष्णुवीर्यधिया देव्या योनाविनं विनिक्षिपेत् ॥ ७१ ॥
पश्चात्तयोः प्रदातव्यं विधिनाऽऽचमनादिकम् । वह्निमन्त्रेण प्रज्वाल्य तत्र ध्यानं समाचरेत् ॥ ७२ ॥
विन्यसेदात्मनो देहे मन्त्रैर्जिह्वा हविर्भुजि । जिह्वास्तु त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु ॥
वैष्णवैस्तु सदा पूज्याः सात्विक्यो यागकर्मसु । हिरण्या कनका रक्ता कृष्णाऽन्या सुप्रभा मता ॥ ७४ ॥
बहुरूपा च रक्ता च सात्विक्यः परिकीर्तिताः । काम्यकर्मसु राजस्यस्तामस्यः क्रूरकर्मणि
नोपयुक्ता वैष्णवानां विष्णोराज्ञानुवर्तिनाम् । लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः ॥
हिरण्याद्यां न्यसेद्धीमानन्तर्यामिणमास्मरन् । वह्नेरङ्गमनून्न्यस्येत्तनावुक्तेन वर्त्मना ॥७७॥
सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठन्पुरुषः पुनः । धूमव्यापी सप्तजिह्वो धनुर्भृद्धुतभुक्क्रमात् ॥
हृदयादिषडङ्गेषु मूर्तीरष्टौ न्यसेत्पुनः । जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥ ७९ ॥
अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः । कौमारतेजाः स्याद्विश्वमुखो देवमुखस्तथा ॥
ताराग्नेयपदाद्याः स्युर्नत्यन्ता वह्निमूर्तयः । मूर्धाक्षिपार्श्वकट्यंसभ्रुकुटीपार्श्वकेषु च ॥
विष्ण्वात्मकं स्मरेद्वह्निं शङ्खचक्रगदाधरम् । पद्महस्तं चतुर्बाहुं हेमाभरणभूषितम् ॥८२॥
परिषिञ्चेत्ततस्तोयैर्विशुद्धैर्मेखलोपरि । दर्भैरगर्भमध्यस्थमेखलायां परिस्तरेत् ॥ ८३ ॥
निक्षिपेद्दिक्षु परिधीन्प्राचीवर्जं नरोत्तमाः । प्रादक्षिण्येन संपूज्यास्तेषु ब्रह्मादिमूर्तयः ॥
वैश्वानर जातवेदो लोहिताक्ष इहावह । सर्वकार्याणि मे देहि स्वाहा वह्निमनुः स्मृतः ॥
पूजयेद्गन्धपुष्पाद्यैर्यज्ञकाष्ठैः प्रदीपयेत् । प्रदीप्तेऽग्नौ प्रकर्तव्यं स्रुक्स्रुवादिविशोधनम् ॥८६॥
पाणिभ्यां स्रुक्स्रुवौ धृत्वा स्थितौ तावप्यधोमुखौ । त्रिशः प्रतापयेदग्नौ दर्भानादाय मन्त्रवित् ॥ ८७ ॥
तदग्रमध्यमूलानि शोधयेत्तैर्यथाक्रमात् । गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणेन तौ ॥८८॥
पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत् । आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशास्तरे ॥ ८९ ॥

---

1 ख. °त्वा कृत्वा ता° ।

आज्यस्थालीमथाऽऽदाय प्रोक्षयेदस्त्रवारिणा । तस्यामाज्यं विनिक्षिप्य क्षिपेत्तत्पूतये कुशौ
पवित्रीकरणं ह्येतत्कुशौ संदीप्य वर्मणा । नीराज्याऽऽज्यं क्षिपेदग्नावभिद्योतनमीरितम् ॥
कुशान्प्रज्वाल्य चास्त्रेण घृताक्ताञ्जातवेदसि । न्यसेदुद्द्योतनं प्रोक्तमथोत्पवनमाचरेत् ॥
गृहीत्वा घृतमङ्गारान्प्रत्युह्याग्नौ जलं स्पृशेत् । अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसंमितौ
धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनं त्विदम् । तद्वद्धृदयमन्त्रेण कुशाभ्यामात्मसंमुखम्॥९४॥
घृते संप्लवनं ह्येते संस्काराः षडुदीरिताः । प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे ॥९५॥
निक्षिप्य भागौ द्वौ कृत्वा पक्षौ शुक्लेतरौ स्मरेत् । वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः ॥ ९६ ॥
सुषुम्नां मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधि । स्रुवेण दक्षिणाद्भागादादायाऽऽज्यं हृदा मुदा ॥ ९७ ॥
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने । वामतस्तद्वदादाय वामे वह्निविलोचने ॥ ९८ ॥
जुहुयादथ सोमाय स्वाहेति हृदयाणुना । मध्यादाज्यं समादाय वह्नेर्भालविलोचने ॥
जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना । हृन्मन्त्रेण स्रुवेणाऽऽज्यं भागदादाय दक्षिणात्
जुहुयादग्नये स्विष्टकृते स्वाहेति तन्मुखे । इत्यग्निनेत्रवक्त्राणां कृत्वा चोत्पाटनं बुधाः ॥
सताराभिर्व्याहृतिभिराज्येन जुहुयात्पुनः । अष्टाभिराज्याहुतिभिः प्रणवेन पुनः पुनः ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः । अनन्तरं जातकर्म स्यान्नामकरणं तथा ॥१०३॥
उपनिष्क्रमणं पश्चादन्नप्राशनमेव च । चौलोपनयने भूयो वेदाध्ययनमेव च ॥ १०४ ॥
गोदानं च विवाहश्च संस्काराः शुभकर्मणि । ततश्च पितरौ तस्य संपूज्याऽऽत्मनि योजयेत् ॥ १०५ ॥
समिधः पञ्च जुहुयान्मूलाग्रघृतसंप्लुताः । तदा हृदयमन्त्रेण विधिवत्स्वाहया विना ॥
महागणेशमन्त्रेण विष्वक्सेनस्य पार्षदम् । गजाननं प्रजुहुयात्सम्यगेकादशाऽऽहुतीः ॥
सामान्यं सर्वमन्त्राणामेतदग्निमुखं मतम् । ततः प्रज्वालिते वह्नौ पीठमभ्यर्च्य वैष्णवम्॥
पूजयेत्परमात्मानं साङ्गं सावरणायुधम् । पञ्चविंशतिसंख्याकमाज्येनेष्टमुखे हुनेत्॥१०९॥
मूलेन वक्त्रीकरणमिदमुक्तं निबोधत । वह्निदैवतयोरैक्यमात्मना सह भावयेत् ॥ ११० ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । मूलमन्त्रेण जुहुयादाज्येनैकादशाऽऽहुतीः ॥
नाडीसंधानमुद्दिष्टमेतदागमशासने । श्रीमद्वैकुण्ठलोकं तु प्रकृतेः परमुत्तमम् ॥ ११२ ॥
विरजां नगरं विष्णोर्विमुक्तमणिमण्डपम् । स्मृत्वाऽऽज्येन हुनेन्मन्त्रैरेकैकामाहुतिं मुनिः ॥
ततो वै चरुणा होमं कुर्याद्वै मूलविद्यया । पौरुषेण तु सूक्तेन श्रियः सूक्तेन वा पुनः ॥
अन्यैर्वा वैष्णवैः सूक्तैस्तिलाज्यमधुरैरपि । पायसेनापि पुण्येन नानाद्रव्यैर्यजेद्धरिम् ॥
वस्त्रैराभरणैः स्रग्भिः फलैर्नानाविधैरपि । शतं सहस्रमयुतं लक्षं कोटिं विधानतः॥११६॥
वैष्णवैर्द्विजमुख्यैस्तु जुहुयाद्विभवे सति । वैकुण्ठपार्षदान्नित्यान्मुक्तान्विष्णुप्रियानथ॥
नाममन्त्रैः प्रजुहुयात्प्रत्यहं मुख्यपर्वसु । द्वादश्यामिष्टकाले तु संक्रान्तौ श्राद्धवासरे ॥
अन्येषु च विवाहादौ व्रतबन्धे च सद्मनि । वापीकूपतडागादौ प्रपारामप्ररोपणे॥ ११९॥
नवान्ने जन्मदिवसे विष्णुयागं समारभेत् । दीक्षायां चोत्सवे प्राप्ते शयन्यां बोधवासरे ॥

परिवर्त्य उपाकर्मगोदाने दानकर्मणि । यात्रादौ ग्रहणे चैव प्रायश्चित्ते विशेषतः ॥१२१॥
प्रतिष्ठायां हरेर्दोलारोहणे विजयोत्सवे । कार्तिके मार्गशीर्षे च मकरे मेषभास्करे ॥
मलिम्लुचे सिनीवाल्यां युगमन्वादिवासरे । रथयात्रादमनकपवित्रारोपणेषु च ॥१२३॥
अवतारजयन्तीषु वैष्णवानां समागमे । एवं होमं विधायाथ वैष्णवं वैष्णवोत्तमः ॥
नैमित्तिकं ततः कुर्यादाज्ञेयं परमात्मनः । ततः स्विष्टकृतं हुत्वा घृतेन मुनिसत्तमाः ॥
जलेन विधिना सम्यक्परिषिच्य समन्ततः । ततः पूर्णाहुतिं दद्याद्वैष्णवैर्ब्राह्मणैः सह ॥
ॐ भूरग्नये पृथिव्यै महते स्वाहया ततः । भुवो वायवे चान्तरिक्षाय दिवे महते स्वाहया ततः ॥ १२७ ॥
स्वश्चन्द्रमसे दिग्भ्यश्च नक्षत्रेभ्यः स्वाहया ततः । ॐ भूर्भुवः स्वश्चन्द्रमसे नक्षत्रेभ्यश्च महते स्वाहा ॥ १२८ ॥
इति हुत्वा स्रुक्स्रुवौ च घृतनाऽऽपूर्य तौ पुनः । होमद्रव्याणि निक्षिप्य नाभौ संस्थाप्य वैष्णवः ॥ १२९ ॥
ब्रह्मार्पणेन मनुना दद्यात्पूर्णाहुतिं पुनः । ॐ इति पूर्वप्राणबुद्धिदेहधर्माधिकारतः ॥
जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्कृतं यत्स्मृतं यदुक्तं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ॥ १३१ ॥
इति पूर्णाहुतिं दत्वा ध्यात्वा साङ्गं हरिं पुनः । गृहीत्वा ऽयायुषं प्रोक्ष्य प्रोक्षणीयजलेन च ॥ १३२ ॥
आत्मानं कुसुमं दत्वा साङ्गं देवं विसर्जयेत् । नारायणात्मके क्षेत्रपाले बलिमथाऽऽचरेत्
ब्रह्मात्मकतयेन्द्रादीन्मुन्यन्नेन बलिं नयेत् । नित्यनैमित्तिको होमो मया वः समुदाहृतः॥
अन्वाधानादिकं कर्म यत्कुर्यान्नित्यहोमके । ततो गुरुं भागवतान्पूजयेत्परया मुदा ॥
अनर्चिते गुरौ सर्वं निष्फलं भवति क्षणात् । गुरुरेव हरिः साक्षाद्विष्णुरेव न संशयः ॥
कर्तृत्वफलसंयोगं हित्वा यागं समाचरेत् । वैष्णवः स्वात्मलाभाय न लाभोऽन्यो मनागपि ॥ १३७ ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे वह्नियोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥३८७१ ॥

---

अथ चतुर्थपादे चतुर्थोऽध्यायः ।

---

मुनय ऊचुः—

पितृयागः कथं प्रोक्तो वैष्णवानां पितामह । किंरूपकाश्च पितरः किं फलं वद विस्तरात् ॥ १ ॥
प्रवृत्तिनिरतानां च या समाराधनक्रिया । एकरूपाऽथ वा भिन्ना फलभेदोऽस्ति वा न वा

श्रीब्रह्मोवाच—

मुनयः साधु पृष्टोऽस्मि लोकानां हितकाम्यया । पितरो हि हरिः साक्षाच्चतुर्व्यूहात्मकस्तु यः ॥ ३ ॥

पुरा नारायणं द्रष्टुं नारदो गन्धमादनम् । जगाम प्रेमसंपन्नो दैवे पित्र्ये च कर्मणि ॥४॥
स्थितं ददर्श देवेशं नरेण सहितं विभुम् । तदाऽऽश्चर्यमना विप्रः कर्मान्ते वाक्यमब्रवीत् ॥
देवदेवेश विश्वेश परमात्मन्परात्पर । करोषि किमिदं कर्म दैवे पित्र्ये च केशव ॥ ६ ॥

श्रीनारायण उवाच—

पितरः सर्वभूतानामस्माकं च मुने स्वयम् । भगवान्वासुदेवो हि मूलप्रकृतिरुच्यते ॥७॥
प्रकृतिर्यो हि भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः
पिताऽहमस्य जगतो धाता माता पितामहः । वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । इति मामवदत्पूर्वं भगवान्भूतभावनः॥१०॥
दैवे पित्र्ये च भगवान्संपूज्यः परमिच्छताम् । चातुर्विध्येन यो देवः सर्गादीन्प्रकरोति हि
वेदस्य कारणं ब्रह्मन्सन्मात्रमभिधीयते । तस्मिन्नाधारभूते हि सन्नामकमभूज्जगत्॥१२॥
सूक्ष्ममज्ञेयमग्राह्यमनौपम्यमिदं मुने । दण्डाहतोरगीवाऽऽसीन्निष्क्रियं नामवर्जितम् ॥१३॥
अधिष्ठानादनन्येन भाति द्रव्यगुणो यथा । सिसृक्षयाऽसृजत्तद्वै स्वाश्रितं नाम रूपयेत् ॥
निमित्तभूतं यत्तत्र समन्वेति तदेव तत् । आत्मा भवति सर्वेषां तत्तन्नामेति कीर्तितम् ॥
कारणे स्वाश्रितं कार्यं सदेवमभिधीयते । कार्ये तदेव तन्नाम तद्रूपगुणभाग्भवेत् ॥१६॥
ततः सूक्ष्ममविज्ञेयमव्यक्तममलं ध्रुवम् । इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते । क्षेत्रं शरीरमित्याहुस्तत्क्षेत्रं द्विविधं स्मृतम्॥
चिदचिच्छब्दनिर्दिष्टं तयोरात्माऽभवच्च सः । चितोऽभवच्छरीरं हि यदचिच्छेषसंज्ञितम्
क्षेत्रज्ञो यः स चित्प्रत्यगात्मांशो यः प्रकीर्तितः । परात्मनो ह्ययं तावत्क्षेत्रभूतो मतो मुने॥
क्षेत्रज्ञोऽप्ययमेवोक्तस्तस्य क्षेत्रद्वयं यतः । त्रिगुणाद्यतिरिक्तो वै पुरुषश्चेति कल्पितः ॥
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम । अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरव्यया ॥
तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः । आवाभ्यां पूज्यतेऽसौ हि दैवे पित्र्ये च कर्मणि ॥ २३ ॥
नास्ति तस्मात्परोऽन्यो हि पिता माताऽथ वा द्विज । आत्मा हि नौ स विज्ञेयस्ततस्तं पूजयावहे ॥ २४ ॥
पिता पितामहश्चाथ प्रपितामह एव च । एतेषामन्तरङ्गो हि विश्वात्मा पुरुषोत्तमः ॥
तदभेदेन यष्टव्यः सर्वेषां मुनिसत्तम । सामानाधिकरण्येन पित्रादिकृतनामकः ॥ २६ ॥
तदन्तर्यामियजनं वैष्णवानां निरूपितम् । मुमुक्षूणां च सर्वेषां विष्णोराज्ञानुसारतः ॥
तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकभाविनी । दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ॥ २८ ॥
ब्रह्मा स्थाणुर्मरुद्दक्षो भृगुर्धर्मस्तथा यमः । मरीचिरङ्गिरोत्री च पुलस्त्यः पुलहः क्रतुः॥
वसिष्ठः परमेष्ठी च विवस्वान्सोम एव च । कर्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ॥ ३० ॥
एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः । तस्य देवस्य मर्यादां पूजयन्तः सनातनीम् ॥
चिदचित्परमात्मेति तत्त्वत्रयविचिन्तनात् । दैवं पित्र्यं च कुर्वन्ति ज्ञानपूर्वं निरन्तरम् ॥

१ ख. दभेदेन° । २ ख. रालम्बनं च° । ३ ख क्रोधो नि° ।

ते कर्मबन्धनिर्मुक्ता ज्ञानाकारनिषेवणात् । ज्ञानैकाकारमात्मानं प्राप्नुवन्ति न संशयः ॥
ये तु ज्ञानमृते दैवं पित्र्यं कर्म ह्युपासते । ते भिन्नफलभोक्तारः संसारं प्रविशन्ति हि ॥
अन्तर्याम्यनुसंधानं फलसङ्गनिवर्तनम् । आत्मनश्चापि कर्तृत्वं ज्ञानमेतद्धि कर्मणि ॥३५॥
सर्वत्र जननं विष्णोरन्तर्यामितया मुने । वैष्णवानां गृहस्थानां धर्मोऽयं पारमार्थिकः ॥
दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः । आत्मप्राप्याणि च ततः प्राप्नुवन्ति द्विजोत्तमाः ॥ ३७ ॥
स्वर्गस्था अपि ये केचित्तं नमस्यन्ति देहिनः । ते तत्प्रसादाद्गच्छन्ति तेनाऽऽदिष्टफलां गतिम् ॥ ३८ ॥
ज्ञानिनां तु फलं त्वेकं निर्दिष्टं दैवपित्र्ययोः । अज्ञानं तु फलं नाना निष्फलं खलु चैव तत् ॥ ३९ ॥
ज्ञानिनः कर्मकर्तारः कर्म यत्प्रतिबन्धकम् । निवर्त्य स्वात्मसंप्राप्तौ मुक्ता एव भवन्ति हि
ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च । कलापञ्चदशत्यक्तास्ते मुक्ता इति निश्चयः ॥
मुक्तानां तु गतिर्ब्रह्मन्क्षत्रेज्ञ इति निश्चिता । स हि सर्वगुणश्चैव निर्गुणश्चैव कथ्यते ॥
प्रकृतेर्गुणसंयोगात्त्रिगुणः पुरुषोत्तमः । नित्यात्मगुणसंपन्नः स च सर्वगुणो मतः ॥४३॥
अव्यक्तोऽपि ह्यदृश्योऽपि दुर्गम्योऽपि महामते । ज्ञानेन कर्ममिश्रेण दुष्टकर्म व्यपोह्य च
व्यक्तिमायाति विप्रर्षे भगवान्सात्वतां पतिः । परमैकान्तिनां गम्यो नात्र कार्या विचारणा ॥ ४५ ॥
दृश्यते ज्ञानयोगेन ह्यावां च प्रसृतस्ततः । एवं ज्ञात्वा तमात्मानं पूजयावः सनातनम् ॥
तं वेदाश्चाऽऽश्रमाश्चैव नानामतसमाश्रिताः । भक्त्या संपूजयन्त्याशु गतिं चैव ददाति सः
ये तु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः । एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ॥ ४८ ॥
दैवं पित्र्यं च कर्तव्यं तदाज्ञापालनाय हि । प्रीतः प्रयच्छति क्षिप्रं धर्ममेकान्तिनां हरिः
इति नारायणेनोक्तं नारदाय विपृच्छते । द्वयोरेकफलं विप्रा द्वयोरेकं च दैवतम् ॥ ५० ॥
दैवे साक्षाद्धरिः पूज्यः शङ्खचक्रगदाधरः । अन्तर्यामिधिया पित्र्ये पूज्यः पित्रादिरूपतः
वैष्णवानां विशेषोऽयं पित्र्ये कर्मणि वर्तते । तदहं संप्रवक्ष्यामि संक्षेपान्मुनिसत्तमाः ॥
विष्णुशेषेण यष्टव्याः पितरो द्वादशीदिने । अन्यथा निरयं यान्ति पितरो येऽस्य जन्मदाः ॥ ५३ ॥
वैष्णवानां विशेषोऽयं दैवे पित्र्ये च कर्मणि । पशुघातो न कर्तव्यो मुन्यन्नेन परा गतिः
न श्राद्धे ह्यामिषं देयं पितॄणां च कदाचन । न चाऽऽमिषाशिनः पित्र्ये यष्टव्याः श्राद्धकर्मणि ॥ ५५ ॥
वैष्णवैः सततं पूज्या वैष्णवा ब्राह्मणा द्विजाः । न च मांसाशिनः शैवाः शाक्ताश्चापि ह्यवैदिकाः ॥ ५६ ॥
लिङ्गिनोऽशुचयः क्षुद्रा भूतभैरवचिन्तकाः । नानादेवैकनिरताः प्रयोगादिविधायिनः ॥
देवान्नसेविनो मन्त्रपीठविक्रयिणश्च ये । प्रेतान्नभोजिनो विप्रा न पूज्याः श्राद्धकर्मणि॥
अनूर्ध्वपुण्ड्रिणः शङ्खचक्रलाञ्छनवर्जिताः । एकादश्यन्नभोक्तारो गुरुधर्मविनिन्दकाः ॥

अभेध्यस्पर्शनिरतास्त्यक्तविष्णूत्सवाश्च ये । अगीतापाठिनो विष्णौ सामान्यमतयो द्विजाः
अमन्त्रतिलका वामा नित्यकर्मविवर्जिताः । अनुक्तकारिणोऽनुक्तभोजिनोऽनुक्तसेवकाः
दैवे पित्र्ये न वै पूज्या जटाभस्मादिधारिणः । मद्यपानरतानां च पातकौषधिसेविनाम् ॥
रसविक्रयिणां सङ्गं दूरतः परिवर्जयेत् । अज्ञातगोत्रप्रवरा विप्रा ये कूटसाक्षिणः ॥
श्राद्धादौ नैव संपूज्या विप्राश्चान्त्यजवृत्तयः । श्राद्धकालस्तु संप्रोक्तो विष्णुना प्रभविष्णुना ॥ ६४ ॥

वैष्णवेन प्रकर्तव्यं श्राद्धं सच्छ्रद्धया द्विजाः । नारदाय मया प्रोक्तो धर्मोऽयं द्विजसत्तमाः
मदुक्ते शङ्कितमना निर्धाराय गतो हरिम् । नारदेन पुरा पृष्टो भगवान्मधुसूदनः ॥ ६६ ॥
प्रपन्नस्त्वां हरे देव कथं देवान्तरं यजेत् ॥

श्रीभगवानुवाच—

न च देवान्तरधिया वैष्णवैरर्च्यते परः ॥ ६७ ॥
कर्मत्यागेन मे विप्र शासनं कुत्र विद्यते । कर्मणा मनसा वाचा यत्नात्कार्यं सदैव हि ॥
सऋणैरनृणैर्वाऽपि यावद्देहक्षयं द्विज । विविक्तं धर्ममेतावत्सिद्धानामपि देहिनाम् ॥
संसेव्यमाज्ञया मे तु नात्र कार्या विचारणा । असिद्धेन तु कर्तव्यं ज्ञानपूर्वं द्विजोत्तम ॥
आत्मासिध्यर्थमप्येष सिद्धोऽयं लोकसंग्रहात् । नाऽऽचरेद्योऽपि वै सिद्धो लौकिकं धर्ममग्रतः ॥ ७१ ॥

उपप्लवं स कुरुते धर्मस्य मम नारद । त्यागाल्लोकस्य धर्मस्य ग्लानिर्भवति सर्वतः ॥
तदर्थमहमेवापि न त्यजामि सनातनम् । विवेकज्ञैरतस्तस्माल्लोकाचारपथा स्थितैः ॥
आदेहपाताद्यत्नेन रक्षणीयः प्रयत्नतः । आचाराणां हि सर्वेषां धर्माणां मुनिसत्तम ॥
श्राद्धं मे रोचते याहक्तादृङ्नैवापरं तु वै । तस्य कालं विधानं च यथावदवधारय ॥
सितासिते च द्वादश्यावमावस्या च पूर्णिमा । राहुसंदर्शनं चैव सूर्यसंक्रमणं तथा ॥
श्राद्धं तत्र प्रयत्नेन काम्यं कुर्याच्च भक्तितः । नवान्नप्राशने चैव तीर्थे वाऽऽयतने हरेः ॥
प्राप्ते क्षेत्रेऽप्यसंसिद्धे प्रतिष्ठायां पवित्रके । वापीकूपतडागानां वृक्षाणां परिरक्षणे ॥
गोदानादौ धनत्यागे व्रतारम्भे तदन्ततः । शास्त्रश्रवणनिष्पत्तौ चाऽऽरम्भे च तथैव हि ॥
वत्सरे वत्सरे विप्रमित्राप्तानां कुटुम्बिनाम् । युगादिषु च मन्वादौ श्राद्धं कुर्याद्विचक्षणः॥
पूजयित्वा पुरा देवं तर्पयित्वा हुताशनम् । प्रयुक्तेन विधानेन ततस्त्वाहूय वैष्णवान् ॥
प्रक्षालिताङ्घ्रीन्स्वाचान्तान्प्रोक्षितेनास्त्रवारिणा । रात्रौ स्त्रीसङ्गरहितान्विष्णुसूक्तप्रपाठकान् ॥ ८२ ॥

पवित्रहस्तान्संशुद्धान्परानिन्दाविवर्जितान् । संमुखान्मन्त्रनाथस्य चोत्तराभिमुखानपि ॥
आसनेषु विविक्तेषु परिच्छिन्नेषु नारद । गायत्र्या भस्मरेखासु शङ्कुनाऽस्त्रान्वितेन वा ॥
हृदास्त्रपरिजप्तानामासनानामथोर्ध्वतः । प्रतिष्ठाप्याऽऽसने पूर्वे त्वेकमादौ तु वैष्णवम् ॥
हृद्युक्तेनाथ तेनैव स्वधासंपूजितेन च । पितुः पञ्चवसाने तु नाम्नाऽन्यमुपवेशयेत् ॥
शिरसा संयुतेनाथ गृहीत्वा पाणिना द्विज । नाम्ना पितामहीयेन प्रतिष्ठाप्याऽऽसनेऽपरम्
नेत्रस्वधावसानेम त्वक्षरेण स्वमूर्तिना । प्रपितामहनाम्ना तु वैष्णवं चापरं न्यसेत् ॥

चत्वार एव वै पूर्वं मन्त्रपीठस्य संमुखाः। लक्ष्मीमन्त्रचतुष्केण मातुर्वाऽस्य कुलस्य वा
अस्त्रेण पितृवर्गस्य तूत्तराभिमुखं द्वयम्। प्राङ्मुखौ दैविकौ विप्रौ विप्रास्त्रय उदङ्मुखाः
एकैको वोभयत्र स्यादसंपत्ताविति क्रमः। पात्रं वा दैविकं कृत्वा विप्र एकस्तु पैतृके॥
इति वा निर्वपेच्छ्राद्धे निर्धनश्चान्यदाचरेत्। संपत्तावपि पात्राणामेकैकस्य त्रयस्त्रयः॥
पित्र्ये वैष्णवाः प्रोक्ताश्चत्वारो वैश्वदेविकाः। द्वौ वाऽपि दैविके प्रोक्तावेकैको वा न
दोषभाक्॥ ९३॥
स्यान्मातामाहिकेऽप्येवमेको वै वैश्वदेविके। मातामहे तु कर्तव्यं षड्दैवत्यमथापि वा॥
पार्वणद्वयकं वा स्यान्मुनीनां मतभेदतः। आसनादिप्रदानेन स्थापितान्वैष्णवान्द्विजान्
द्वादशार्णेन मन्त्रेण पूजयेद्विधिना क्रमात्। मन्त्रन्यासश्च सर्वेषां कर्तव्यो द्वादशाक्षरैः॥
ऋग्भिः पुरुषसूक्तस्य मन्त्रराजस्य चाक्षरैः। सर्वे चतुर्भुजा ज्ञेयाः शङ्खचक्रगदाधराः॥
किरीटकौस्तुभधरा वैनतेयासनोर्जिताः। प्रोद्यता इव चोर्ध्वं तु पितृभूतस्य नारद॥
ततो हृदयमन्त्रेण चार्घ्यपात्रोदकेन तु। सिञ्चेत्क्रमेणाङ्घ्रियुगमेकैकस्मिन्महामते॥
मूलमन्त्रेण तदनु पाणिभ्यां तु तिलोदकम्। वैष्णवानां च पितरो न वै नरकवासिनः॥
न याम्यां यातनां यान्ति न वैवस्वतसद्मनि। पितृलोके न ते सन्ति परमैकान्तिनो हि ते॥
साक्षाद्वैकुण्ठनाथस्य द्वारदेशावलम्बिनः। प्रद्युम्नसंकर्षणकवासुदेवस्वरूपकाः॥ १०२॥
पिता पितामहश्चैव तथैव प्रपितामहः। अस्मिन्ममाध्वरे यूयं विष्णुशेषं निवेदयेत्॥
गन्धपुष्पादिकं सर्वं स्वी कुरुध्वं स्वधा हि वः। इदमर्घ्योदकं दिव्यं तुलसीदलमिश्रितम्॥
निर्णेजनं भगवतः पादयोः प्रतिगृह्यताम्। धूपशेषं भगवतस्तथा दीपं नमोऽस्तु वः॥
अर्घ्यं दत्त्वा पुनः पात्रे समाहृत्यास्त्रमन्त्रतः। पूजयेद्गन्धपुष्पाद्यैः पवित्रारोपणोत्तरम्॥
पवित्रं तु कुशैः कार्यं तुलसीपल्लवैश्च वा। संस्थाप्याग्रे भगवतः संपूज्यार्घ्यादिभिर्द्वि-
जान्॥ १०७॥
तेषु तांश्चिन्तयेत्प्राज्ञः पितॄन्मातामहानपि। विश्वेदेवांस्तथा ध्यात्वा विष्णोः पारिषदो-
त्तमान्॥ १०८॥
आदाय शिरसा तेषामाज्ञां वै श्राद्धकर्मणि। आगता हि महाभागाः स्वागतं कृपया
मयि॥ १०९॥
यावच्छ्राद्धं प्रवर्तेत तावत्संनिहिता ननु। निमन्त्रितान्द्विजान्प्रार्थ्य संस्थितानर्पितासने॥
प्रार्थयेद्भगवन्तं तु पितॄणां यागकर्मणि। भगवन्पितृयागार्थं प्रार्थये त्वां विशेषतः॥१११॥
तेषामनुग्रहार्थं च यागमाहर मेऽच्युत। एवं संप्रार्थ्य देवेशं कर्मपात्रं निधाय च॥११२॥
संसाधयेच्चरुं धीमान्क्षीरेण सुरभेः स्वयम्। प्रोक्षयेदस्त्रमन्त्रेण भक्तं सुव्यञ्जनान्वितम्॥
सर्वं संसाधितं किंचिद्भक्ष्यपानादिभोजनम्। चेतसा कल्पयेत्सर्वं पितॄणां तृप्तये तु तत्॥
यथा निवेशिताः पूर्वं मण्डलेष्वथ नारद। अस्त्रेण प्रणवेनैव पात्राणि क्षालयेत्क्रमात्॥
पितृपात्राणि दैवानि स्वे स्वे स्थाने निवेशयेत्। प्रजपेयुर्द्विजास्तावद्वैष्णवाः स्वासनेषु च
परिवेषणं तु यावत्स्यात्सूक्तानि हरितुष्टये। दधिक्षीरान्नपानं च क्रमाद्यस्येप्सितं च यत्॥
तुलसीदलसंमिश्रं पात्रेषु परिवेषयेत्। अर्घ्यपुष्पैस्तथा धूपैर्लेपनाञ्जनदीपकैः॥ ११८॥

संपूज्य परया भक्त्या पुनः पृच्छां समाचरेत् । तृप्ताः स्मोवादिनो यावत्प्रब्रूयुर्वैष्णवा द्विजाः ॥ ११९ ॥
स्वल्पं स्वल्पं प्रदातव्यं मुन्यन्नं विष्णुदर्शितम् । भुञ्जानं तदशेषेण स्मरेन्नारायणं हरिम्॥
हविष्यान्नं घृतोपेतं क्वथितावटकादिकम् । तद्वीर्यमुष्मणा सार्धं तस्मिन्परिणतं स्मरेत् ॥
तेन संभावयेत्तृप्तिमतीव मुनिसत्तम । सर्वेषामन्नवीर्यं चाप्येवं परिणतं स्मरेत् ॥ १२२ ॥
प्रणवेनामृतेनैव ततो नारायणात्मने । तदन्ते तु नमः कुर्यान्मन्त्रोऽयं पितृतर्पणे ॥१२३॥
दीक्षितानेव सच्छ्राद्धे पितॄनुद्दिश्य तर्पयेत् । अथाऽऽसनेषूपविष्टानन्यानन्नं प्रदापयेत् ॥
दक्षिणां मुखवासं च दत्त्वा विप्रान्विसर्जयेत् । सगोत्रैर्बन्धुभिः साकं स्वयं भुञ्जीत वाग्जितः ॥ १२५ ॥
एवं श्राद्धपरो विप्रो महाभागवतो मतः । सदैव दीक्षितानां च यागमन्त्रेण वैष्णवः ॥
सर्वान्संपाद्य यत्नेन यथालब्धेन केनचित् । वस्तुनाऽपि पवित्रेण चेदं श्राद्धं समापयेत्
कदन्नेन कुदेशे चाप्यापन्नेनापि नारद । ज्ञानविज्ञानमन्त्राद्यैः संपाद्यं विद्धि शाश्वतम्
देशे काले तथा पात्रे श्रद्धापूतं तु किं पुनः । वैष्णवः परमं पात्रं देश आयतनं हरेः ॥
द्वादशी सर्व कालानामुत्तमा परिकीर्तिता। नैमित्तिकेषु यो भेदः श्राद्धे प्रोक्तो मया द्विज
जय शास्त्राज्ञया सर्वमवधार्यं विपश्चिता । पुत्रो मे नारदो विप्राः श्रुत्वा भगवतोदितम्॥
निःसंदेहोऽभवत्पूर्वं श्राद्धं विष्णवेकदैवतम् । ब्राह्मणानां भोजनं च पिण्डानामर्चनं तथा
केऽपीच्छन्ति महाभागाः शाखाभेदाद्द्विजन्मनाम् । श्रौतेन विधिना वाऽपि वैष्णवानां समर्चनम् ॥ १३३ ॥
तैस्तैर्मन्त्रैः प्रकर्तव्यमन्तर्यामिधिया तथा । प्रद्युम्नादिधिया पुत्रस्त्वनिरुद्धः स्वयं यजेत् ॥
वैष्णवानां गृहस्थानां कर्तव्यं दैवकर्मवत् । इदं तु वैष्णवं श्राद्धं मुन्यन्नेनैव वर्तयेत् ॥
नाऽऽमिषं न मधु प्रोक्तं खड्गपात्रं न चैव हि। नैकादश्यां प्रकर्तव्यं न तिर्यक्पुण्ड्रधारणम्
नानिवेद्य प्रदातव्यं नादेवं कुत्रचिन्मतम् । काकपिण्डं न दातव्यं वैष्णवानां कुले यतः ॥
नागतिर्जायते विप्रा मृतानां पापिनामपि । नृत्यन्ति पितरस्तस्य प्रनृत्यन्ति पितामहाः॥
वैष्णवोऽयं कुले जातः किं करिष्यति नो यमः। शोचन्ति पितरोऽन्येषां यज्वानः स्वर्गता अपि ॥ १३९ ॥
नास्माकं वैष्णवो जातो यो नयेद्भगवत्पदम्। अस्माभिरर्जिते पुण्ये क्षयं जाते च कः पुनः
धारयिष्यति नः पाताद्विना श्रीवैष्णवान्सुतान् । अर्जितं सुकृतं लोके यज्ञदानदयादिभिः॥
नार्जितो वैष्णवो धर्मो नार्जितो वैष्णवः सुतः। दैवं पित्र्यं मानुषं च तस्य तावदिह स्थिरम्
यावत्सर्वात्मना विष्णोः शरणं नैति मानवः ॥ १४२॥

तस्मादनन्यशरणाः पुरुषोत्तमस्य लीलागृहीतवपुषो भवताच्युतस्य ।
सर्वस्तदैव भवतां सफलो मुनीशाः स्वाध्याययोगजपदानक्रियाकलापः॥ १४३ ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे श्राद्धविधानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥ ४०१४ ॥

अथ चतुर्थपादे पञ्चमोऽध्यायः ।

श्रीब्रह्मोवाच–

एकादश्याश्च माहात्म्यं प्राक्पृष्टं शृणुतामलाः । वैष्णवानां परं नास्ति व्रतं लोकेषु मुक्तिदम् ॥ १ ॥
अनादिवासनाबद्धो जीवोऽयं परिमुह्यति । विषयावटमार्गेषु नैति शान्तिं मनागपि॥२॥
परहिंसारता लोभमोहानृतभयाकुलाः । संसरन्ति भवाम्भोधौ नानादुःखौघभागिनः ॥
तान्विलोक्य महादेवी लक्ष्मीर्जलजलोचना । पप्रच्छ शेषपर्यङ्कनिरूपितपदाम्बुजम् ॥
भगवन्भविता सुप्तो मायायां प्रीतिबोधितः । जीवो नैवाभिजानाति तमसा व्याप्तलोचनः ॥ ५ ॥
बोधितं नाऽऽचरेत्कर्म मुक्तये यदि कश्चन । मित्रस्य नैव दोषोऽस्ति दोषोऽस्यैवास्ति केवलम् ॥ ६ ॥
कण्टकेषु कुमार्गेण गच्छन्तं न निवारयेत् । दोषः सहचरस्यैव प्रतिबुद्धस्य केशव ॥ ७॥
त्वं सखा सर्वजीवानामाश्रयः प्रतिबोधकः । त्वद्भासा भासते सर्वं जगत्स्थावरजङ्गमम्॥
त्वं भाश्चक्षुर्हि जीवानां त्वं गतिस्त्वं परायणः । अतस्त्वमेव जीवस्य निस्तारोपायमावह ॥ ९ ॥
केन जीवस्य निर्मोक्षो वासनाजालपञ्जरात् । को जपः किं व्रतं कान्त किं तपः किं च संश्रयम् ॥ १० ॥
बद्धस्य पञ्जरान्मुक्तिः सुलभा चकदेशतः । बाह्यान्तरनिबद्धस्य दुस्त्यजं तव बन्धनम्॥
चक्षुषा स्थूलरूपेण रज्ज्वा रूपस्वरूपया । निबद्धो वासनारूपतन्तुभिर्बहुभिः सितः ॥
श्रोत्रनासास्यत्वङ्मेढ्रनिबद्धः श्रवणादिभिः । तद्वृत्तितन्तुजालैश्च कथं मुक्तो भवेदिह ॥

श्रीनारायण उवाच—

जपस्त्वष्टाक्षरो देवि व्रतं त्वेकादशीव्रतम् । तपः संतोष आख्यातं संश्रयो भगवत्प्रिया ॥
एकादश्या च सर्वेषामाश्रयः कमलालया । त्रिभिर्निष्पद्यते कान्ते चतुर्थं व्रतमुत्तमम् ॥
अद्याऽऽजन्मकृतं देवि जपादीनां चतुष्टयम् । एकादश्यां कृतं कान्ते सर्वं तत्समतामियात्
त्रिरात्रं तु व्रतं ह्येतल्लोकानां पावनाय मे । निहितं स्वकरे देवि सर्वबन्धननाशनम्॥१७॥
पृथिव्यादीनि भूतानि कालः क्षणलवादिकः।इन्द्रियाणि च देवाश्च मामेवमुपतस्थिरे ॥

सर्व ऊचुः—

भवतोत्पादिताः सर्वे निदेशमनुवर्तिनः । किं कुर्मः कथयेशान किमर्थोत्पादिता वयम् ॥

श्रीभगवानुवाच—

सर्वेषामहमाधारो मयि सर्वमिदं जगत् । प्रलीनं बीजरूपेण चेतनाचेतनात्मकम् ॥ २० ॥
उत्पादिता मया सर्वे यूयं जीवस्य मुक्तये । अशरीरो ममांशोऽयं नायं भोक्तुमिहार्हति
भवद्भिः साध्यतामेषां शरीराणि च सर्वशः । एकीभूय महाभागा भूतेन्द्रियसुरैः खलु॥

---

१ ख. °पः कथसंश्रयः । २ ख. °भा नेक° ।

त ऊचुः—
भोक्ता यद्यव्ययं जीवो यस्य वा स्याम चाऽऽलयम् । तथाऽपि तत्प्रसङ्गेन तत्तद्भूताभि-
मानिनः ॥ २३ ॥
मालिन्यमभियास्यामः कथं नो निष्कृतिर्भवेत् । इति श्रुत्वा वचस्तेषामहमूचे वरानने ॥
श्रीनारायण उवाच—
इन्द्रियाणां च देवानां पातकानां प्रशान्तये । शरीराकारभूतानां शुद्धये निर्मिता मया॥
एकादशीति विख्याता तिथीनामुत्तमा तिथिः । तस्याः संमाननाद्देवाः सर्वेषां शुद्धि-
रुच्यते ॥ २६ ॥
तीर्थस्नानेन या शुद्धिर्या शुद्धिः प्राणसंयमात् । भूतानां भूतशुद्ध्या च या शुद्धिः
परिकीर्तिता ॥ २७ ॥
एकादश्यां तु सा शुद्धिर्भविष्यति न संशयः । विनाऽन्नप्राशनात्तापो यो भविष्यति
देहिनाम् ॥ २८ ॥
तेन तापेन कायस्य शुद्धिर्देवार्चने मता । देहस्थानां च भूतानां द्वयमप्यन्नसेवनात् ॥
देहस्य धारणं चैव प्रमादालस्यमेव च । प्रमदादिभिरानन्दमूर्तिसंसेवनेन हि ॥ ३० ॥
अन्ने दोष इति प्रोक्तस्तस्योपायो द्विधा मतः । परित्यागो द्वितीयस्तु विधिना तन्निषे-
वणम् ॥ ३१ ॥
सात्त्विकं वैष्णवैर्विष्णोरर्पितं शुद्धवृत्तिजम् । ज्ञानप्रदं च मनसः प्रसादजननं स्मृतम् ॥
सर्वदा तत्परित्यक्तुं नैव शक्यं शरीरिणाम् । एकादश्यां परित्यागो कर्तव्यो हितमि-
च्छता ॥ ३३ ॥
अन्नमाश्रित्य तिष्ठन्ति पातकानि महान्त्यपि । एकादश्यां यतो विष्णोरन्तरायकरं हि तत्
मन्त्राभ्यासो दिने पूजा ध्यानं जागरणं निशि । कर्तव्यं कीर्तनं वाद्यं नटनं हरिसंनिधौ
मा दन्तलग्नस्यान्नस्य जिह्वास्पर्शो भवेदिति । दन्तधावनकं वर्ज्यमेकादश्यामतो बुधैः ॥
कीर्तनेन वचः शुद्धिर्वार्षिकी जायते प्रिये । बिम्बस्य दर्शनाद्विष्णोश्चाक्षुषी शुद्धिरीरिता
श्रवणाद्यशसो विष्णोः श्रोत्राणां शुद्धिरीरिता । नत्या च शिरसः शुद्धिस्त्वचः साष्टा-
ङ्गवन्दनात् ॥ ३८ ॥
उत्तीर्णधूपपुष्पाद्यैर्नासाशुद्धिर्वरानने । करयोर्मार्जनादिभ्यः प्रादक्षिण्यात्पदोरपि ॥
एकादश्यां सकृत्कृत्वा सर्वेषां देहवासिनाम् । आ जीवनान्तं या शुद्धिः सा शुद्धिर्जायते
ध्रुवम् ॥ ४० ॥
रात्रौ जागरणं कार्यं तत्र चाऽऽहूय वैष्णवान् । महामाया निशा तेन निस्तीर्णा जायते
खलु ॥ ४१ ॥
न भेतव्यं न भेतव्यं पातकैः पक्षसंचितैः । एकादशी निशा तस्मिन्नाऽऽयास्यति सवल्लभा
न भेतव्यं न भेतव्यं पातकैर्वर्षसंचितैः । एकादशीति विख्याता तिथिर्या हरिवल्लभा ॥
भो देवाः करणस्था हि मा खिद्यन्तु मनागपि । भवद्भिः साध्यतां देहः साधितैकादशी
मया ॥ ४४ ॥
करिष्यन्ति जनाः सर्वे पक्षयोरुभयोरपि । तेन वः स्वर्गतिस्तस्य देहस्थानां भविष्यति॥

एकादशीव्रतस्थस्य ये च संबन्धिनो मताः । चेतनाचेतनाः सर्वे कृतार्था नात्र संशयः ॥
सूर्योदये भवद्भिस्तु स्वांशैरास्थीयतां तनुः । नरैराचरिता पूजा मदीयैकादशीदिने ॥
तेन युष्मद्‌वतां स्थानमक्षयं भविता सुताः । नाकृत्यदोषसंपर्को भविष्यति मनागपि ॥
भवतामुपकारेण जीवोऽयं पापपञ्जरात् । निर्गमिष्यति सुस्थानं कृत्वा चैकादशीव्रतम् ॥
भवदर्थं कृता चैषा तिथिरेकादशी मया । जनैराचरिता देवा गतिं दास्यन्ति निश्चितम् ॥
अतः कुरुध्वं संभूय सृष्टिमंशैर्दिवौकसः । इति श्रुत्वा वचो देवि प्रहृष्टाः सृष्टिकारिणः ॥
शरीरं जनयामासुस्ते देवा विष्णुतेजसा । एवं संपादिता देवि मया सृष्टिं वितन्वता ॥
अतः सर्वैर्जनैः सेव्यं सामान्यैस्तद्व्रतं महत् । मया देवि वरो दत्तो देवानां हितमिच्छता ॥
भवतां पातकैस्तेषां गतिश्चाधो भविष्यति । ये लब्ध्वा मानुषं देहं करिष्यन्ति न मद्व्रि-
तम् ॥ ५४ ॥
निद्रया नक्तमन्नाद्यैर्दिवा चार्थेहया तथा । तस्मादेकादशी चाष्टवर्षादारभ्य भामिनि ॥
कर्तव्याऽशीतिपर्यन्तं निराहारेण सर्वदा । जलाहारेण वा कुर्यादशक्तेन फलादिभिः ॥
नक्तेन वा हविष्येण चैकभुक्त्या निरन्धसा । जपपूजा तु न त्याज्या ह्याज्ञेयं मामकी प्रिये ॥
यस्याहं मोक्षमिच्छामि तस्मै दद्यां मतिं व्रते । एकादशी न कर्तव्या विद्धा चैवारुणोदये
वैष्णवैस्तु विशेषेण विद्धा त्याज्या वरानने । दशमी प्रेतराजाय तिथिर्दत्ता मया पुरा ॥
तस्या योगे न कर्तव्यं मामकं दिनमुत्तमम् । यावन्ति व्रतमुख्यानि मदीयानि हरिप्रिये ॥
अन्यवासरमिश्राणि न कुर्यादरुणोदये । तिथिप्रवेशमिच्छन्ति मामका अरुणोदयात् ॥
स एव मुख्यकालस्तु संकल्पस्यावधार्यताम् । दशमीदिनमारभ्य मामकं तु दिनत्रयम् ॥
माननीयं विशेषेण जनैः काम्यादिवर्जनैः । वैष्णवैरुत्सवः कार्यो ज्ञात्वा मज्जन्मवासरम्
वितानतोरणालेपसेकमार्जनदीपकैः । पूजनं केशवादीनां मूर्तीनां कमलालये ॥ ६४ ॥
पञ्चामृतैश्च नैवेद्यैर्हवनैः संस्तवैरपि । सहस्रनामपठनैर्महापुरुषविद्यया ॥ ६५ ॥
कुसुमाञ्जलिभिर्विष्णुं तथा वैकुण्ठपार्षदान् । तोषयेत्परमान्नेन नृत्यगीतोत्सवादिभिः ॥
रजनीं गमयेत्प्राज्ञः पुनश्चारुणनिर्गमे । कृत्वा चाऽऽवश्यकं कर्म पूजायागं समारभेत् ॥
विप्रान्द्वादश चाऽऽहूय महाभागवतान्प्रिये । अधीतविष्णुसूक्तांश्च केशवादिधियाऽर्चयेत्
साङ्गं सावरणं देवं पूजापीठे निवेश्य च । पञ्चामृतेन संस्नाप्य तथा सर्वौषधैरपि ॥
गन्धैर्धूपैः सुरभिभिः पुष्पैश्चैव प्रपूजयेत् । नीराजनार्घ्यदानैश्च कुसुमाञ्जलिभिस्तथा ॥
सूर्यसंदर्शनात्पूर्वं द्वादश्यां पूजयेद्धरिम् । हरिवासरमुत्सृज्य विप्रान्संतोष्य वैष्णवान् ॥
द्वादश्यां पारणं कुर्याद्धुत्वाऽग्नौ मूलविद्यया । पारणं तु त्रयोदश्यां कुर्याद्विद्धां परित्यजेत्
पारणाहे मुहूर्तेऽपि द्वादशी तु भवेद्यदि । तस्यां वै पारणं कुर्यात्कृत्वा माध्याह्निकीं
क्रियाम् ॥ ७३ ॥
दिवास्वापं मैथुनं च परान्नं तत्र संत्यजेत् । इयं तु द्वादशी पुण्या चतुर्धा मम वल्लभा
शयनी बोधनी देवि तृतीया परिवर्तनी । मार्गशीर्षभवा या तु शुक्ला वाराहवल्लभा ॥
आसु पुण्यासु मामेकमुत्सवैः संप्रपूजयेत् । रथोत्सवं निरूप्याथ गत्वा पुण्यसरिद्वराम् ॥

---

१ ख. °नैः काम्यादि° ।

श्वेतद्वीपं प्रकल्प्यात्र संपूज्य स्वापयेद्धरिम् । आषाढ्यां वैष्णवैः सार्कं जयमङ्गलनिस्वनैः
प्रतप्तशङ्खचक्राद्यैरङ्कयेद्भुजमूलयोः । आदिपादेऽनुराधायास्तदभावे तु केवले ॥ ७८ ॥
प्रस्वापयेद्धृषीकेशं वृष्टिनाशोऽन्यथा भवेत् । परिवर्तस्तु कर्तव्यो द्वादश्यां श्रवणस्य च
मध्यपादे महाभागे मासे नभसि शोभने । आविर्भावो वामनस्य त्वस्यामेव विनिर्दिशेत्
वैष्णवान्पूजयेद्भक्त्या कृत्वा होमं हुताशने । कार्तिके शुक्लपक्षस्य द्वादशी रेवतीयुता ॥
तस्यां प्रबोधयेद्विष्णुं चतुर्थे चरणे मुदा । प्रबोध्य देवदेवेशं प्रसुप्तं क्षीरसागरे ॥ ८२ ॥
शय्यायां पन्नगेन्द्रस्य श्रिया सार्कं महोत्सवैः । महापूजा प्रकर्तव्या ह्यभिषेचनकैर्जलैः ॥
सप्तावरणसंयुक्तं संपूज्य पुरुषोत्तमम् । रथयानं प्रकर्तव्यं दीपवृक्षान्विधाय च ॥ ८४ ॥
वादयेत्सर्ववाद्यानि पाठयेत्मङ्गलस्तवान् । भ्रामयेत्स्यन्दनं विष्णोर्वैष्णवैः समलंकृतैः ॥
आनीय मन्दिरं देवं भक्त्या नीराजयेद्भृशम् । मुद्राधारणपूर्वं तु कुर्यादेतन्महोत्सवम् ॥
प्रातः संपूज्य हुत्वाऽग्निं वैष्णवान्भोजयेद्विजान् । द्वादशी मार्गशीर्षस्य देवि चातीव वल्लभा ॥ ८७ ॥
अस्यामभ्यर्चनं नूनं कोटियज्ञफलप्रदम् । इष्टिं भागवतीं कुर्यादस्यामेव वरानने ॥ ८८ ॥
विधिमस्याः प्रवक्ष्यामि जनानां गतिदायिनीम् । उपोष्यैकादशीं शुद्धां द्वादश्यां पूर्वव-द्धरिम् ॥ ८९ ॥
अर्चयित्वा विधानेन गन्धपुष्पाक्षतादिभिः । पौरुषेण तु सूक्तेन श्रीमदष्टाक्षरेण वा ॥
अर्चयेज्जगतामीशं सर्वाभरणभूषितम् । ततो भागवतान्सर्वानर्चयेत्परितो द्विजान् ॥९१॥
पुष्पैर्वा तुलसीपत्रैः सलिलैरक्षतैरपि । प्रल्हादं नारदं चैव पुण्डरीकं बिभीषणम् ॥९२॥
रुक्माङ्गदं तत्सुतं च हनुमन्तं शिबिं भृगुम् । वसिष्ठं वामदेवं च व्यासं शौनकमेव च ॥
मार्कण्डेयं चाम्बरीषं दत्तात्रेयं पराशरम् । हारीतात्री एकतं च द्वितं चैव त्रितं तथा ॥
भारद्वाजं बलिं भीष्ममुद्धवाक्रूरपूर्वकान् । गुहं शुकं च वाल्मीकिं मनुं स्वायंभुवं तथा ॥
मातङ्गं शबरीं चैव पृथुं भागवतोत्तमम् । सनन्दनं च सनकं कुमारं च सनातनम् ॥९६॥
वोढुं पञ्चशिखं चैव गजेन्द्रं च जटायुषम् । सुशीलां त्रिजटां गौरीं शुभां विद्यावलीं तथा ॥ ९७ ॥
अनसूयां द्रौपदीं च यशोदां देवकीं तथा । सुभद्रां चैव गोपीश्च शुभा नन्दव्रजे स्थिताः
नन्दं च वसुदेवं च दिलीपं च विशेषतः । सभर्तृकां च कौसल्यां जनकं वसुसंज्ञकम् ॥
भूतभव्यभविष्यांश्च महाभागवतानिमान् । नारदादीन्प्रपन्नांश्चाप्यनन्तं विहगेश्वरम् ॥
सेनेशं नित्यमुक्तांश्च स्थापयेत्परितो हरेः । दीक्षितानां द्विजातीनां तनुष्वावाहयेदिमान् ॥
पाद्यार्घ्याचमनादीनि दत्त्वा चोर्द्वतनैः पुनः । पञ्चामृतैः पञ्चगव्यैः कषायौषधिवारिभिः ॥
स्नापयेत्क्रमशो भक्त्या स्वाधिकारेण संस्थितान् । हृदादिमन्त्रकल्पैश्च कुर्यादुपकृतिं क्रमात् १०३ ॥
दत्त्वाऽऽचमनकं धौतं वस्त्रं प्रोक्षणकं तथा । कुशादिनिर्मितैश्चैव पीठेषु विनिवेशयेत् ॥
उत्तरीयाणि देयानि द्वादशाक्षरविद्यया । ऊर्ध्वपुण्ड्राणि विधिना केशवादिकनामभिः ॥
कुर्यादङ्गेषु गन्धेन लेपनं भक्तितत्परः । तुलसीमालिकाभिश्च धूपदीपनिवेदनैः ॥१०६॥
भक्ष्यैर्भोज्यैश्च चोष्यैश्च पेयैर्नानाविधैस्तथा । भोजयेत्परमान्नेन विधिना साधितेन वै ॥

यद्यदिष्टतमं यस्य तत्तत्तस्मै निवेदयेत् । ततः सुशीतलं वारि चन्द्रकोशीरवासितम् ॥
अर्पयेद्भक्तियुक्तेन चेतसा वीजयेच्च तान् । ततः पूगफलोपेतैरेलापुष्पलवङ्गकैः ॥ १०९ ॥
सच्चूर्णं पूगताम्बूलं मूलेनाऽऽशु समर्पयेत् । दक्षिणावस्त्रगोस्वर्णकर्णकुण्डलमुद्रिकाः ॥
हरिर्मे प्रीयतां भक्त्या विप्ररूपो जनार्दनः । प्रणमेद्दण्डवद्भूमौ साष्टाङ्गं प्रेमविह्वलः ॥
धन्योऽहं भावयेद्विप्रपादशौचावनेजनैः । नीराजयेत्ततो विष्णोः पादमूलं विचिन्तयेत् ॥
अनया वैष्णवेष्टया मे वासुदेवो दयानिधिः । कैंकर्यं मे ददात्वीशः श्रीभूलीलापतिः प्रभुः
परधर्मपरज्ञानपरभक्तिसमन्वितम् । करोतु मामचिन्त्यात्मा भगवान्भक्तवत्सलः ॥११४॥
अनन्यशेषतां चैव तथाऽनन्यप्रयोजनम् । अनन्यसाधनत्वं च देवो मह्यं प्रयच्छतु ॥
अहं भुवेतिसूक्तेन दद्यान्नीराजनं हरेः । क्षमाप्य स्वापराधान्वै वैष्णवांस्तु विसर्जयेत् ॥
आकारत्रयसंयुक्तान्नवेज्याकर्मतत्परान् । अर्थपञ्चकतत्त्वज्ञान्महाभागवतान्नमेत् ॥११७॥
वैष्णवानामभावे तु वैष्णवैकं प्रपूजयेत् । न नयेद्वासरं वन्ध्यं स्तवैर्नत्या प्रपूरयेत्॥११८॥
इमां तु वैष्णवीमिष्टिं सर्वदा तु समाचरेत् । मृताहे जन्मदिवसे वैष्णवस्य गुरोरथ ॥
स्वस्य वा धर्मकार्ये च विवाहे सर्वपर्वसु । विष्णोराराधनान्ते तु होमान्ते च वरानने ॥
पूजयेद्विधिना विप्रान्महाभागवतान्मुदा । अनन्तविहगेशादिपार्षदप्रवरोत्तमान् ॥१२१॥
मान्या चतुर्विधा त्वेवं द्वादशी परमादरा । मद्भक्ते नान्यहस्तेऽहं वशीभूतो वसाम्यहम्॥
चैत्रे तु शुक्लद्वादश्यां पवित्रारोपणं मम । कृत्वाऽऽन्दोलोत्सवं पूर्वमेकादश्यां वरानने ॥
एकादशीं समारभ्य वैशाखं सकलं नयेत् । कृत्वा नानाविधैः पुष्पैर्दोलामान्दोलनेन मे॥
यथैवैकादशी प्रेष्ठा तथैव द्वादशी मम । तथैव वैष्णवाः प्रेष्ठास्तथैव मधुमाधवौ ॥१२५॥
श्रावणे द्वादशी प्रोक्ता पवित्रारोपणे प्रिये । त्वयाऽहं पूजितो भद्रे प्रयच्छामि निजं पदम्
एकादशीसमं नैव वासरं मम वल्लभम् । नाष्टाक्षरसमो मन्त्रो न धर्मो वैष्णवात्परः ॥
जीवानां प्रतिबुद्धानां मुक्तये हि मया कृता । एकादशीपद्मभवे द्वादशीसहिता कलौ ॥
मम त्वया वैष्णवैश्च संतोषो न जपेन च । निष्पन्ना जायते देवि वल्लभैकादशी मम ॥
एकाऽप्याचरिता सम्यङ्महापातकिनामपि। पातकं क्षालयेदेषा शरज्जलमलं यथा ॥
चिन्तामणिः कामधेनुर्यथा कल्पतरुर्नृणाम् । तथैव कामदा लोके मता ह्येकादशी तिथिः
भुक्तिमुक्तिप्रदा नान्या गङ्गेव वरवर्णिनी। न चाहमिव लोकेऽस्मिन्नाश्रयोऽस्ति विचिन्तय
तस्मात्प्रवर्तयोपायं मत्प्राप्तौ दिवि सत्वरम् । प्रसुप्तेषु जनेष्वेकमेतदेकादशीव्रतम् ॥१३३॥
श्रुत्वैवं मुनयो लक्ष्म्या लोकानां श्रेयसे व्रतम् । विष्वक्सेनाय संप्रोक्तं मन्त्रराजेन वै मम
एवमेकादशी पुत्रास्तथा वैष्णवपूजनम् । द्वयं प्रोक्तं भवत्प्रीत्या किमन्यच्छ्रोतुमर्हथ ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपाद एकादशीमाहात्म्यं नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ ४१४९ ॥

---

अथ चतुर्थपादे षष्ठोऽध्यायः।

---

मुनय ऊचुः—

भगवन्रुद्रगीतेन भद्रबाहुश्च गौतमः । कथं भागवतौ भूत्वा गतिं भागवतीं गतौ ॥ १ ॥

किं तत्त्वं वासुदेवस्य रुद्रेणोक्तं पुरातनम् । कुतश्चाध्यगमज्ज्ञानं पादोदकशिराः शिवः ॥

ब्रह्मोवाच—

न बोधमगमद्राजा भद्रबाहुर्यदा पुरा । शिवेन बोधितोऽपीह वाक्यैर्वेदान्तगर्भितैः॥ ३ ॥
पप्रच्छ प्रणतो भूत्वा शंकरं वृषभध्वजम् । भगवन्भवता प्रोक्तो मोक्षदः पुरुषोत्तमः ॥
मामकस्मादयं देव गौतमोऽवञ्चयत्कथम् । प्रवक्ता तव तत्त्वस्य कर्ता शास्त्रस्य शंकर ॥
तदहं श्रोतुमिच्छामि विस्तरेण मुखात्तव। संशयो मे महानस्ति नान्यस्त्वत्तोऽस्य नाशकः
परस्य रूपं जीवस्य स्वरूपं बन्धमोक्षयोः । निर्णयं वासुदेवस्य विभूतेश्च निरूपय ॥७॥

श्रीशिव उवाच—

नमो जलजनेत्राय सर्गस्थित्यन्तकारिणे । नारायणाय देवाय विशुद्धज्ञानमूर्तये ॥ ८ ॥
राजंस्तेऽहं प्रवक्ष्यामि शृणुष्वैकमना ऋतम् । वचः श्रुतिकथोपेतं परमात्मनिरूपणम् ॥
अप्येति सकलं यस्मिन्यत्संज्ञां प्राप्य तिष्ठति । एकमेवाद्वितीयं च तद्ब्रह्मेत्यवधार्यताम्॥
यस्मिन्स्थूलविशेषोऽयं नास्ति मायाविनिर्गतः। निर्विशेषोऽविशिष्टोऽयं सूक्ष्मरूपेण मानद
मन्नामकमिदं ब्रह्म रूपनामादिवर्जितम् । अनामरूपं तद्ब्रह्म स्वाश्रयं त्ववधार्यताम् ॥
यस्यांशभूतकालेन यस्याऽऽज्ञामनुवर्तिना । सिसृक्षा जायते यस्य तद्ब्रह्मेत्यवधार्यताम् ॥
य एकोऽहं बहु स्यामित्युत्थाप्याऽऽत्मगतं जगत् । नाराणामयनं यत्स्यादित्याह श्रुति-
रात्मना ॥ १४ ॥
निर्विशेषं निराधारं निःसंकल्पं निरञ्जनम् । नारायणेतिशब्देन सर्वावस्थासु बोध्यते ॥
बृहन्तोऽस्मिन्गुणाः सत्यज्ञानानन्दादयो नृप। तस्माद्ब्रह्मेतिशब्देन सर्वावस्थासु बोध्यते॥
नारायणेति ब्रह्मेति परमात्मेति शिष्यते। मायातीतस्य नामानि नित्यानि विलसन्ति हि ॥
परमात्मेति विख्यातः प्रवेशाद्विष्णुरुच्यते । समावस्थामवष्टभ्य स्थितः सर्वस्य मानद ॥
कर्तृत्वपालयितृत्वसंहर्तृत्वगुणैर्युतः । स्वकृतान्नियमात्काले करोत्यवति हन्ति नः ॥१९॥
स एव सर्गकाले तु संप्राप्ते पुरुषोत्तमः । क्षोभयामास संसुप्तं पुरुषं प्रकृतिं पुनः ॥२०॥
साऽसूत त्रिगुणं क्षोभं तैरसूत महत्तरम् । महत्तत्वं महाभाग तत्रान्वेति यदृच्छया ॥
विशेषसंज्ञात्संभूतात्सविशेषः स उच्यते । कार्यो नारायणमयादव्याकृतोऽव्याकृतादयम्॥
नारायणाभिव्यक्तिस्तु बहुधा समजायत । अयनाद्व्यक्तभूतानां नरेष्वायतनादपि ॥२३॥
जलेषु शयनाद्वाऽपि नारायण उदीरितः । परमात्मादिशब्दानामेवमेवान्वयादिह ॥२४॥
विशेषे बहुनामानि सगुणानि भवन्ति हि । निर्गुणान्येव राजेन्द्र निर्विशेषे भवन्ति हि॥
महदादिषु कार्येषु महदादिकसंज्ञितः । भूतेषु भौतिकेष्वेकः प्राणेन्द्रियमनःसु च ॥२६॥
आत्मा समभवद्ब्रह्म वेदान्तैकविदो विदुः । एवं संकल्पमात्रेण सर्वं समभवत्पुरा ॥२७॥
बहुत्वमेवमापन्न एक एवाभवत्तु यः । सर्वेषां योनिरप्येष सर्वेषां च निधिस्त्वयम् ॥२८॥
सर्वेषामवधिश्चाऽऽत्मा सर्वेषां पुरुषोत्तमः । न ब्रह्मा न हरो नेन्द्रो न यमो वरुणो वसुः
न सूर्यो न शशाङ्कश्च नाग्निर्नाऽऽपो न वै मरुत्। न प्रजापतयश्चान्ये मनवो न मरुद्गणाः॥
न दिशो विदिशो नैव नान्तरिक्षं न वै क्षितिः । एको नारायणस्त्वासीदाधारः स्वाश्र-
योऽगुणः ॥ ३१ ॥
नित्यानन्तगुणोपेतो बीजभूतोऽव्ययोऽच्युतः । तस्माद्ब्रह्मा समभवद्धरोऽहं वासवो यमः

---

१ ख. °हि कर्मस्वभावयुक्तेषु स्वसत्तावत्सु कारणम् । चिदचित्सु समन्वेति तद्धारकतया मतः ॥° ।

वसुः सूर्यः शशाङ्कश्च वह्निरापो नभः क्षितिः । मनुः प्रजापतिमुखस्तस्मादेव व्यजायत ॥
तस्मात्पुरुष एवेदं भूतं भव्यं भवच्च यत् । यथाऽस्य शक्तिः प्रकृतिस्त्रिगुणा परमेश्वरी ॥
कोटिब्रह्माण्डभाण्डानां संश्रया कारणात्मिका । सच्छन्दवाच्या सर्गादौ साक्षाद्ब्रह्म-स्वरूपिणी ॥ ३५ ॥

विकारो जायते तस्मात्सर्वोऽपि ब्रह्मसंज्ञितान् । देहरूपेण कार्येण सर्वान्व्याप्नोति पूरुषान् ॥
अतः प्रकृतिरात्मेति गीयते कार्यरूपिणी । विश्वस्मिन्सकलं वस्तु चेतनाचेतनं नृप ॥
विना प्रकृतिसंसृष्टिं विद्यते नैव किंचन । तथाऽस्य चेतना शक्तिः प्रकृतिर्जीवसंज्ञिता ॥
धात्री सर्वविशेषस्य प्राकृतस्य विशांपते । आ ब्रह्मभुवनाल्लोकानावृत्य प्रभया स्वया ॥
व्याप्य तिष्ठति सर्वत्र तस्मादात्मेति कथ्यते । अचेतनमिदं सर्वं चेतनस्य महामते ॥४०॥
शरीरभूतं विज्ञेयं नेङ्गते चेतनं विना । अण्वीं जीवकलामेतां प्रविश्य सकलां तनुम् ॥
प्रवर्तयति तेनैष विष्णुरित्यभिधीयते । वसत्यस्मिञ्शरीरस्थे वासुदेव इति स्मृतः ॥४२॥
अचेतनाद्बृहन्तोऽस्मिन्प्राणाः सन्ति नृपोत्तम । तेनास्य संज्ञा ब्रह्मेति जीवस्यापि विधी-यते ॥ ४३ ॥

जीवो हि सच्चिदानन्दलक्षणः प्रकृतेः परः । अचेतना या प्रकृतिश्चतुर्विंशतिधा स्मृता ॥
शरीरभूता सा राजंश्चेतनायत्तवैभवा । चेतना प्रकृतिर्भिन्ना प्रतिदेहं व्यवस्थिता ॥४५॥
ज्ञानाकारेणैकरूपा परायत्तस्थितिर्हि सा । चेतनाचेतनं सर्वं शरीरं परमात्मनः ॥ ४६ ॥
परमात्मा स्वतन्त्रोऽयं राजन्सर्वेश्वरो हरिः । चेतनेषु च सर्वेषु चेतनोऽयं प्रजापतिः ॥
ब्रह्माऽस्माकं गुरुर्ज्ञेयः कृपापात्रं रमापतेः । समष्टिः सर्वजीवानां जनानां वारिधिर्यथा ॥
सोऽस्य नाभिह्रदाम्भोजादाविर्भूतश्चतुर्मुखः । नायं साधारणो जीवः साक्षात्प्रतिनि-धिर्हरेः ॥ ४९ ॥

उत्कृष्टाद्रजसो जातः संकल्पेनार्थसाधकः । सर्वजीवनिकायोऽसौ भगवत्प्रतिमो मतः ॥
प्रभावाद्यः स्वयं ह्येष पाद्मं कल्पमथासृजत् । स तु नारायणसुतो व्याप्तो ब्रह्माण्डविग्रहे
व्यष्ट्यात्मको यथा जीवः स्वशरीरे महामते । सर्वेषां हृदयज्ञोऽयं प्रेरकः सर्ववृत्तिषु॥५२॥
परमात्मा स्मृतो राजन्समष्टिवपुषो ननु । अस्य ब्रह्माण्डदेहस्य सत्तावृत्तियुतः पुमान् ॥
आत्मा चतुर्मुखो ज्ञेयः पूज्यो वन्द्यस्तु देहजैः । द्विपरार्धावसानोऽयं सर्वेषां वरदो मतः ॥
सर्वेश्वरः सर्वपतिः सर्वेषां च पितामहः । सर्वेभ्यो जीवजातेभ्यः स्वतन्त्रो नित्यवैभवः ॥
बृहन्तोऽस्य गुणास्तस्माद्ब्रह्मा चेत्यभिधीयते । ईश्वरो मुक्तिदः पुंसां तेजोगर्भः स्वरीश्वरः
वेदगर्भो वेदमुखो वेदसृग्वेदबोधितः । सर्ववेदान्तवाक्यानामतो ब्रह्मा गतिर्मतः ॥ ५७ ॥
अंशभूतो भगवतो महाभागवतोत्तमः । नारायणाश्रितोऽसीमो यतोऽयं ब्रह्मसृड्मतः ॥
ततोऽयं विशतेऽण्डान्ते भक्त्या प्रकृतिवर्जितः । आश्रयान्तरनिर्मुक्तो नित्यानन्तगुणास्पदः
प्राप्यो भोग्योऽथ गम्यश्च सर्वेषां नृपसत्तम । प्रसादजो यथा ह्येष क्रोधजोऽपि तथा ह्यहम् ॥ ६० ॥

तमसा घोररूपेण संहर्ता तत्प्रसादतः । पञ्चवक्त्रो महादेवो महाकायो महेश्वरः ॥ ६१ ॥
मृत्युरूपेण सर्वत्र व्याप्तोऽहं प्राकृतेषु च । यमरूपेण रौद्रेण शत्रुरूपेण भूपते ॥ ६२ ॥
कलयामि जगत्सर्वं भूतप्रेतगणाधिपः । आवयोर्न समस्तेन कुतोऽधिकतरस्ततः ॥ ६३ ॥

तदाश्रयत्वात्प्रेर्यत्वात्स एव परतः परः । सर्वात्मा सर्वभर्ता च सर्वेशः सर्वसंश्रयः ॥
सदनन्तगुणाधारो मुक्तिदोऽयमुपासताम् । शरीरत्वाद्वयं सर्वे तस्येशस्य रमापतेः ॥
गीयामहेऽनन्य एव तत्त्वमस्यादिवाक्यतः । आत्मैव पर्युपास्योऽयं मोक्तुमिच्छद्भिरेव हि ॥
लक्षणैश्चास्य निष्पत्तिः कर्तव्या वेदवादिभिः । एते वयं महाभाग स्वस्य चेतसि नित्यशः
चिन्तयामो घनश्यामं योगमार्गविशोधिते । नारायणं श्रियोपेतं वनमालिनमव्ययम् ॥
बोधयन्तं च नो बुद्धिमनःप्राणेन्द्रियाणि च । भक्तानामात्मनो रूपं व्यञ्जयन्तं मनोहरम्
अभक्तानां मनोवृत्तेर्दूराद्दूरतरं मतम् । निश्चितं सर्ववेदेषु वैष्णवं परमं पदम् ॥ ७० ॥
गुणत्रयाद्यतीतं तद्व्यापकं हेयवर्जितम् । नात्र कालगतिर्ज्ञेया ह्येकरूपं सनातनम् ॥
शान्तं विकल्परहितं निर्विशेषमगोचरम् । नित्यानन्दमनौपम्यं चरमं वैष्णवं पदम् ॥
नातः परं प्रगन्तव्यं सर्वावधितया मतम् । यावन्न प्राप्यते राजन्भगवान्भूतभावनः ॥
प्राप्यं नाधिगतं तेन वृथैव भ्रमता सता । विभूतयो वयं सर्वे ब्रह्माद्याः सकलेश्वराः ॥
प्रविशामो मुहुस्तस्मिन्सरितः सागरे यथा । केवलं नामरूपाभ्यां बुद्बुदा इव वारिधौ
उत्पद्यन्ते प्रलीयन्ते कर्मवातेरिता मुहुः । परतन्त्रा वयं सर्वे वाक्तन्त्र्या विनियोजिताः ॥
न शक्नुमो महाराज दातुं भोक्तुं मनागपि । वहामो हि बलिं तस्मै विष्णवे प्रभविष्णवे
कालरूपेण यो लोकान्ग्रसते निरनुग्रहः । वीक्षणाद्यस्य जायन्ते ब्रह्माण्डानां च कोटयः
संलीयन्ते च संकोचाज्जलेषु लवणं यथा । चतुर्धाऽपि क्षयो यस्मिञ्जायते परमेश्वरे ॥
तमिमं प्रणताः सर्वे विसर्गोऽपि यतो मतः । जीवोऽयं विशतेऽव्यक्तेऽव्यक्तं च परमात्मनि
परमात्मा निजे रूपे लीनमादाय तिष्ठति । व्यक्ताव्यक्तं विनिर्मुच्य यदा भागवतो भवेत्
अभ्येति वैष्णवं धाम यतो नाऽऽवर्तते पुनः । यावत्प्रकृतिसंसर्गो राजञ्जीवस्य तिष्ठति ॥
तावन्न प्राप्यते ब्रह्म स्वाधिष्ठानमनामयम् । अटन्तु सर्वतीर्थानि पठन्तु सकलागमान् ॥
यजन्तु निखिलान्यागान्नाऽऽप्नोति परमं पदम् । न विद्या हीयते राजन्विना भक्तिं जनार्दने
आकारत्रयसंपन्ना या भक्तिः प्रोच्यते बुधैः । स्वरूपविस्मृते राजन्यो दोषः समपद्यत ॥
कथं तस्य निरासः स्याद्विना विष्णुपदाश्रयात् । तपोयोगव्रतादीनां फलमेकं विनिश्चितम्
गोविन्दचरणाम्भोजे यदि भक्तिः प्रजायते । तपसा सर्वसामर्थ्यं जायते नृपसत्तम ॥
न वैकुण्ठपदाम्भोजरतिलेशो भवेदिह । अनुग्रहो यदा विष्णोर्जायते हेतुवर्जितः ॥८८॥
तदा हि जायते काचिद्रतिर्नित्यानपायिनी । भक्त्या तया मलं राजन्निर्दहेदात्मनो यदा
स्वरूपं भासते तस्य मायासंसर्गवर्जितम् । ज्ञानरूपमनौपम्यमसंकुचितवैभवम् ॥ ९० ॥
निर्मलं सत्यसंकल्पं सदैकरसमक्षरम् । परसाम्यं गतं विष्णोर्भोग्यसाम्यमपि ध्रुवम् ॥९१॥
देवाः समुपतिष्ठन्ति संकल्पादेव भूपते । तदा स केवलीभावं संप्राप्तो भविता मुनिः ॥
परभक्त्या पुनः सैव ह्यात्मस्थं विश्वकारणम् । नारायणं जगन्नाथं सर्वकारणकारणम् ॥
स्वाधारं स्वाश्रितं नित्यमेकरूपमनामयम् । स्वयंज्योतिः स्वयंधाम स्वतन्त्रं पुरुषोत्तमम्
परमं पदमाप्नोति भक्त्या नान्यत्तु साधनम् ॥ ९५ ॥

राजोवाच—

परमं शरणं विष्णोः प्राप्यं भोग्यं निरूपितम् । परमत्वं कथं तस्य लक्षणं वद शंकर ॥

१ ख. °था इति मे ना° ।

श्रीशिव उवाच—

प्रकृतिः पदमेकं तु प्राकृतं कथितं तु तत् ॥ १७ ॥

प्राकृतं रूपमाप्नोति यत्राऽऽसक्तोऽयमक्षरः । नावैति स्वात्मनो रूपं शरीरं परमात्मनः
देहोऽहमिति संस्थानलक्षणं प्राकृतं पदम् । आत्मैवाहं न देहोऽहं द्वितीयं पदमात्मनः ॥
देहादिवासनाव्याप्तं मलिनं तत्प्रकीर्तितम् । शुद्धरूपं तृतीयं तत्केवलं ज्ञानलक्षणम् ॥
कैवल्यं प्राप्यते यत्र संप्राप्तः पुरुषो नृप । परमं तु पदं ब्रह्म वैष्णवं परिकीर्तितम् ॥
स्वाधारभूतमात्मानं निर्गुणं बोधलक्षणम् । यं प्राप्य भूपते मुक्ता भवन्ति मुनिसत्तमाः॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे रुद्रगीतायां तत्त्वनिश्चयो नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ॥४२५१ ॥

---

अथ चतुर्थपादे सप्तमोऽध्यायः ।

---

राजोवाच—

कथं स्थानत्रयातीतं चतुर्थं परमं पदम् । समभ्येति दयासिन्धो वद नो वदतां वर ॥ १ ॥

श्रीरुद्र उवाच—

कर्म ज्ञानोपासनं च भगवत्प्राप्तिसाधनम् । कथितं सर्ववेदेषु पुराणागमवर्त्मसु ॥ २ ॥
नारायणात्मकं कर्म कर्मबन्धनिवर्तकम् । मुमुक्षूणां सदा सेव्यं ज्ञानैकसदृशं हि तत् ॥
यत्कर्तृत्वाभिमानेन फलमुद्दिश्य वा कृतम् । बन्धकं नृपशार्दूल कर्मिणामेव कीर्तितम्॥
न तद्ब्रह्मात्मकं कर्म त्वज्ज्ञानजनितं हि तत् । दुष्टं क्षरफलं सर्वं जन्मकर्मैकसाधनम् ॥५॥

राजोवाच—

यदज्ञानकृतं कर्म सफलं दृश्यते हि तत् । वद नो ज्ञानरूपं तद्येन बन्धनिवर्तनम् ॥ ६ ॥

श्रीरुद्र उवाच—

ज्ञात्वाऽऽत्मानं सदानन्दलक्षणं बोधरूपिणम् । गन्तव्यमेकरूपं च परिणामादिवर्जितम्॥
चिन्मयं भगवद्व्याप्तं भगवच्छेषवैभवम् । नित्यमक्षरमव्यक्तमजमव्ययमुज्ज्वलम् ॥ ८ ॥
देहादिकृतनानात्वरहितं निर्गुणं परम् । विकारवर्जितं ज्ञानप्रकाशपरिपूरितम् ॥ ९ ॥
बद्धं प्रकृतिसंयोगादल्पज्ञमसुखात्मकम् । विज्ञायाऽऽत्मानुभूत्यर्थमविद्याकर्मशान्तये ॥
नारायणाज्ञया नित्यनैमित्तिकमथाऽऽचरेत् । स्ववर्णाचारतः प्राप्तं निवृत्तान्यप्रयोजनः ॥
सर्वत्रानुगतं ब्रह्म नारायणमनुस्मरेत् । शरीरत्वाद्भगवतश्चेतनस्य जडस्य च ॥ १२ ॥
न तदस्ति जगत्यस्मिंश्चेष्टते श्रीहरिं विना । तमेव भान्तमनुभाति सर्वं चिदचिदात्मकम् ॥ १३ ॥

आत्मन्यग्नौ हविष्ये च यष्टव्येषु कुशेषु च । मन्त्रे चरुपुरोडाशे ब्रह्मात्मत्वं विभावयेत् ॥
कर्तृत्वं फलसंयोगं कृतं मे कर्म एव च । हित्वा त्रयं प्रकुर्वीत कर्म ब्रह्मात्मकं त्विदम् ॥
ज्ञानरूपमिदं कर्म कर्मबन्धविमुक्तिकृत् । यावदात्मस्थितिस्तावदनुष्ठेयं विपश्चिता ॥
अकर्तृत्वस्य रूपस्य संधानादत्र कर्मणि । व्यापिनो वासुदेवस्य स्वरूपस्यानुचिन्तनात् ॥

---

१ ख. °ठ कर्म तत्परिकी° । २ ख. स्वत्वं कर्मण ए° ।

भोग्यत्वस्याऽऽत्मरूपस्य स्वेतरानित्यभावनात् । कृतं ज्ञानात्मकं कर्म न बन्धाय भवि-
ष्यति ॥ १८ ॥
स्वर्गादिवन्नाऽऽत्मगतिः फलं नाशाय हि स्मृतम् । नोत्पद्यते नवं किंचिदात्मनोऽस्य
नृपोत्तम ॥ १९ ॥
नातः कर्मफलं ह्यात्मा किमात्मा ज्ञानकर्मणा । आत्मान्तरायकं दुष्टं कर्मानेन निवार्यते॥
ज्ञानमात्मस्थितिं विद्धि रागद्वेषादिसंक्षयम् । नेङ्गते देहबुद्ध्या तु मनाङ्मानापमानयोः
शीतोष्णसुखदुःखेषु समः स्वात्मसुखास्पदम् । ज्ञानैकाकारमात्मानमनुपश्यति सर्वतः ॥
मायामात्रमिदं सर्वं देहं देहानुगं च यत् । हेयबुद्ध्या न गृह्णीयाद्राजन्नात्मस्थितो नरः॥
नास्य कर्म महाराज कर्तव्यमवशिष्यते । स्वात्मप्राप्तौ महाभाग सर्वयत्नविवर्जितः॥२४॥
परकीयमिवाऽऽत्मीयं देहं यो मनुते पुमान् । न तत्र युज्यते हर्षशोकहेतोरुपस्थितौ ॥
अयमेव स्थितप्रज्ञो गुणातीतो मतो बुधः । ज्ञानयोगरतः साक्षादात्मभूतः स केवलः ॥
ब्रह्मभावमनुप्राप्तः स्वात्मन्येव नरेश्वर । गुणो हि गुणिना भिन्नो यथा नैवार्हति स्थितिम्
अहमेवं ब्रह्मणाऽस्मीत्यभेदमनुसंस्मरेत् । एवं ज्ञानी यदाऽऽत्मस्थमात्मानमनुपश्यति ॥
आत्मस्थं परमं प्रेष्ठं नारायणमनामयम् । प्रीत्याऽतिशयभावेन क्षणमेकं न मुञ्चति॥२९॥
दर्शनैकसमे ध्याने परप्रेमास्पदं हरिम् । ध्यायेदनन्यभावेन सा भक्तिः परमा मता॥३०॥
उक्ता भागवती भक्तिरखण्डस्मृतिलक्षणा । तयाऽऽत्मानं हरिः साक्षात्संदर्शयति भूमिप
भक्त्या केवलया ग्राह्यो भगवाञ्जलजेक्षणः । अनन्तनित्यनिःसीमकल्याणादिगुणास्पदः
सर्वाधारः सर्वशेषी दिव्यमङ्गलदेहभृत् । शङ्खचक्रगदापद्मधारिचारुचतुर्भुजः ॥ ३३ ॥
प्रियोऽयं परमस्तस्य तथाऽयं परमाप्रियः । नैनमाकाङ्क्षते त्यक्तुं न चायं तमधोक्षजम् ॥
एवं परानुरागेण जाता भक्तिः परस्परम् । परा काष्ठेयमादिष्टा भक्तानां नृपसत्तम ॥
देहाभिमाने निर्मुक्ते तथाऽऽत्माभिमतिर्गता । केवलं परमात्मात्मभावो भागवतो मतः ॥
चञ्चलं चाति राजेन्द्र मनो दुर्निग्रहं धिया । निरोधाय मता तस्य धारणा शास्त्रपारगैः॥
दोषबुद्धिं च सर्वत्र मायामात्रे नरेश्वर । अमायिके चाऽऽत्मनि च सुखमात्यन्तिकं
स्मरेत् ॥ ३८ ॥
परा काष्ठा तु भूपाल परमात्मनि संस्थिता । ज्ञानाभ्यासातिरिक्तेन मनसा नाधिगम्यते
यो विज्ञायाभ्यसेद्राजन्कर्मणोपासनेन वा । ध्यानेन सोऽश्नुते सम्यगात्मानं प्रकृतेः परम्
सुकरः कर्मयोगो हि श्रद्धामात्रमपेक्षते । अदृश्यमानं तत्तत्त्वमनुसंधाय चेतसा ॥ ४१ ॥
दृष्टार्थेन क्रियां कुर्वन्न प्रमाद्यति कर्हिचित् । चेतसो बाह्यवृत्तित्वाज्ज्ञानस्य सहकारिता
पूर्तेष्टेति द्विधा प्रोक्तं कर्म निष्कामलक्षणम् । कूपारामादिकं पूर्तमिष्टं ज्ञानादिलक्षणम्॥
अग्नौ वा स्थण्डिले वाऽपि प्रतिमायामथापि वा । यजनं विविधैर्मन्त्रैरिष्टिरेषा प्रकी-
र्तिता ॥ ४४ ॥
फलमेषां परित्यज्य ज्ञानेन सहकारिणा । नित्यं कर्म प्रकर्तव्यं तत्र भागवतं पुनः॥४५॥
उद्दिश्य वासुदेवं च लक्ष्मीकान्तं धराधिप । सात्त्विकैर्द्रव्यमन्त्रैश्च तादृशैरपि भूसुरैः ॥
राजसैस्तामसैर्नैव कर्तव्यं कर्म सात्त्विकम् । मुमुक्षुणा महाभाग चेतसः शान्तिमिच्छता
विष्णोर्निकेतनं चैव पञ्चकालोपसर्पणम् । वापीकूपप्रपारामतडागादिप्रवर्तनम् ॥ ४८ ॥

अन्तर्यामिधिया विष्णोर्व्यापकत्वमनुस्मरन् । सर्वतश्चोपकुर्वीत वैष्णवेषु विशेषतः ॥
विप्रेषु सुरवर्येषु नारायणविभूतिषु । हरिबुद्ध्या समभ्यर्चेद्राजन्नारायणात्मकः ॥ ५० ॥
एवं ज्ञानात्मकं कर्म सुकरं प्रतिबोधितम् । दुष्करे ज्ञानयोगे तु मनःशान्तिरपेक्षिता ॥
तत्राङ्गप्राणसंरोधो योगेनैव विशांपते । अपेक्षितो मुमुक्षूणामात्मतत्त्वमभीप्सताम् ॥५२॥
यमैश्च नियमैश्चैवाप्यासनप्राणरोधनैः । प्रत्याहारध्यानधृतिसमाधिभिरभीक्षणशः ॥ ५३ ॥
मनो निगृह्यते राजन्निन्द्रियं धारणाश्रये । निरुध्य परमोपायैः स्थूले भागवतस्तनौ ॥
धारयेत्प्रथमं राजन्यावत्सूक्ष्मे प्रवर्तते । सूक्ष्मे भगवतो रूपे स्थितं सत्यं प्रसीदति ॥५५॥
सूक्ष्मं तु भगवद्रूपमन्तर्यामितया स्थितम् । हृत्पुण्डरीके विमले सर्वेन्द्रियविकाशकम् ॥
तेजोमयं चतुर्बाहुं पुण्डरीकनिभेक्षणम् । पीताम्बरधरं भास्वत्कुण्डलाभ्यां विराजितम् ॥
रुचिरौष्ठपुटं चारुदशनावलिलालितम् । कृपया प्रणतं भक्तं वीक्षयन्तं मुहुर्मुहुः ॥ ५८ ॥
शान्तमानन्दनिलयं श्रीदेवीपरिसेवितम् । वाङ्मनोगोचरं दिव्यं गुणत्रयविवर्जितम् ॥
एतद्धारणया ध्वस्तमायावरणविभ्रमः । ब्रह्मानन्दैकनिलयमात्मानं प्रतिपद्यते ॥ ६० ॥
आत्मानन्दैकनिलयो निवृत्ताशेषवासनः । स्वात्मभूते हरौ साक्षाद्रतिमाप्नोति पुष्कलाम्
उपेक्षितान्यतत्साम्यभोगैश्वर्यमहोदयः । आप्नोति विरजं ब्रह्म कार्यान्ते नृपसत्तम ॥६२॥
विमोक्षकाले संप्राप्ते कायस्य विगतामयः । प्राणायामबलेनैव स्वात्मानं चोर्ध्वमुन्नयेत् ॥
बाह्यस्थानेषु विश्रान्ते मूर्ध्नि निर्भिद्य निर्गते । सुषुम्नावर्त्मना मुक्तो बहिर्निष्क्रमते मुनिः ॥
अर्चिरादिभिरानीतो याति सूर्यपथा पुमान् । निर्दग्धवासनादेहः सूक्ष्मरूपमुपेत्य[1] सः ॥
प्रयाति ब्रह्मणो लोकं पूजितः पथिवासिभिः । महाभागवतो नूनमिति बुद्ध्या विरञ्चिना
कृतोत्सवेन राजेन्द्र धन्योऽहमितिवादिना । ततश्चोर्ध्वं प्रयातीह निवृत्ताशेषवासनः ॥
भूतसूक्ष्माणि भूतानि मनोदेवानतीत्य[2] सः । सायुज्यं तत्र तत्रायं क्रमादनुभवन्नसौ ॥
त्रिविधां प्रकृतिं हित्वा महत्तत्त्वमतीत्य च । प्रकृतिं चानिरुद्धादीनतीत्य भगवत्प्रियः ॥
प्रयाति पार्षदैर्नीतस्तद्विष्णोः परमं पदम् । यतो नाऽऽवर्तते भूयो यत्र कालबलं न हि ॥
द्वेषादिरहितं साक्षाद्धाम भागवतं महत् । निर्गुणं निर्मलं शान्तं निर्गुणोऽयं विशेत्पुनः॥
परमात्मसुखास्वादो राजन्नास्ते निरन्तरम् । यत्सुखास्वादकोट्यंशो ब्रह्मादीनां न विद्यते
कोटिकोट्यंशलेशेन कृतकृत्यविभाविनः । वयं तु तत्पदं राजंश्चिन्तयामो निरन्तरम् ॥
प्राणायामस्थिताः सर्वे स्वाधिकारेषु सर्वदा । धन्या भागवता लोके सद्यः श्रीकान्त-विष्टरम् ॥ ७४ ॥
प्रयान्ति नृपशार्दूल परमैकान्तिनोऽमलाः । योगिभ्यश्चाधिकाः प्रोक्ताः परमैकान्तिनो नराः ॥ ७५ ॥
विना योगं विना कर्म विना साधनकोटिभिः । निर्हेतुककृपालेशाद्धरिणा वीक्षिता नृप
एकान्तभावोपगता यान्ति सद्यो हरेः पदम् ॥ ७७ ॥

राजोवाच—

परमैकान्तिनो देव कीदृशाः सन्ति मे वद । शिष्योऽहं त्वां प्रपन्नोऽस्मि कैलासकृतकेतन

[1] ख. °त्य च° । [2] ख. °त्य च° ।

श्रीरुद्र वाच—

योगादिकारणं नैव विद्यते नृपसत्तम । अन्यथा चेद्वयं सर्वे तथाभूता भवेम हि ॥ ७९ ॥
यमेव वीक्षते साक्षाद्भगवान्पुरुषोत्तमः । स एव लोके भवति ह्येकान्ती नृपसत्तम ॥
नारायणार्थनिर्मुक्तदारपुत्रधनादयः । अनित्यलोकसंबन्धदेहदेवान्तरस्पृहाम् ॥ ८१ ॥
भोगमोक्षस्पृहां हित्वा हित्वा चान्यार्हशेषताम् । नारायणं प्रपन्ना ये नारायणपरायणाः
भगवद्रससंविद्धहृदया दीनवत्सलाः । नारायणमृते कर्म न कुर्वन्ति मनागपि ॥ ८३ ॥
हरेः संबन्धिनं हित्वा भोजनादिक्रियादिषु । सङ्गो न विद्यते येषां दर्शनस्पर्शनादिभिः ॥
नानिवेदितमश्नन्ति न वसन्ति मनागपि । मनसा वचसा विष्णोर्नाममन्त्रैकजल्पकाः ॥
न च मन्त्रान्तरं येषां न व्रतान्तरसेवनम् । न फलान्तरजिज्ञासा न देवान्तरदर्शनम् ॥
नान्यशेषस्य ग्रहणं फलादेरपि भूमिप । नान्यवेषानुकरणं नान्यपर्वानुमोदनम् ॥ ८७ ॥
नान्योत्सवावलोकं च नान्ययात्राप्रवर्तनम् । नान्यव्रतानुचरणं नान्यासक्तिर्मनागपि ॥
नान्यार्थं जीविका कार्या नान्यार्था पाकसंक्रिया । नारायणमृते राजन्सर्वेषामात्मदैवतम्
देहयात्राभरन्यासं कुर्यान्मातरि बालवत् । वासुदेवे भगवति स्वाधिष्ठाने नियोक्तरि ॥
स्वस्य सर्वभरन्यासं कृत्वोपासनमाचरेत् । भृत्यः स्वामिनि तस्याऽऽज्ञां पालयत्यनुवा-
सरम् ॥ ९१ ॥
सेवाभङ्गस्य चिन्तैका न चिन्ता स्वात्मरक्षणे । वृत्तिं दास्यति विश्वासः सद्भृत्यस्य
यथा तथा ॥ ९२ ॥
वासुदेवैकनिलयो वासुदेवैकसंश्रयः । सेवां कुर्वन्भगवतो वृत्त्यर्थं नावसीदति ॥ ९३ ॥
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स मे वृत्तिं विधास्यति
गच्छंस्तिष्ठन्स्वपन्ध्यायन्स्तुवन्भुञ्जन्पिबन्नृप । नारायणेति वागेषा जिह्वाग्रे वर्तते सदा ॥
आब्रह्मजीवलोकेषु हरिसंबन्धवर्जिते । देवे नरे च तिर्यक्षु स्वबुद्ध्या नार्पयेन्मतिम् ॥
संबन्धो द्विविधो विष्णोर्वस्तुमात्रेषु विद्यते । साधारणो हि राजेन्द्र तथाऽसाधारणो मतः
चतुर्विधेषु भूतेषु तदात्मत्वेन मानद । तज्जन्यत्वेन वा ज्ञेयस्तदाधारतया हि सः ॥ ९८ ॥
साधारणो हि संबन्धो न च संसारनाशकः । दासत्वेन च संबन्धो द्वितीयो मोचको मतः
तापादिपञ्चसंस्काराद्यो जातो जगतीपते । तदनन्यार्हशेषत्वमात्मनो ह्यनुभावनम् ॥
तत्संबन्धानुसंधानं तनुवाक्कायमानसैः । नेदं साधनसंसिद्धं किं तु निर्हेतुकी क्रिया ॥
सर्वतो मनसो राजन्निःसङ्गत्वं प्रजायते । विना योगसमाधिं हि केवलं कृपया हरेः ॥
दृष्ट्वा हि खलु राजेन्द्र लोकरीतिमनुत्तमम् । वैराग्यं सर्वभावेषु राजञ्जायेत पुष्कलम् ॥
दाराः सुताः प्रियाः प्राणा राज्यं यद्यदवैष्णवम् । न प्रियाणि भवन्तीह कामिनः
कामिनीं विना ॥ १०४ ॥
इयमात्यन्तिकी राजन्भक्तिर्गोविन्दपादयोः । प्रसादेनैव संसाध्या सत्यं सत्यं वदाम्यहम् ॥
यस्यानुग्रहमात्मीयमाकाङ्क्षति दयानिधिः । तस्यैवैकान्तिकी प्रीतिर्जायते नान्यसा-
धना ॥ १०६ ॥
प्रतिज्ञातं भगवता शृणु राजन्यसत्तम । परमैकान्तिकोपायः स्वहस्ते विधृतो यथा ॥

१ ख. °न्ति वृथा क्षणम् । २ ख. °तु या वै हरेः कृप°।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
जायमानं हि पुरुषं यं यं पश्यति चक्षुषा । स एव भवति क्षिप्रमेकान्ती पुरुषेषु हि ॥
एकान्तिनो महाभागा गृहीता हरिणा स्वयम् । भगवद्दत्तवैराग्यज्ञानयोगादिभिस्तथा ॥
चित्तैकतानमाश्रित्य वासुदेवेऽखिलात्मनि । प्राप्नुवन्ति परं धाम वैष्णवं शाश्वतं पदम् ॥

इति श्रीबृहद्ब्रह्मसंहितायां रुद्रगीतायां भक्तिनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ ४३६३ ॥

---

अथ चतुर्थपादेऽष्टमोऽध्यायः ।

---

आदौ तु ब्रह्मजिज्ञासा कर्तव्या नृपसत्तम । ज्ञात्वा ब्रह्म ततः कुर्याल्लक्ष्यमात्मशरस्य हि

राजोवाच—

अलक्ष्ये लक्ष्यता कार्या लक्ष्ये वाऽलक्ष्यता नु किम् । आद्ये त्वसंभवो देव त्वनुवादो द्वितीयके ॥ २ ॥

श्रीरुद्र उवाच—

सर्वप्रमाणसिद्धत्वान्नालक्ष्यं ब्रह्म भूपते । सन्मात्रं न विशेषोऽस्य यत्र संधार्यते मनः॥३॥
सन्मात्रे संशयच्छेदो न सम्यगभिजायते । स्थाणुर्वा पुरुषो वेति न निर्धारयितुं क्षमः ॥
विशेषोऽस्य सतो राजन्निःसंदेहकरो मतः । विशेषे धारणायोगो निर्विशेषे न शस्यते ॥
सन्मात्रे दोषरहिते दोषद्रष्टुः परंतप । भासमानो विशेषो हि भासते न कथंचन ॥ ६ ॥

राजोवाच—

पुरुषः सविशेषो वा निर्विशेषोऽथ वा प्रभो । विचार्य मम वक्तव्यं भगवञ्शरणार्थिनः ॥

श्रीरुद्र उवाच—

प्रश्नोऽयं तव राजेन्द्र सविशेषं प्रयच्छति । सप्रकारकतापन्ने संदेहो जायते यतः ॥ ८ ॥
निर्विशेषे विषाणादौ संदेहो न कदाचन । जायते नृपशार्दूल ह्यवस्तुत्वाद्विमर्शतः ॥९॥

राजोवाच—

शशे विषाणरहिते कर्णाभ्यां दूरदोषतः । शृङ्गप्रतीतिर्भवति देव तद्वदिहापि हि ॥१०॥

श्रीरुद्र उवाच—

शृङ्गप्रकारतापन्न एकदेशे शशस्य तु । शृङ्गबुद्धिः प्रभवति न तु साऽकर्णके शशे ॥११॥
किं सादृश्यधिया राजन्ब्रह्मणि प्रतिभाति ते । तादृशे धर्मसद्भावे सविशेषो न संशयः
शशस्य शृङ्गाभावेऽपि शृङ्गभावविधायके । कर्णे स्यातां महाराजन्निष्प्रकारे कथं भ्रमः॥

राजोवाच—

के ते विशेषाः पुरुषे येषां ज्ञानान्निवर्तते । संसारो दीर्घरोगोऽयं येन दुःखं पदे पदे ॥

श्रीरुद्र उवाच—

कर्तृत्वमस्य जगतस्तथा च परिपालनम् । संनिरोधो विमोक्षश्च विशेषोऽयं परात्मनः ॥

---

१ ख. न सेत्स्यति° । २ ख. तदीये ध° ।

किं ब्रह्मेति पुरा पृष्टे श्रुतिरेवोत्तरं जगौ । यतो भवन्ति भूतानि येन जीवन्ति सर्वतः ॥
यत्प्रयन्ति विशन्तीति तद्ब्रह्मेत्यवधार्यते । लक्षणं ब्रह्मणस्तावच्छ्रौतं भवति भूमिप ॥

राजोवाच—

सत्यं भवति देवेश लक्षणं श्रुतिबोधितम् । एतैस्तु लक्षितं ब्रह्म लक्ष्यं भवति योगिनः ॥
अदृष्टो भवति द्रष्टा विज्ञातोऽज्ञात एव च । अश्रुतो भवति श्रोताऽमतो मन्ता प्रकीर्तितः
अकर्तैव तथा कर्ता ह्यधर्ता धारको मतः । अभोक्ता सर्वमश्नाति निर्विशेषो विशेषवान्
यद्यद्विलोक्यते तुच्छं सर्वं मिथ्येति गीयते । अतोऽस्य कारणं ब्रह्म ह्यकर्तैव निरूपितम्॥
अकर्तृत्वं तु देवेश लक्षणं प्रतिभाति मे । रूपं च लक्षितं तत्र धारणाऽपि भविष्यति ॥
निर्विशेषं निराधारं निर्गुणं च निरञ्जनम् । इत्येवं भावना साक्षाद्धारणं गिरिजापते ॥
किं न स्यादिति मे शङ्का जायते सुदृढा प्रभो । तां निवर्तय सद्युक्त्या यदि योग्योऽस्मि भावितुम् ॥ २४ ॥

श्रीरुद्र उवाच—

स्वातन्त्र्येणास्य नो द्रष्टा श्रोता मन्ता च विद्यते। अतो विशेष्यते राजन्नैतैरेव विशेषणैः
अयं यमनुगृह्णाति परमात्मा सनातनः । स एव तं विजानाति यास्यत्यखिलसंश्रयम् ॥
मन्ता स एव भवति नान्यो राजन्कदाचन । प्रसादादेव देवस्य विशेषो ह्यवधार्यते॥२७॥
आत्मत्वात्सर्वभावानामन्तः सूक्ष्मस्वरूपतः । प्रविष्टः पुरुषश्रेष्ठस्तस्मान्नैवोपलक्ष्यते ॥२८॥
शरीरभूतमखिलमात्मानं पुरुषोत्तमम् । न विजानाति राजेन्द्रेत्याहुर्माध्यंदिनास्तु तम् ॥
यः पृथिव्यादिवाक्येषु चिदचित्सु विशांपते । आकाशवत्समन्वेति तदेतदवभासयन् ॥
अदृष्टो ह्यात्मरूपत्वाद्द्रष्टा भवति चिन्तय । पारतन्त्र्यस्वभावत्वादनयोर्दृष्टिदृश्ययोः ॥
द्रष्टा न चेतो भो राजन्यं विना प्रभवत्यलम्। अतो द्रष्टा हरिः साक्षाद्यथा वीणारवो मतः
अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु । अपानन्तमपानन्ति नरदेवमिवानुगाः ॥
सर्वत्र सर्वभूतोऽयं तथाभूतो विराजते । द्रष्टाऽप्यदृष्टो राजेन्द्र दृश्यते चापि पश्यताम् ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥
यदा पश्यः पश्यतेति श्रुत्वा दृश्यत्वमप्युत । प्रसादेनैव जायेत विष्णोरेवावलोकनम् ॥
सर्वात्मत्वेन सर्वेषां रूपत्वेन च तत्त्वतः। विशेषरूपविज्ञानं दर्शनं नृपसत्तम ॥ ३७ ॥
विशेषं रूपविज्ञानाद्भिद्यते ग्रन्थिरात्मनः। छिद्यन्ते चापि कर्माणि क्षीयन्ते सर्वसंशयाः
स्वरूपं वैभवं शक्तिबलपौरुषमस्य च । साकल्येन न संश्रोतुं शक्यते नृपसत्तम ॥ ३९ ॥
अश्रुतो नाश्रुतस्तावद्वाक्यैर्वेदान्तसंभवैः । तं त्वौपनिषद् देवं पृच्छामीति श्रुतेर्बलात् ॥
इयत्तया मितिर्नास्ति तस्मादुक्तोऽमितो यतः । यं विना मीयते नैवमिदमेतच्चराचरम् ॥
आविर्भावस्तिरोभावः सूक्ष्मरूपेण संस्थितिः । यस्मिन्नाभाति विश्वस्य स चाऽऽधारतया मतः ॥ ४२ ॥
आनन्त्याख्यो विशेषोऽयमाधाराख्यस्य भूपते। न मितो वासुदेवस्य तस्मादमत उच्यते॥
विज्ञातं स्याद्यतः सर्वं स्थूलसूक्ष्मतया स्थितम् । कस्तमन्यो विजानीयादविज्ञातस्ततः स्मृतः ॥ ४४ ॥
ईशोऽस्ति सर्वजगतो न गोप्ता त्वस्य भासते। अदृश्यस्यापि राजेन्द्र ब्रह्मणः परमात्मनः॥

---

१ ख. °ह्य कर्त्रिवेति नि°। २ ख. 'दृष्टः स्वात्म°। ३ ख. °मृ । वस्याऽऽत्म°।

अश्रुतो नाश्रुतस्तावद्वाक्यैर्वेदान्तसंभवैः। तं त्वौपनिषदं देवं पृच्छामीति श्रुतेर्बलात् ॥
इयत्तया मितिर्नास्ति तस्मादुक्तोऽमितो यतः। यं विना मीयते नैवमिदमेतच्चराचरम् ॥
आविर्भावस्तिरोभावः सूक्ष्मरूपेण संस्थितिः । यस्मिन्नाभाति विश्वस्य स चाऽऽधार-
तया मतः ॥ ४८ ॥
आनन्त्याख्यो विशेषोऽयमाधाराख्यस्य भूपते। न मितो वासुदेवस्य तस्मादमत उच्यते
विज्ञातं स्याद्यतः सर्वं स्थूलसूक्ष्मतया स्थितम् । कस्तमन्यो विजानीयादविज्ञातस्ततः
स्मृतः ॥ ५० ॥
ईशोऽस्ति सर्वजगतो न गोप्ता स्वस्य भासते। अदृश्यस्यापि राजेन्द्र ब्रह्मणः परमात्मनः
यथाऽहमिति भूतानां प्रतीतिः खलु भूपते। अद्य प्रसूतादारभ्य चाऽऽशतान्तात्प्रतीयते ॥
तथातिपामरेणापि प्रोच्यते पुरुषोत्तमः। विज्ञात एव राजेन्द्र प्रतीत्याऽनुभवेन च ॥
यथाऽन्यन्नास्ति वाक्येन शून्यमाकाश एव हि। परिस्फुरति सर्वेषां भूप जानीहि सर्वतः
आकाशमस्तीति पुनश्चोत्तरं किं न दीयते। विशेषास्फुरणात्तात तद्द्वयाय इह युज्यताम्
देहादिप्राणमनसां सहैवाहंकृतेर्ग्रहः। विशेषाग्रहणात्स्वस्य तद्द्वयाय इह युज्यताम्॥५६॥
नाहमन्यो नचाऽऽत्मानो विशेषः परजीवयोः। अज्ञसर्वज्ञरूपेऽन्यो विशेषोऽपि न गृह्यते
जीवस्य कर्मकर्तृत्वं कर्मणा प्राक्तनेन हि। तथा हरेर्न कर्तृत्वं कर्मलेपो न विद्यते॥ ५८ ॥
तेन कर्ता महीपाल परमात्माऽयमीरितः। प्रकृतेरपि कर्तृत्वं यदायत्तं रमापतेः ॥ ५९ ॥
रमापतेस्तथा नैव ह्यकर्ता तेन माधवः। न कर्ता माधवो ज्ञेयः श्रुतिस्मृतिविरोधतः ॥
कर्तृत्वं वास्तवं पुंसो वासुदेवस्य भूमिप। उभयोः परतन्त्रत्वात्कर्तृत्वं नोपपद्यते ॥
अज्ञानेन यथा धर्ता देहस्य पुरुषो मतः। देहोऽहमभिमानेन न तथा पुरुषोत्तमः ॥६२॥
धर्ता विशेषणीभूतचिदचिद्देहयोर्हरिः। विधृतिः सेतुरूपेण श्रुतिराह विशांपते ॥ ६३ ॥
अवश्यभोक्ता जीवः स्याद्राजन्स्वीयस्य कर्मणः । फलं शुभाशुभस्यातः संसारेऽस्मि-
न्निबध्यते ॥ ६४ ॥
अप्राकृतस्य भोक्ताऽयं भक्त्या भक्तार्पितस्य च। हेयप्राकृतरूपो यो विशेषस्तेन वर्जितः
महदादिविभेदेन कार्यावस्थासु रूपतः। स्वानन्तशक्तियोगेन नित्यः स्वाभाविकस्तु यः
हेयांशवर्जितो राजन्विशेषस्तेन संयुतः। चिदचिच्छब्दवाच्यो यो विशेषणतया स्थितः
सर्वावस्थाश्रयस्तस्मिन्विशेष्ये परमात्मनि। विशेषः सर्वकालेषु न निवर्तेत कर्हिचित् ॥
धारकः प्रेरको भर्ता सर्वस्यास्य प्रकाशकः। सदनन्तगुणावासः श्रीभर्ता मोक्षकृत्स्वयम्
अन्यव्यावर्तकानेकविशेषणविशेषवान्। विभाति भगवानेको निर्विशेषो न भूमिप ॥६४॥
अनादिवासनाबद्धो जीवः संकुचितस्मृतिः। विशेषं वासुदेवस्य न जानाति कृपां विना
अयं यमनुगृह्णाति स्वाङ्गीकर्तुमिहेच्छति। शास्त्रसङ्गो भवेत्तस्य सदाचार्यस्य संनिधौ ॥
विशेषं तस्य विज्ञाय तत्राऽऽरोप्य मनो धिया। विमुक्तो भवति क्षिप्रं जन्मसंसारबन्ध-
नात् ॥ ७३ ॥
सदैकरूपाभावात्तु जगन्मिथ्येति गीयते। न मिथ्याऽन्यादृशं नैव भ्रमो रज्जुभुजङ्गवत् ॥
राजन्कार्यस्य मिथ्यात्वं नैर्गुण्यं परमात्मनः। आभासवादो जीवस्य पाषण्डैरुपकल्पितः

---

१ ख. °ति यमङ्गीकर्तुमिच्छति°।

नैतद्विश्वसनीयं ते मयोक्तमपि मायया । आज्ञया वासुदेवस्य मोहनाय सुरद्विषाम् ॥
प्रवर्तितमसच्छास्त्रमयथार्थस्य शासनात् । तर्कसिद्धाद्विशेषेण तामसानां प्रियं हि तत् ॥
अयं वेषो महाभाग जटाभस्मास्थिकल्पितः । श्मशाननिलयावासोऽमेध्यभोगो मदाश्रितः
तामसं सर्वमेतद्धि स्यादेष्टं पिशिताशिनाम् । नारायणसमत्वेन देवतान्तरचिन्तनम् ॥
मायाविद्याविभागेन चेशजीवविकल्पनम् । मायाविद्याविनाशे तु नेशो जीवो न विद्यते
यथा घटमठाभावे तथाऽऽकाशो न विद्यते । बन्धमोक्षौ भ्रमः स्यातां न स्यातामीश-
जीवकौ ॥ ८१ ॥
निर्विशेषं निराभासं ब्रह्म निर्धर्मकं तथा । ध्याता ध्यानं न ध्येयं हि त्वस्ति नास्तीति
नैव हि ॥ ८२ ॥
अनिर्वाच्या हरेः शक्तिर्मिथ्या मायेति पार्थिव । मायावादमिदं शास्त्रं मायामोहप्रवर्ति-
तम् ॥ ८३ ॥
सात्त्वतैर्नाऽऽहृतं सद्भिर्ज्ञात्वा मोहनमात्मनः । मुमुक्षुभिर्न संधार्यं न श्राव्यं मुक्तिमि-
च्छताम् ॥ ८४ ॥
पाखण्डमयथार्थं च श्रुतिस्मृतिविरोधतः ॥ ८५ ॥

गौतम उवाच—

निर्विशेषे महादेव विशेषोऽयं भवेद्यदि । को दोषः स्यादुमाकान्त वद मे वदतां वर ॥८६॥

श्रीरुद्र उवाच—

निर्विशेषं प्रवदतां भवतां कोऽयमाशयः । निर्विशेषे विशेषस्तु मतो व्यावर्तको न वा ॥
आद्ये व्यावर्तको धर्मो निर्विशेषेऽपि सिध्यति । द्वितीयो निर्विशेषोऽपि न सिध्यति
महामते ॥ ८८ ॥
अव्यावृत्तैर्विशिष्टस्तु निर्विशेषः किमुच्यताम् । निर्विशेषं न वस्त्वस्ति सदसत्स्वपि किंचन
लक्ष्यं लक्षणानिर्दिष्टं सर्वं भवति गौतम । व्यावर्तकत्वं सर्वत्र स्वेतरस्य द्विजोत्तम ॥९०॥
सधर्मकत्वं संसिद्धं तेन सर्वत्र सर्वदा । आधारं सर्ववस्तूनां भासकानां च भासकम् ॥
ब्रह्मवस्तु कथं ब्रह्मन्निर्विशेषं भवेदिदम् ॥ ९१ ॥

गौतम उवाच—

सर्वस्य सविशेषत्वात्सधर्मत्वात्कृपानिधे । सर्वतो हि विजातीयमुक्तं ब्रह्म सनातनम् ॥
अतो निर्धर्मकं ब्रह्म निर्विशेषं विनिश्चितम् । सविशेषस्य नष्टत्वं दृष्टं प्रत्यक्षतो मया ॥

श्रीरुद्र उवाच—

विशेषस्यैव विप्रेन्द्र ब्रह्मणः परमात्मनः । विजातीयत्वमाख्यातं विशेषादन्यनिष्ठितात् ॥
सर्वेतरविजातीयविशेषेण विशेषितम् । सर्ववेदान्तसिद्धान्तसंसिद्धमिति चिन्तय ॥९५॥
चेतनोऽचेतनश्चेति विशेषोऽयं महामते । विशेषणतया तत्र पर्येति परमात्मनि ॥ ९६ ॥
विशेषश्चिदचिन्निष्ठः परतन्त्रोऽयमीरितः । तस्माद्विलक्षणो धर्मभूतो देवस्य शार्ङ्गिणः ॥
अनन्तनित्यनिःसीमगुणदोषविवर्जितः । अहेया भावनातीता गुणा विष्णोर्निरूपिताः ॥

---

१ ख. सत्त्वं नैवाऽऽदृ° । २ ख. °चिद्रूपः प° ।

धर्मभूतास्तु ते सर्वे कल्याणादिकसंज्ञिताः । सच्चिदानन्दरूपाश्च कृतिशक्त्यादिरूपिणः ॥
नान्यत्रैवंविधगुणाश्चिदचित्सु द्विजोत्तम । नैवंविधगुणैः पुष्टः पुरुषोऽन्यो मया मतः ॥
परिच्छिन्नविशेषात्तु गुणाद्वा पुरुषादपि । सविशेषगुणापन्नो भिन्नोऽयं पुरुषोत्तमः ॥
विष्णोर्गुणानां वैजात्यमस्ति चान्यगुणैः सह । विष्णोरपेतदोषस्य ह्यन्येन गुणिना सह ॥
असाम्यान्निर्विशेषत्वं गुणानां गुणिनोऽपि वा । विशेषान्मुनिशार्दूल न विशेषत्वसंक्षयः ॥
निर्विशेषे विशेषोऽस्तीत्येवं वक्तुं न शक्यते । योऽयं विशेषः सोऽप्यत्र कीदृशोऽभिमतस्त्वया ॥ १०४ ॥
निर्विशेषस्य चान्यस्य स्वस्य वेति द्विजोत्तम । आद्ये तु वचसस्तावद्व्याघातः स्याद्द्वितीयके ॥ १०५ ॥
अन्यस्य सत्त्वं वाऽसत्त्वमाद्येऽद्वैतस्य संक्षयः । द्वितीये चासतस्तावत्संबन्धो नैव सिध्यति
तृतीये त्वाश्रयमृते विशेषो नास्ति कुत्रचित् । न तु तावद्विशेषोऽयं शुक्तौ रजतवत्स्मृतः
मिथ्यैव दोषश्च सत इति चेन्नैव सिध्यति । दोषाभावस्तव मते दोषः क्वापि निराश्रयः ॥
आश्रयो निर्विशेषो हि तथा निर्धर्मकः स्मृतः । दोषस्य सत्त्वे द्वैतं स्यादसत्त्वे नापरोक्षता ॥ १०९ ॥
मिथ्यात्वे त्वनवस्था स्याद्दोषान्तरविकल्पनात् । निर्विशेषे विशेषोऽयमिति भ्रान्तिर्विचार्यताम् ॥ ११० ॥
सविशेषस्य विप्रेन्द्र द्वयं सिध्येद्विमर्शतः । कैश्चिद्विशेषैः संव्याप्तमव्याप्तं कैश्चिदेव हि ॥
सविशेषे द्विजश्रेष्ठ निर्विशेषत्वसंभवः ॥ १११ ॥

गौतम उवाच—

व्याप्ताव्याप्तत्वमप्युक्तं सविशेषे दयानिधे । कैर्व्याप्तं कैर्न च व्याप्तमिति मे संशयं नुद ॥

श्रीरुद्र उवाच—

महदादिकृता ये च विशेषास्तैरनावृतम् । सृष्टौ कदाचिद्भवति व्यापृतं मुनिसत्तम ॥
प्रधानादिविशेषोऽपि निर्विशेषस्तु कारणे । प्रलीनत्वाद्विशेषाणां सर्गादौ तु विशेषवान्
निजासाधारणाकारगुणशक्तिविशेषयुक् । न ज्ञायते मुनिश्रेष्ठ विना भगवतः कृपाम् ॥
वैशिष्ट्यं वासुदेवस्य न विहन्येत कर्हिचित् । विशिष्टं येन तच्चापि सदैव परमार्थतः ॥
अस्वातन्त्र्यादसत्त्वं तु मिथ्यात्वं श्रुतिरुज्जगौ । विशेषस्यापरोक्षस्य प्राकृतस्य विनाशतः
नित्यानां तु विशेषाणां विनाशो नैव विद्यते । स्वरूपहानिरेव स्यादन्यथा मुनिसत्तम ॥
विशिष्टं ब्रह्मणो रूपं सदसद्भ्यां विनिश्चितम् । स्वस्मिन्प्रकारतापन्नं सदनन्तगुणान्वितम् ॥
स्वरूपलक्षणं तावच्छ्रुतिभिः क्रियते द्विज । सत्यं ज्ञानमनन्तं च ब्रह्मेत्यादिभिरेव च ॥
तथा कर्तृत्ववचनैः स्वरूपं लक्ष्यते यथा । विकारे निर्विशेषस्य तथाऽऽह श्रुतिरेव हि ॥
सविशेषं परं ब्रह्म धारणैकसमाश्रयम् । विज्ञाय गुरुवाक्येण श्रवणादिभिरेव च ॥ १२२ ॥
नामसंकीर्तनैश्चैव स्तवनैर्वन्दनैस्तथा । ध्यानेन भक्तियोगेन तत्साम्यमधिगम्यताम् ॥
तत्साम्यलक्षणो मोक्षः सायुज्यमभिधीयते । यतो नाऽऽवर्तते भूयो भोगसाम्यमुपैति हि

१ ख. °ति चात्रैव । २ ख. °त्वमित्युक्तं । ३ ख. °ति तद्व्याप्तं मु° । ४ ख. अनित्यत्वाद° । ५ ख. °दे सदा ।

ऋषिराजश्च विप्रश्च श्रुत्वा शंकरभाषितम् । आदाय तौ परं धर्मं शरणागतिलक्षणम् ॥
व्यवस्थावचनैस्तावन्निःसंदेहौ बभूवतुः । स्थूणासंखननन्यायात्संदिहानावपृच्छताम् ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे रुद्रगीतायां ब्रह्मविचारो नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ ४४८९ ॥

---

अथ चतुर्थपादे नवमोऽध्यायः ।

---

तावूचतुः—

पञ्चवक्त्र महादेव विशिष्टं ब्रह्म लक्षणैः । लक्षितं तत्र संदेहमावयोस्त्वं निशामय ॥१॥
सत्यादिलक्षणैर्लक्ष्यं कीदृशं ब्रह्म शंकर । सत्यादिभिस्तु किं वाच्यं स्वरूपं धर्म एव वा
सत्यस्वरूपं चेद्ब्रह्म त्वितरैः किं प्रयोजनम् । इति सर्वं समाचक्ष्व विष्णुसिद्धान्तगर्भितम्

श्रीरुद्र उवाच—

सत्यादिलक्षणैर्लक्ष्यं ब्रह्म सत्यादिलक्षणम् । न निर्विशेषं निर्धर्मं निष्क्रियं तावदिष्यते ॥
सत्यादिभिस्तु सत्यत्वधर्मवत्त्वं प्रपञ्च्यते । तादृशो ब्रह्मणो रूपं सत्यत्वादिभिरुच्यते ॥
अन्यथा तु विरोधः स्याच्छ्रुत्या स्मृत्या च युक्तिभिः । विरुन्धतोऽपरुन्धन्ति सन्तः सिद्धान्तशंसिनः ॥ ६ ॥

तावूचतुः—

अन्यथा को विरोधः स्याद्रुद्र नौ वदतां वर । सत्सात्वतागमाभ्याससिद्धान्तार्थावरोधकः ॥ ७ ॥
सत्यादिभिः स्वरूपं किं नोच्यते दूषणं च किम् । स्वरूपमात्रकथने धर्मवत्त्वं निवार्यते

श्रीरुद्र उवाच—

सत्यादिलक्षणैर्लक्ष्यं यदि स्यादितरन्नृप । तदाऽसत्त्वं प्रसज्येत न तु सत्यस्वरूपकम् ॥९॥
नीतिः सत्यादिशब्दानां सामानाधिकरण्यजा । अपेक्षिता तु सर्वेषां तदभावः प्रसज्यते
ये च सत्यादयः शब्दाः सामानाधिकरण्यतः । बोधयन्ति विशिष्टं हि सत्यादिकविशेषणैः ॥ ११ ॥
न च सत्यादयो राजन्प्रतिकूलेन वर्त्मना । एकस्य ब्रह्मणस्तावन्निर्विशेषत्वमुज्जगुः ॥
एकार्थपरता सिध्येद्व्यावृत्तीनां बहुत्वतः । न चेदसत्यव्यावृत्तिः सैव स्यादन्ययोरपि ॥
न व्यावृत्तिबहुत्वं स्यादिति चेन्नोपयुज्यते । असद्व्यावृत्तिमात्रेण द्वयोर्व्यावृत्तिरेव चेत् ॥
ब्रह्मस्वरूपसिद्धत्वादन्ययोः किं प्रयोजनम् । तत्तद्व्यावृत्त्यवच्छिन्नं स्वरूपं परमात्मनः
अतश्चैकार्थपरता त्रयाणामभिधीयते । इति चेदागतो मार्गे सविशेषप्रसङ्गतः ॥ १६ ॥
स्वरूपस्य विशेषः क इति चेदुच्यते द्विज । व्यावृत्तीनां स्वरूपस्य व्यवच्छेदकता हि या
स विशेषो हि राजेन्द्र सत्यादिभिरुदाहृतः । यथा सत्यादिभिर्ब्रह्म कर्तृत्वादिभिरप्युत ॥
तथैव बोध्यते राजन्द्विजवर्यस्वरूपतः ।

तावूचतुः—

शोधकैर्बोधकैर्वाक्यैः स्वरूपं यदि बोध्यते । पौनरुक्त्यं कथं न स्यादिति नौ संशयो महान् ॥ १९ ॥

---

१ ख. °ति चात्रो प° । २ ख. °भिरच्युतः ।

श्रीरुद्र उवाच—

कर्तृत्वादिकवाक्यैस्तु निमित्तं ब्रह्म चोच्यते । उपादानं च जगतो बोधितं नृपसत्तम ॥
यथा बोधकवाक्यैश्च प्रोक्ता कारणरूपता। तथा शोधकवाक्यैस्तु साजात्यं दोष एव च॥
वार्यते नृपशार्दूल मुने तर्कविदां वर । तेन शोधकवाक्यानां न वैयर्थ्यं भवेदिह ॥ २२ ॥
उभाभ्यां ब्रह्मणो रूपं निर्दोषमवसीयते । मा भूयादिह शङ्का वां यथा नो ब्रह्मनिश्चयः
न तु बोधकवाक्यैस्तु वैलक्षण्यं निरूप्यते । चेतनाचेतनाभ्यां च शोधकैः किं भवेदिह ॥
तत्र साजात्यदोषो हि कथं प्राप्नोति वार्यते । श्रूयतामिति चेत्सत्यं हिताद्वां प्रवदाम्यहम्
प्रकृतेः पुरुषाद्वाऽपि भिन्नेऽपि परमात्मनि । विकारोऽपि हि साजात्यादायाति किल केवले ॥ २६ ॥
सत्यं ज्ञानमनन्तं च पदानि क्रमतो नृप । ब्रह्माऽऽहुर्धारणामूलं विमुक्तिर्येन जायते ॥
तत्र सत्यं पदं तावदाह ब्रह्म सनातनम् । निरुपाधिकसत्सत्तायोगि तेन निवारितम् ॥
अचेतनं विकाराणामास्पदं चेतनं पुनः । तत्संसृष्टं महाभागौ ततो ज्ञानपदं च यत् ॥
असंकुचितबोधैकाकारमाह परात्परम् । पूर्वं संकुचितज्ञाना मुक्तास्तेन निवारिताः ॥
आहानन्तपदं ब्रह्म परिच्छेदविवर्जितम् । तेन नित्यास्तु व्यावृत्ताः पूर्वकोटिविलक्षणाः॥
स्वरूपेण गुणैश्चैवाऽऽनन्त्यमस्ति हरौ यतः । नित्यमुक्तनिबद्धेषु नैवंभूतोऽस्ति कश्चन ॥
तस्मात्सत्यादिकपदैर्गुणभूतविशेषणैः । विजिज्ञास्यं परं ब्रह्म सर्ववस्तुविलक्षणम् ॥३३॥

तावूचतुः—

कथं निमित्तता चास्य तथोपादानता कथम् । ब्रह्मणो वद विश्वेश गङ्गाधर महेश्वर ॥

श्रीरुद्र उवाच—

चिदचित्प्रकृतिर्द्वेधा विशेषणतया हरौ । तद्विशिष्टं परं ब्रह्म श्रुतिराह महामते ॥ ३५ ॥
सदेवेदं पूर्वमासीदेकमेवाद्वितीयकम् । तदैक्षतासृजल्लोकान्सूक्ष्मभूतान्स्वसंस्थितान् ॥३६॥
असृजन्नामरूपाभ्यां तत्र तत्रान्वगात्स्वयम् । तत्तन्नामाभवद्राजन्नाकारान्तरसंग्रहात् ॥
विशिष्ट एवभवति प्रकारान्तरमाश्रितम् । स्थूलावस्थौ चिदचित्तौ प्रकारान्तरसंस्थितौ॥
तत्तन्नियमनार्हत्वमुपादानं च कीर्तितम् । यं विशन्तीति वाक्येन प्राग्विलीनमिदं जगत्
स्थूलाकारपरित्यागो लयो नाम निरूप्यते । स्थूलाकारानुकरणं प्रभवो नाम गौतम ॥
न च द्रव्यान्तरोत्पत्तिराकारान्तरमेव च । वाचारम्भणवाक्येननिर्णीतं परमर्षिभिः॥४१॥
उपादायेदमखिलं निर्विकारतया स्वयम् । नामरूपविभेदेन परिणामो व्यवस्थितः ॥
तद्भागित्वमुपादानं सत्यसंकल्पता हरेः । निमित्तत्वं तु निर्णीतं चेतसा ह्यवलोक्यताम्
निमित्तत्वं चिदचितोर्विशेषेण विभूतयोः । स्थूलाकारप्रघटना योग्यत्वं ब्रह्मणः स्मृतम्॥
यतः संकल्परूपेऽयं सृष्टिरुक्ता द्विजोत्तम । अतो निमित्तं भगवान्संकल्पश्च निरामयः ॥
येन पूर्वं जगदिदं निपीतं प्रविलापितम् ।उत्ससर्ज तमेवैकं संकल्पं लयकारणम्॥ ४६ ॥

---

१ ख. °स्तपूर्वेषा सृ° ।

पुनः संकल्पयन्स्वस्मिन्विलीनं बहिरुत्सृजन् । एकोऽहं नामरूपेण बहु स्यामित्यचिन्तयत् ॥ ४७ ॥
संकल्पेनासृजत्तस्मान्निमित्तं स्वयमेव च । स्वयमेवाभवत्पश्चात्प्रविश्यान्तः प्रकाशयन् ॥
उभयत्वं समाम्नातं सर्वशक्तेः परात्मनः । सांकर्यं जायते नैव न च दोषस्य संभवः ॥
न चास्य ज्ञानसंकोचः प्रकृतिं पर्यणामयत् । सूते सा महदादिभ्यः प्राकृताण्डं नरोत्तम
स चाशेषस्य जगतः प्राकृतस्य प्रयोजकः । महापुरुषनामाऽसौ सहस्राननशीर्षवान् ॥
सहस्रकरबाह्वङ्घ्रिः संचिन्त्योऽस्ति मनीषिभिः । तस्य नाभिसरोजातं पङ्कजं तु हिरण्मयम् ॥ ५२ ॥
तस्मादभूच्चतुर्वक्त्रो ब्रह्मा लोकपितामहः । समस्तजीवजातानां निलयः पुष्करासनः ॥
तस्मादहं तामसानां जनकः समजायत । तस्य प्रसादात्त्रिजगत्संहरामि हराह्वयः ॥५४॥
मनुः समभवत्तस्माद्यस्तु स्वायंभुवाह्वयः । मनुष्याणामशेषेण धर्मानाह सनातनान् ॥
दक्षादयस्तथा चान्ये ये प्रजापतयोऽभवन् । तेभ्यो मरीचिरभवद्यः सृष्ट्याद्यो विलोक्यते
मरीचेः कश्यपो जातस्तस्मात्संस्थिरजङ्गमाः । अदितेर्द्वादशाऽऽदित्या दितेर्दैत्याः प्रकीर्तिताः ॥ ५७ ॥
दनोस्तु दनुजा जाता दानवा ये प्रकीर्तिताः । कद्रोः समभवन्सर्पा विनतायाः पतत्रिणः
तथा चैकशफा जाता द्विशफाश्च परंतप । यादांसि सरितश्चैव पर्वताः सागरास्तथा ॥
ऋषयः पितरो देवा मनवः सिद्धचारणाः । गन्धर्वाप्सरसो यक्षा रक्षोभूतगणाश्च ये ॥
कलाः सर्वे भगवतो विष्णोरतुलतेजसः । शरीरभूता विज्ञेयाः पुरुषस्य महात्मनः ॥
आत्मा तु भगवान्राजन्यः प्रविश्य प्रवृत्तिदः । उपास्यः स्थूलरूपेऽस्मिंस्तदभेदधिया मुने ॥ ६२ ॥
अस्य लोकस्य रक्षार्थं धत्ते विष्णुर्महाकृतीः । यः समाराध्य पुरुषो याति नैर्गुण्यतामयम् ॥६३॥
प्रकृतेर्गुणविस्तारः सप्तावरणवेष्टितः । निर्गुणः पुरुषोऽन्योऽस्माद्दिव्याप्राकृतविग्रहः ॥
असंख्यातोऽपरिच्छिन्नो लोकातीतो[3] ह्यकर्मकः । नित्यो हेयगुणातीतः पञ्चोपनिषदात्मकः ॥ ६५ ॥
असंख्यातोऽपरिच्छिन्नो मुक्तिस्थानमितीरितम् । प्राकृताप्राकृतौ ह्येतौ बद्धमुक्तनिकेतनौ
अनयोर्लोकयो राजन्नाधारो भगवान्हरिः । स्थूलसूक्ष्मस्वरूपेण सर्वं यत्रावतिष्ठते ॥
एतद्विशेषणाविष्टं ब्रह्म वेदान्तसंमितम् । भासकं सर्वकार्यस्य धारकं मुनिसत्तम ॥ ६८॥
येनेदं च यतश्चेदं यत्रेदं च यदात्मकम् । विश्वमेतन्महाभागौ प्राप्यं भोग्यं तदेव हि ॥
गन्तव्यमथनं साक्षाद्देवो नः प्रणतेः पदम् । वयमंशकलाः सर्वे तदायत्तप्रवृत्तयः ॥ ७० ॥
स च स्वामी वयं दासा दासाः स्वामी स्वरूपतः । तस्यैवाहं स चास्माकमनन्यार्हः परस्परम् ॥ ७१ ॥
चिदचिद्भि सजातीयं साक्षादात्मतनौ स्थितम् । परमैकान्तिभिर्ध्येयंविशिष्टं ब्रह्म केवलम् ॥ ७२ ॥
ईषणात्रयनिर्मुक्ता वासुदेवकृतायनाः । उक्तानुसंधानपरास्तस्मिन्नेव विशन्ति ते ॥७३॥

१ ख. °न्तः शरीरयन्° । २ ख. °फाः पशुजातयः° । ३ ख. °तो ह्यलौकिकः° । ४ ख. °चिद्विश°।

हेयं मायिकमाज्ञाय हित्वा तन्मननोचितम् । आत्मानं तदसंश्लिष्टं ब्रह्मभावमुपागतम् ॥
आत्मसर्वस्वरूपेण प्रेमातिशययोगतः । परमात्मानमात्मस्थं चिन्तयेत्तदवाप्तये ॥ ७५ ॥
इति वेदान्तसिद्धान्त उपदिष्टो मयाऽनघौ । निवर्तेथामतोऽन्यस्मात्सिद्धार्थौ द्वावपि प्रभू ॥७६॥
ग्राहितो यो मया पूर्वं मोहनाय सुर द्विषाम् । विवर्तारम्भको वादो वादोऽन्यः कापिलस्तु यः ॥ ७७ ॥
तं विहाय महात्मानाविदं ज्ञानं मयोदितम् । स्वी कुर्यातं विमोक्षाय नात्र कार्या विचारणा ॥ ७८ ॥

तावूचतुः—

भगवन्वासुदेवस्य शरीरं समुदाहृतम् । सर्वं यदि ह वै किंचित्स्थूलसूक्ष्मस्वरूपतः॥७९॥
तद्भावनाशक्तिमतां विभूतिं वद शंकर । केषु केषु च भावेषु चिन्त्योऽयं भगवान्हरिः॥

श्रीरुद्र उवाच—

विष्णुस्त्रिविक्रमाख्यो यो ज्योतिषां रविरंशुमान् । मरीचिश्चन्द्रमा नागो वामदेवो महामुनिः ॥ ८१ ॥
शंकरः पावकः स्वच्छः सामवेदो बृहस्पति । स्कन्दः कुबेरो मेरुश्च कामधेनुर्द्विजोत्तमः
अकारः प्रणवो मन्त्ररत्नमष्टाक्षरो द्वयम् । गायत्री सागरो गङ्गा विरजा सरयूस्तथा ॥
यमुना चाथ कावेरी नारदः कपिलो मुनिः । उच्चैःश्रवा हयो नाग ऐरावत इति स्मृतः
गरुडो नित्यमुक्ताश्च प्रह्लादो ध्रुव एव च । वरुणश्चार्यमा चैव कामः संकर्षणस्तथा ॥
कालो मृगेन्द्रः पवनो रामः परशुधारकः । अवताराश्च मत्स्याद्याः पुण्या भक्तास्तु सर्वशः ॥ ८६ ॥
गोवर्धनश्चित्रकूटो नरनारायणाश्रमः । वेङ्कटाद्रिः पुष्करश्च श्रीमद्वृन्दावनं तथा ॥
सूकराख्यं महाक्षेत्रं नैमिषं च कुशस्थली । काश्ययोध्यापुरी वत्स नीलपर्वत एव च ॥
स्मृतिर्मेधा धृतिः क्षान्तिर्व्यासो विष्णुजनाश्रयः । स्वाचारवाञ्जनो यज्ञो राजाऽर्वा मरुतः सुतः ॥ ८९ ॥
वसन्तो मार्गशीर्षश्च हरेरेता विभूतयः । असंख्याता मया राजन्द्विज वक्तुं न शक्यते ॥
प्रधानं वस्तु चैवोक्तं नान्तो वर्षशतैरपि । प्रातः प्रातर्विभूतीनां स्मरणं पापनाशनम् ॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छेतं विष्णुतेजःसमुद्भवम् ॥ ९२ ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे रुद्रगीतायां नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्टयङ्काः— ॥ ४५८१ ॥

---

अथ चतुर्थपादे दशमोऽध्यायः ।

---

राजोवाच—

भगवन्देवदेवेश यदुक्तं भवताऽऽवयोः । ज्ञानं ब्रह्मस्वरूपस्य वाक्यैः शोधकबोधकैः ॥१॥
ब्रह्माद्वितीयं वैशिष्ट्यं कथं स्याद्वद विस्तरात् । कुतो वै दृश्यते द्वैतमद्वये परमात्मनि ॥

श्रीरुद्र उवाच—

यथा पयसि राजेन्द्र घृतमस्ति न दृश्यते । तद्विशिष्टं पयो यद्वदेकमेवावलोक्यते ॥ ३ ॥
यथा शब्दमयी वाचा केवलैवावलोक्यते । बीजमङ्कुरगर्भं वै वह्निगर्भा शमी यथा॥ ४ ॥
विश्वगर्भा यथा बुद्धिः पुण्यगर्भा क्रिया यथा । चिदचिद्गर्भमेवैकं विशिष्टं ब्रह्म पार्थिव
कार्यकारणभेदेन त्ववस्थाद्वयमुच्यते । कारणे सूक्ष्मरूपेण द्वैतेन परिबृंहितम् ॥ ६ ॥
स्थूलरूपेण कार्ये तु द्वैतेनाऽऽसादितं हि तत् । न भिद्यते परस्तस्मात्परं तस्मान्न विद्यते
गुणिनस्तु गुणो यद्वद्गुणादेव गुणी यथा । एवं विशिष्टाद्वैतं हि श्रुतिस्मृत्युदितं नृप ॥

राजोवाच—

कथं त्वाधारभूतेऽस्मिन्द्वयोर्भेदः स्वरूपतः । औपाधिकः कथं भेदो वद मे वदतां वर ॥

श्रीरुद्र उवाच—

ज्ञानैकरूपो जीवोऽयमनेकोऽणुः प्रकीर्तितः । व्याप्तो नित्योऽक्षरोऽग्राह्यो ग्रहीता स्वान्य-
योरपि ॥ १० ॥
सच्चिदानन्दरूपोऽसौ पारतन्त्र्याश्रितो यतः । परिणामान्तराप्राप्तो ज्ञानव्याप्तो निरामयः
नित्यो बद्धश्च मुक्तश्च त्रिविधोऽयं विशांपते । नित्यो मायामसंप्राप्तः कादाचित्को
विमोचितः ॥ १२ ॥
अनयोरेकरूपत्वं स्वरूपाद्गुणतोऽपि वा । समानालोकभोगेश प्रसादोऽपि[3] महामते॥१३॥
एतावानेव मुक्तस्य भेदः पूर्वं न तादृशः । औपाधिकस्तु बद्धोऽयं संसारी जीव उच्यते
देवी माया हरेर्जातु[4] तया बद्धो निजैर्गुणैः । स्वरूपात्प्रच्युतो बुद्ध्या देहोऽहमिति
बोधतः ॥ १५ ॥
ज्ञानप्रकाशसंकोचं संप्राप्तः प्राकृतो भवन् । देहादिकृतनानात्वो नानायोनिषु जायते ॥
ज्ञानैकाकारता नष्टा स्वातन्त्र्यं मन्यतेऽबुधः । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवा-
न्सुखी ॥ १७ ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्य इत्यज्ञान-
विमोहिताः ॥ १८ ॥
भवन्ति जीवा राजेन्द्र मानोद्धतमनोरथाः । स्वत ऐश्वर्यविभवैरन्धिकान्मनुजान्सुरान्॥
सेवन्ते भगवद्बुद्ध्या लोभेनाऽऽक्रान्तचेतसः । तद्वेषधारिणो दासास्तदाज्ञापरिपालकाः
भुक्त्वा भोगान्पतन्त्यन्धे नरके घोरसंकटे । तामसीं योनिमासाद्य नाऽऽवर्तन्ते ह्यधोगताः
एष[5] कर्मजितो लोकः क्षीयते च पुनः पुनः । तथा[6] च क्षीयते पुत्र पाके पुण्यचितोऽपि हि
यथाऽहिममयं वह्निमजानन्तो व्रजन्ति हि । पश्चात्तापेन पीड्यन्ते दारुणेनान्तरात्मनि ॥
एवं दृष्टफलं कर्म कृत्वा ज्ञानविवर्जितम् । परिणामे महद्दुःखं प्राप्नुवन्ति न संशयः ॥
स्वकार्यफलमुद्दिश्य स्वतन्त्रफलदायकम् । नारायणसमं मत्वा त्वधिकं वा सुरासुरम् ॥
यजन्ति श्रद्धया युक्ता मूलज्ञानविवर्जिताः । अन्धं तमो विशन्त्येते संभूतीनां समर्चनात्
भवन्ति नानामतयः स्वरूपज्ञानवर्जिताः । गतयोऽपि तदीयाः स्युस्त्रिविधा मतयो जनाः

१ ख. °यी वीणा के° । २ ख. °णादपि गु° । ३ ख. °सादाश्च म° । ४ ख. °रेर्या तु° । ५ ख. एवं क° । ६ ख. तथैव क्षी° ।

सत्त्वं रजस्तम इति त्रिविधाः प्रकृतेर्गुणाः । तैरेतत्त्रिविधं जातं जगदेतच्चराचरम् ॥२८॥
त्रिधा लोकास्त्रिधा भोगास्त्रिविधाऽभिरुचिर्नृणाम् । त्रिविधं कर्म जीवानां ज्ञानं च त्रिविधं नृप ॥ २९ ॥
त्रिविधानि पुराणानि त्रिविधाः स्मृतयस्तथा । वासस्तु त्रिविधो ज्ञेयस्त्रिविधाऽपि रुचिर्नृणाम् ॥ ३० ॥
ध्यानं तु त्रिविधं राजन्सुखं च त्रिविधं तथा । लोकोऽपि त्रिविधो ज्ञेयस्तिस्रोऽवस्थाः प्रकीर्तिताः ॥ ३१ ॥
वृत्तिस्तु त्रिविधा ज्ञेया तिस्रोऽवस्थाः प्रकीर्तिताः । आ ब्रह्मस्तम्बपर्यन्तं सर्वं हि त्रिगुणात्मकम् ॥ ३२ ॥
प्राकृतैस्तु गुणैर्बद्धो निर्गुणः पुरुषोऽप्ययम् । आकल्पं मुच्यते नैव विना तु शरणागतिम् ॥ ३३ ॥
एवमौपाधिको जीवो नानात्वं प्रतिपद्यते । एकभावं समाप्नोति यदा भवति निर्गुणः ॥
त्रिधा भिन्नश्चिदंशोऽयं स्वाधारे परमात्मनि । प्रकारतां समापन्नस्तस्मिन्नेव तु तिष्ठति ॥
अचिदंशोऽपि राजेन्द्र भगवत्येव तिष्ठति । कदाचिच्चेतनं धृत्वा बहिरायाति भूपते॥३६॥
कदाचित्कारणे विष्णौ सद्रूपेणैव तिष्ठति । लयोद्गमपिधानात्तु प्रागभावो न विद्यते ॥
अव्यक्तत्वेन संस्थानं लयो नाम महामते । उद्गमः स्थूलभावो हि व्यक्तमित्यभिधीयते ॥
स्थूलस्य नैकरूपत्वं मिथ्यात्वमुपवर्तते । भ्रान्त्या विवर्तवादोऽत्र विमूढाः प्रवदन्ति हि ॥
उभयोः परतन्त्रत्वादाधेयत्वान्महीपते । परात्मा भिद्यते नूनं स्वतन्त्रो धारको यतः ॥
चिदचिद्भ्यां विभिद्येते पुरुषप्रकृती नृप । भोक्तृभोग्यतया तात शरीरात्मतयाऽथ वा ॥
चिदचित्परमात्मानो विभिन्ना लक्षणैः स्वकैः । अभिन्ना नृपशार्दूल विशेषणतया हरौ ॥

राजोवाच—

कथं जीवोऽणुरूपोऽयं शरीरे सर्वगः प्रभो । कदाऽस्य मायायोगोऽभूत्कदा मुक्तिर्भविष्यति ॥ ४३ ॥

श्रीरुद्र उवाच—

स्वरूपतोऽणुभूतोऽपि प्रकाशेन शरीरगः । एकदेशे स्थितो वेत्ति हरिचन्दनबिन्दुवत् ॥
प्रभया भास्करो यद्वद्ब्रह्माण्डं व्याप्य तिष्ठति । एकदेशस्थितो दीपः कृत्स्नगेहं प्रकाशते ॥
कदाऽस्य मायायोगोऽयमिति प्रश्नो न सौख्यदः । अनादिकालतो जीवो मायया परिवेष्टितः ॥ ४६ ॥
अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः । त्रिविधोऽनुग्रहो विष्णोः कर्म ज्ञानमुपासनम् ॥
मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः । हित्वा संकुचितावस्थां भेदं प्रकृतिसंभवम् ॥ ४८ ॥
संप्राप्तात्मस्वरूपोऽयं प्रेमातिशययोगतः । प्राप्नोति परमात्मानं यतो नाऽऽवर्तते पुनः ॥
मुनयो गौतमो राजा श्रुत्वेदं रुद्रभाषितम् । सर्वतो मतिमाकृष्य भगवत्येवमादधौ ॥५०॥
निर्विद्य पुत्रदारेभ्यो राजा कोशबलेषु च । नारायणपदाम्भोजेऽनवच्छिन्नमनोगतिम् ॥

अखण्डतैलधारावद्दधार गतसाध्वसः । अन्तर्दधे महादेवः पार्षदप्रवरैः सह ॥ ५२ ॥
सिद्धान्तं न्यायनिर्णीतं नानातर्कगणावृतम् । हित्वा भागवतं धर्ममास्थितो गौतमो मुनिः ॥ ५३ ॥
अम्बरीषादिमुख्येभ्यस्तत्त्वमेतद्विधास्यति । परमैकान्तिकं धर्मं दुर्लभं मुनिसत्तम ॥ ५४ ॥
आस्थितोऽहं हरेर्ज्ञात्वा हरिसंतोषकारणम् । अस्यां च मन्दरद्रोण्यां वैष्णवं वेषमुद्वहन्॥
भवन्तो मुनयः सर्वे श्रीमन्नारायणोदिते । सिद्धान्ते कृतसिद्धान्ताः प्रविशन्तु विमुक्तिदे
भवद्भिः सह संवादो मया योऽयं प्रकीर्तितः । संहितेयं समाख्याता भविष्यति हिताय वै
सिद्धान्ते मामके विप्रा रहस्यं प्रवदामि वः । नाभक्ताय प्रदातव्यं नास्तिकाय शठाय च
विष्णुभक्ताय शान्ताय दातव्यं मुनिसत्तमाः । सिध्यन्ति हरिसंबन्धात्तीर्थानि नियमा यमाः ॥ ५९ ॥
कर्माणि दानयज्ञाश्च स्वाध्यायो योग एव च । हरिं विना न सिध्यन्ति काम्यान्यपि मुनीश्वराः ॥ ६० ॥
तस्यैव शरणं भूत्वा हित्वाऽन्यत्साधनान्तरम् । भावयेच्चेतसा तस्य संबन्धं परमात्मनः ॥
प्रपद्ये शरणं श्रीमन्नारायणपदाब्जयोः । इत्येकान्तित्वमालम्ब्य चेतसा भावयेन्मुहुः ॥
लोकयात्रां च नः स्वामी करिष्यत्येव सर्वथा । इति विश्वासमालम्ब्य भरन्यासं प्रवर्तयेत् ॥ ६३ ॥
साष्टाङ्गं प्रणतौ सर्वकर्माणि परिभावयेत् । प्रपद्ये शरणं श्रीमन्नारायणपदाब्जयोः॥६४॥
उच्चारणमिदं साङ्गं स्वाध्यायमनुभावयेत् । श्रीमत्प्रसादसेवां च भावयेत्सर्वभोजनम् ॥
सर्वतीर्थाभिगमनं पादतीर्थाभिषेचनम् । आचार्यसंनिधिं तावद्भावयेदमृताम्बुधिम् ॥
संसारतापशान्त्यर्थं महाविश्वासपूर्वकम् । प्रतिकूलजनावासं दावाग्निमिव संत्यजेत् ॥
इत्येवं गुह्यसंदेशः कथितो मुनिसत्तमाः । एतदर्थमिहाऽऽगत्य धृतं मौनव्रतं मया॥६८॥
कृष्णात्रिगोत्रप्रभवो द्विजः कश्चिदतन्द्रितः । ग्राहयिष्यति शिष्येभ्यः संहितां च महीतले ॥ ६९ ॥
कृष्णात्रेयीति विख्याता भविता ब्रह्मसंहिता । बृहत्पूर्वा महाभागा यस्यां धर्मः सनातनः ॥ ७० ॥
य इमां संहितां पुण्यां सर्ववेदार्थगुम्फिताम् । श्रद्धया परयोपेता भविष्यन्ति समाहिताः
तेषामैकान्तिकी भक्तिरचिरात्संभविष्यति । श्रोष्यन्ति पुण्यकालेषु तेषां नैवास्ति पातकम् ॥ ७२ ॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् । तत्फलं समवाप्नोति श्रुत्वेमां ब्रह्मसंहिताम् ॥
अधीत्य मुनयः सर्वे प्रणिपत्य पितामहम् । गृहीत्वा वैष्णवीं दीक्षां प्रजग्मुः सर्वतोदिशम् ॥ ७४ ॥
हारीताद्याश्च मुनयः श्रुत्वेदं ब्रह्मभाषितम् । प्रवर्तयामासुरिमे स्मृतीरेकान्तिनां प्रियाः ॥

यस्मिन्नित्यसदेकधाम्नि भगवत्याम्नायगीतोदये
स्थूलं सूक्ष्ममिदं जगच्च सकलं सन्नामकं चाभवत् ।

यस्मादेव पुनः प्ररोहति जगद्बीजाद्यथैवाङ्कुर-
स्तस्मै श्रीपुरुषोत्तमाय हरये नित्यं नमः कुर्महे ॥ ७६ ॥
यो विष्णुर्भजतामभीष्टगतिदो गीतोऽपि नीतो भव-
त्यग्रे व्यग्रकरः करीन्द्रकरुणारावे विराजं विना ।
आयात्युन्मदमानराजमथने यः सापराधे जने
नत्यैवाभिमुखः प्रयच्छतु रतिं लक्ष्मीधरावल्लभः ॥ ७७ ॥

इति श्रीबृहद्ब्रह्मसंहितायां चतुर्थपादे रुद्रगीतायां तत्त्वनिश्चयो नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥४६५८॥

---

इति चतुर्थः पादः ।

---

नारदपञ्चरात्रान्तर्गता बृहद्ब्रह्मसंहिता समाप्ता ।

---